श्रीजगद्गुरुमुरुघराजेन्द्रविद्यापीठग्रन्थमालायाः द्वितीयं पुष्पम्

# भगवद्गीतावीरशैवभाष्यम्

(भाष्यकर्ता)
विद्वान् डा. टि. जि. सिद्धप्पाराध्यः, एम्.ए. पि.एच्.डि.
संस्कृताध्यापकः
मानसगङ्गोत्री, मैसूरुविश्वविद्यानिलयः, मैसूरु.



प्रकाशकाः
श्रीबृहन्मठमहासंस्थानाध्यक्षाः
श्रीजगद्गुरुमल्लिकार्जुनमुरुघराजेन्द्रमहास्वामिनः चित्रदुर्गः

श्रीजगद्गुरुमुरुघराजेन्द्रविद्यापीठग्रन्थमालायाः द्वितीयं पुष्पम्

# भगवद्गीतावीरशैवभाष्यम्

(भाष्यकर्ता)

विद्वान् डा. टि. जि. सिद्धप्पाराध्यः, एम्.ए. पि.एच्.डि.

संस्कृताध्यापकः

मानसगङ्गोत्री, मैसूरुविश्वविद्यानिलयः, मैसूरु.

प्रकाशकाः

श्रीबृहन्मठमहासंस्थानाध्यक्षाः

श्रीजगद्गुरुमल्लिकार्जुनमुरुघराजेन्द्रमहास्वामिनः चित्रदुर्गः

श्रीमच्चिन्मूलाद्रिबृहन्मठमहापीठस्य द्वितीयाधिपतीनां श्रीमन्निरञ्जनजगद्गुरु इम्मडिश्रीगुरुसिद्धमुरुघराजेन्द्रमहास्वामिनां दिव्यसमाधिः आनन्दपुरे विराजते ।



मुरुघेशप्रसादेन शून्यसिंहासनश्रियम् । संप्राप्य यस्तु विख्यातो गुरुसिद्धमहाप्रभुः ॥
तस्मै समर्पितं भक्त्या गीताभाष्यमिदं मया । मत्पितुः परितोषाय स्वीकरोतु जगद्गुरुः ॥

श्रीः

श्रीगुरुमुरुघेशाय नमः



इदानीन्तनाः श्रीमच्चिन्मूलाद्रिबृहन्मठमहापीठाध्यक्षवर्याः श्रीमन्निरञ्जन-
महाराजजगद्गुरुश्रीमल्लिकार्जुनमुरुघराजेन्द्रमहास्वामिनः

# विषयानुक्रमणिका



## FOREWORD

G. R. JOSYER, M.A., F.R.E.S.
Founder
International Academy of
Sanskrit Research

Mysore
5-11-65.

Imbedded in that greatest of world epics, Mahabharata, there is an intellectual gem known as the "Bhagavad Geeta", which shines like an uncut Kohinoor, gleaming with iridiscent lustre of unimaginable colours. A compact literary gem of 700 Sanskrit couplets, it presents, with telescopic range and microscopic perfection, the fundamentals about God's Creation and Man's role in the scheme of the Universe. God, incarnate as Krishna, proclaims the truths of the Universe, and Man, and their relation to the Creator. No other consecrated book in the world can equal it as a compendium of Divine exposition. It has served as a source book for the great religious Saviours who have risen from time to time in India during thousands of years, and sought to teach man how to live and how to die. Most learned men, most inspired men, Shankara, Ramanuja, Madhwa, and others, have studied it with meticulous care, and written Bhasyas or Commentaries clarifying its contents, and evolved their philosophical teachings in the light of them.

Is man just a biological eruption, born just as moths and frogs are born out of rain-drops, to a brief life of suffering and extinction, or is the

Universe a lofty conception of an Almighty God, and man a mechanical toy made by Him for His pleasure, and man's duty to realise his origin and so live as to attain identity with God?

All religions, Hinduism, Buddhism, Jainism, Christianity, Islam have found answers to the above according to their lights, and propounded them for their followers.

Veerashaivism is Hinduism as followed by a notable fraction of the population of this sub-continent. Its founders, the Panchacharyas, and propagators Sri Allama and subsequent teachers have propounded that God is the Creator and Lord of the Universe, that He, as Paramatma, has sent out Amshas of Himself as Jeevatmas or sparks to be born as men and fulfil their destiny in the world, that man should realise that he is God's amsha but not God, that he should not forget himself in worldly enjoyment and worldly calamities but go through them in a spirit of aloofness, and so mould his life as to attain ultimately identity with God. And, as unaided, he may not succeed in that hard task, he should place himself whole-heartedly in the hands cf religious adepts or Jangamas.

Though the Veerashaiva conception of God, the Universe, and Man, is based on the Geeta, so far there has been no lucid Veerashaiva Commentary on the Bhagavadgeeta. Dr. T. G. Siddapparadhya of the Mysore University, being an adept in Veerashaiva tenets and devoted scholar in Sanskrit, is presenting to the world in the following pages Geetha Bhashya in Sanskrit, and brought out the conformity of

Veerashyva tenets to the principles enunciated in the Geeta.

The Universe is one, and Vishnu and Shiva are not two Gods fighting for its mastery, but the one Supreme God Himself as seen from different angles of the observers. Shiva of Veerashaivism and Vishnu of the Bhagavad Geeta are the one Supreme God with two faces; and therefore the applicability of the Bhagavad Geeta to Veerashaivism is true to nature. Dr. Siddapparadhya's two earlier works, "Sreekara Bhasyanuvada", and "Shvetashvataropanishad Bhashya", like Jamuna and Brahmaputra, show his scholarship in the religion of Veerashaivism, and his production of this admirable work, "Bhagavad Geeta–Bhashya" is like the confluence of the Sacred Ganges with Jamuna and Brahmaputra.

The three works are each of high merit, and Dr. Siddapparadhya's scholoarship, diligence, and mental calibre in ptoducing them deserves high praise and admiration.

Dr. Siddapparadhya is inspired in these intellectual endeavours by the enlightened religious Head of Sri Brihanmatha of Chitradurga, H. H. Sri Jagadguru Mallikarjuna Murugharajendra Mahaswamigal under whose spiritual auspices a series of religious publications of high quality are being presented to the world of Sanskrit and Kannada literary. Holiness's gracious and enlightened interest in this behalf deserves all praise of a grateful world.

Mysore — G. R. Josyer.
6–11–1965.

# भूमिका

संस्कृतवाङ्मये भगवद्गीतायाः स्थानं कीदृशमिति सर्वेऽपि विद्वांसः सम्यक् जानन्त्येव । अतस्तदर्थं नाधिकं निरूपणीयमस्ति । परन्तु तदपेक्षयापि अयमेव सत्यांशः स्यादित्येव मम प्रतिभाति यत् न केवलं संस्कृतवाङ्मये, परन्तु विश्ववाङ्मय एव एतद्भगवद्गीतासदृशः अन्यः कश्चन ग्रन्थस्सर्वथा दुर्लभ एवेति । मानवकुलस्यैव समुद्धरणं हि एतदुक्तधर्मेणैव भवितुमर्हति । यद्यपि सन्ति बहवो धार्मिकग्रन्थाः मनुष्याणां सद्गतिप्राप्त्युपायप्रतिपादनपराः । सन्ति च तत्तदनुगुणानि बहूनि मतानि हिन्दू, बौद्ध, जैन, क्रैस्त, इस्लाम् प्रभृतीनि । परन्तु इदमत्र सम्यगवधेयं सर्वैरपि निर्मत्सरैः । एतानि सर्वाण्यपि मतानि मानवानां संसारबन्धात् मोक्षप्राप्त्यर्थं तत्तदुपायान उपदिशन्त्येव । तथपि हिन्दूमतमन्तरा इतरमतेषु मानवानां सर्वेषामपि अविशेषेण एक एव मोक्षमार्ग उपदिश्यते । नास्ति तत्र धर्माचरणे मोक्षमार्गानुष्ठाने च परस्परं भेदः । अत एव तानि मतानि हिन्दूमतापेक्षया उत्कृष्टानीत्यपि तैः विकथ्यते । " मानवानां सर्वेषामपि परमात्मपुत्रत्वात् कथं तेषां परस्परवैलक्षण्यं स्यात् ? कथं वा तन्मूलतया धर्मभेदोऽपि स्यात् ? " इति च ते वदन्ति ॥

परन्तु इदमत्र निर्मत्सरैर्विमर्शनीयम् । मानवाः सर्वेऽपि यद्यपि परमात्मपुत्रभूता एव । गीता तु एतदप्यतीत्य ' ममैवांशो जीवलोके जीवभूतः सनातनः ' इति जीवात्मनां परमात्मांशत्वमेव साधारण्येन वदति । एवं जीवानां परमात्मांशत्वे परमात्मपुत्रत्वे वा समाने सत्यपि किं तावता सर्वेऽपि मनुष्या एकरूपाः :एकस्वभावाः, एकसंस्कारवन्तः, एकबुद्धिमन्तः, एकमनस्काः, एकविधशक्तियुक्ता वा दृष्यन्ते ? सर्वेऽपि नराः परस्परं रूपेण, स्वभावेन, संस्कारेण, बुध्या, मनसा, शक्त्या च अत्यन्तविलक्षणा एव दृश्यन्ते । सर्वेषां परमात्मांशत्वे परमात्मपुत्रत्वे च समाने सत्यपि कथमेवं

परस्परमत्यन्तवैलक्षण्यं समागतमित्यत्र सर्वैरपि मतैः समाधानं वक्तव्यमेव ! तत्तत्पूर्वकर्मानुरोधेनैव जन्मनः प्राप्त्या तादृशपूर्वकर्मानुरोधेनैव रूपेण, तादृश्या बुध्या, तादृशेनैव संस्कारेण वा मानवास्सर्वे परस्परं भिद्यन्ते इत्येव सर्वैरप्यवश्यमङ्गीकरणीयम् । अथवा शून्यवादो वा नास्तिकवादो वा समाश्रयणीयः स्यात् ॥

अतः पूर्वकर्मकृतमेव इदं परस्परवैलक्षण्यमागतमिति अवशाद्वक्तव्यमेव । एवञ्च सर्वेषां परमात्मांशत्वेऽपि परमात्मपुत्रत्वेऽपि वा तेन प्रकृते किमागतम् ? वस्तुदृष्ट्या तस्य सत्यत्वेऽपि विद्यमान (Practical) दृष्ट्या तत् न कार्योपयोगि भवति । वस्तुस्थित्या ऐश्वर्यपूर्णोऽपि मनुष्यः व्याध्यादिग्रस्तश्चेत् तदैश्वर्यं भोक्तुं अनुभवितुं च न शक्नोत्येव । तच्चैश्वर्यं रुग्णस्य न कार्योपयोगि । अतः शतशो घोषणेऽपि, कण्ठशोषणेऽपि जीवानां परिदृश्यमानं यत्किञ्चिद्धेतुकं वैलक्ष्ण्यं न केनापि बुद्धिमता अपलपितुं शक्यम् ॥

एवं जीवास्सर्वेऽपि इच्छाज्ञानक्रियाशक्तिषु परस्परं भिन्ना वर्तन्त इति सर्वे प्रत्यक्षत एव अनुभवन्ति । तथा विलक्षणज्ञानशक्तिसंस्कारवतां जीवानां सर्वेषामपि अविशेषेण एक एव उपायो मुक्तिहेतुः कथं नाम भवेत् । एवं मानवानां मिथो भिन्नत्वेऽपि तेषु न कोऽपि मोक्षरूपनित्यसुखप्राप्तये अयोग्यः परिगण्येत । " अयोग्यः पुरुषो नास्ति योजकस्तत्र दुर्लभः " इत्यनुभविनो वदन्ति । एवं जीवानां परस्परभेद इव परमात्मना च भेदे सत्यपि तत्सान्निध्यं, ताद्रूप्यं, तत्सालोक्यं, तत्सायुज्यं चाधिगन्तुं सर्वेषामपि समानावकाशश्च वर्तते । रोगाणां विचित्रत्वे तदनुगुणान्यौषधान्यपि विचित्राण्येव भवेयुः । नहि एकेनैवौषधेन सर्वव्याधिनिवृत्तिर्भवितुमर्हति । अतो मानववकुलस्य सर्वस्यापि अविशेषेण एकोपायप्रतिपादनपराणि मतान्येव पूर्णानीति वक्तव्यानि । यत्र सर्वसाधारणो मार्गः प्रतिपाद्यते तदेव मतं सर्वेषामाश्रयप्रदानेन भवबीजभूतं मलरोगं परिहर्तुं शक्नुयात् । येन सर्वेषामपि मुक्तिर्भवितुमर्हति तदेव विश्वजनीनं भवेत् ॥

अतः सर्वविधमनुष्याणां विचित्रपूर्वकर्मवतां तत्तदनुगुणस्तु मार्गो बहुविधं हिन्दूमत एव प्रतिपाद्यते। अतश्च एतन्मतमेव पूर्णमतम्। जनानां परस्परं वैलक्षण्ये हेतुमन्विष्य तदनुगुणतया उपायांश्च हिन्दूमतमेवोपदिशति। यथा रोगिणां रोगान् विभज्य तत्तद्गुणेनौषधेन तेषां चिकित्सां प्रामाणिको वैद्यः कुर्यात् तथैव वर्तते हिन्दूमतमपि। अतोऽत्र विद्यमानो मार्गभेदोपदेशो वस्तुस्थित्यनुगुणतयैव कृतः, न तु रागद्वेषादिना। मानवस्वभाववैचित्र्येण उपदेशभेदादत्र साधनमार्गरूपाणां संप्रदादायानां वैविध्येऽपि परमपुरुपार्थभूतसिद्धान्तनिरूपणे एकरूपतैव विराजत इत्ययमेवात्र विशेषः। अत एवेदं कल्पवृक्ष इव सर्वमतसहिष्णुतया सर्वेषामप्यादरणीयं वर्तते॥

तत्रापि वीरशैवमतं भिन्नप्रकृतिकानां सर्वेषामपि स्वभाविकं वैविध्यं सम्यक् परिशिल्य, तान् सर्वानपि भगवदंशान् परिगण्य अंशिनि परमात्मनि तेषां सामरस्यमिहैव प्रसादरूपेण परिणते पावने शरीरे साधयितुं प्रयतते। सूत्रे मणिगणा इव सर्वे जीवाः हृदयस्थेन परमात्मना संबद्धा वर्तन्त इत्यमुमंशं स्पष्टं प्रतिपादयदिदं मतं अंशांशिनोः जीवब्रह्मणोरैक्याय प्रथमं जीवप्रकृतिपरिणामाय निर्दिष्टं संविधानं रचयति। मानवाः परस्परं प्रकृतिवैविध्येन विभिन्ना अपि तेषां मानवीप्रकृतेर्दैवीप्रकृतिकतया परिणमनाय षट्स्थलोपासनमार्गोऽत्र कश्चन व्यवस्थापितो विराजते। अयं च मार्गः सर्वेषमपि शरीरिणां समानतया अन्वेति। ये जीवन्ति ते सर्वेऽपि स्वहृदये विराजमानं परमात्मानं ज्ञात्वा आत्मानमपि तत्संबद्धं, तेन सहैव वर्तमानं च बुध्वा सर्वव्यवहारान् तत्प्रीत्यर्थमेव निरहङ्कारेण निर्वहन्तः तदा तदा समागतानि सुखदुःखानि तत्प्रसादभावनया स्वीकुर्वन्तो दुःखमध्येऽपि नित्यसुखिनो यथा भवेयुस्तथा दिव्यं मार्गं प्रदर्शयति वीरशैवमतम्। तथा चेदं मतं न केवलं वीरशैवजातीयेषु परन्तु निर्मलहृदयेषु सर्वेष्वपि साधकेषु शक्तिविकासाय यथाशक्ति प्रयतते। अत एवेदं पदं हृदयविकासवत्सु सर्वेष्वप्यध्यात्मजीविषु औचित्येनान्वेति। समन्वयमूलमेतादृशं वैशाल्यमस्य

मतस्य निगमागमप्रामाण्यतः गीतासूत्रप्रस्थानयोरवलम्बनेन च समागतमिति विवेकिनो जानन्ति । तदेव प्रमाणजातं अनुसृत्य वीरशैवप्रक्रियानुरोधेन श्रीपतिपण्डिताराध्यैरितरैश्च सूत्रप्रस्थाने श्रीकरभाष्यादयो ग्रन्थाश्च यद्यपि विरचिताः । परन्तु गीताप्रस्थाने भाष्यग्रन्थाः दुर्दैवात् एतावत्पर्यन्तं न समुन्मिषिता इति विषादमूलमेतत् ॥

सूत्रप्रस्थाननुसरणे साधकानां यद्यपि केचन निर्बन्धा वर्तन्ते । गीता–प्रस्थानानुसरणे तावत् नैकोऽपि निर्बन्धो विद्यते । विनैव वर्णाश्रमभेदं स्त्रीपुरुषादिभेदं च सर्वजातीयेषु शक्तिविकासाय प्रयतमानं गीताप्रस्थानं वीरशैवमतस्य कल्पवृक्षस्थाने वर्तत इत्येतच्च निर्विवादमेव । अस्मिन् प्रस्थाने जीवविकासहेतुत्वेन निर्दिष्टाः भगवत्परिणामवादः, जगत्सत्यत्व-वादः, जीवसत्यत्ववादः, कायकरूपः कर्मयोगः, द्वैताद्वैतसमन्वयमार्गः, शक्ति-सङ्कोचपरिहारेण शक्तिविसरूपाऽद्वैतानन्दानुभवक्रमः एते सर्वेऽपि वीरशैवमते सम्यक् समन्विता वर्तन्ते । परन्तु विशेषतः स्वधर्मानुष्ठानरूपः कर्मयोगो यदर्थ-मेव गीताशास्त्रमुपदिष्टं सः वीरशैवमते कायकनाम्ना विशिष्टं स्थानं लभते । सत्यशुद्धकायकेन संपादितमेव वस्तु आत्मकल्याणं साधयेत् । तदेव भगवते समर्पितं भवेत् । स्वकायके निरतो मानवः पुरः समागतान् गुरुदेवानपि न गणयेदिति कथयन्त्यनुभविनः । यथा गीतायां कर्मयोगः प्रशंस्यते तथा वीरशैवधर्मे कायकमहत्वं सर्वजगद्विस्मयकारित्वेन प्रतिपाद्यते । तथा च भगवद्गीता सर्वसाधकानामिव वीरशैवानामपि विशेषत अन्वेतीति प्रमोदस्थानमेतत् ॥

मानवं स्वधर्मे निरतं कर्तुं न केवलं गीता परन्तु तत्प्रवृत्तिहेतुभूतं महाभारतमेव वीर्यवत्तरया वाण्या समुपदिष्टं धर्मशास्त्रमिति परिगण्यते । मानवकल्याणाय यद्यदपेक्ष्यते तत्सर्वमपि तत्र क्रोडीकृतं विराजते । “यदिहास्ति तदन्यत्र यन्नेहास्ति तन्न कुत्रचित्” इत्येतादृश्या विशालभाव-नया महाभारतं विरचितं विराजते । स्वधर्मानुष्ठानेन मानवः इहपरसौख्यं

कथं विन्दत इत्ययमंशः स्पष्टं तत्र प्रतिपादितोऽनेकसन्दर्भेषु । तत्र वनपर्वणि धर्मव्याधनामकस्य ज्ञानिनः कथा दृश्यते । जात्या व्याधः सः परमज्ञान्यभूत् । तस्य समीपे तत्त्वोपदेशप्राप्तये कश्चन ब्राह्मणो गच्छति । स तु व्याधः सूनागृहे मांसविक्रयणं कुर्वन् तिष्ठति । 'ज्ञानी सन्नप्ययं मांसविक्रयणं करोति हि ' इति सङ्कटेन स विप्रो व्याधं प्रति ' कर्मैतद्वै न सदृशं भवतः प्रतिभाति मे ' इति वदति । तस्योत्तरतया धर्मव्याधः " कुलोचितमिदं कर्म पितृपैतामहं परम् । वर्तमानस्य मे धर्मे स्वे मन्युं मा कृथा द्विज ॥" इत्युपक्रम्य विस्तरेण वर्णधर्मान् आश्रमधर्मांश्च, तेषां तत्त्वं चोपदिश्य "स्वकर्मनिरतो यस्तु धर्मः स इति निश्चयः । स्वकर्म त्यजतो ब्रह्मन् अधर्म इह दृश्यते । स्वधर्म इति कृत्वा तु न त्यजामि द्विजोत्तम । पुरा कृतमिति ज्ञात्वा जीवाम्येतेन कर्मणा " (वन–२०८ अध्याय) इति स्वधर्मनिरतत्वादेव स्वस्य ज्ञानप्राप्त्यादिकं च वदति । महाभारत एव स्वधर्मानुष्ठामहत्त्वमेवं वर्ण्यते चेत् तत्सारभूतायां तदन्तर्गतायां भगवद्गीतायां उपदिष्टस्य स्वधर्मानुष्ठानरूपस्य मोक्षसाधनस्योपादेयत्वे किं वक्तव्यम् । एतादृशं ललितं हितावहं वीर्यवत्तरं स्फूर्तिदायकं गींतोपदेशं परमात्मन एव साक्षात् लब्धवन्तो वयमेव धन्याः ॥

अस्यां परमपवित्रायां गीतायां " स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः " " स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः " । इत्यादि उपदिश्यते । अतो हिन्दूधर्मः मानवस्य प्रत्यक्षसिद्धं तारतम्यं रागद्वेषं परित्यज्य मानवस्वभावानुगुणतया मुक्त्युपायं उपदिशति । तथा च हिन्दूमतमेव सर्वमानवसाधारणं पूर्णमतं भवितुमर्हति । स एव च हिन्दूधर्मः वर्णाश्रमधर्ममयो वर्तते । एवं च तत्त्वरहस्याज्ञानात् केवलजनाकर्षणदृष्ट्या स्वैरं वदेयुरविवेकिनः कामं ; परन्तु वास्तविको हिन्दूमतीयः वर्णाश्रमधर्मं नापह्नुयात् । अत एवास्मत्कालिकैर्महात्मागान्धीमहोदयैरपि "अहं हिन्दुः यतोऽहं तत्त्वशः वर्णाश्रमधर्मं विग्रहाराधनं च अङ्गीकरोमि " इत्यसकृदुद्घोषितमेव ॥

अत्र तत्त्वशः वर्णाश्रमधर्ममिति कथनात् गीतायामपि “ चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ” इति गुणकर्मानुरोधेनैव वर्णविभागकथनाच्च तत्तत्कर्मानुरोधेनैव वर्णविभागो महात्मगान्ध्यादीनां सम्मतः न तु जातिनिबन्धन इत्यभिप्रायन्ति केचन । परन्तु “ तादृशो वा विभागः अङ्गीक्रियते वा ? ” इति निष्कृष्य प्रश्ने तु तूष्णीमेव तिष्ठन्ति ते । किञ्चात्र विमृष्टव्यं किञ्चित् वर्तते गुणकर्मविभागः किन्निबन्धनः ? इति । यदि तत्तत्पुरुषेच्छानिबन्धनः, तर्हि इच्छैव वर्णविभागे कारणमिति वक्तव्यता आपतति । एवं तर्हि ‘ स्वधर्मनिरतः ’ ‘ श्रेयान् स्वधर्मः ’ ‘ परधर्मो भयावहः ’ इत्यादौ कथ्यमानः स्वधर्मपरधर्मविभागः कथं कर्तुं शक्यः ? यो यद्धर्मं कर्तुमनुष्ठितुमिच्छति तदनुरोधेन करोति च, तदा स एव धर्मः तस्य स्वधर्मः संपद्यते । तर्हि ‘ परधर्मो भयावहः ’ इत्यस्य कोऽर्थः ? अतः कर्माद्याचरणमपि न स्वेच्छानिबन्धनं वक्तुं शक्यम् । लोकेऽपि कश्चित् सामान्यः पुरुषः स्वस्वरूपादधिकं स्थानमानादिकं इच्छेच्चेत् किं तत्तस्य लभ्यते ? तद्वदेव धर्मेष्वपि इच्छामात्रात् नाधिकारः सिद्ध्येत् । किन्तु सोऽन्यकृत एव वक्तव्यः । स एव जातिपदवाच्यो भवति हिन्दूमते । तत्त्वमजानानाः केवलेदानींतनस्थितिं पश्यन्तो रागद्वेषपरवशाः केचन “ जातिवादो हेयः ” इति मुह्यन्ति । परन्तु विपयदृष्ट्या ‘ अस्यायं स्वधर्मः, अयं परधर्मः ’ इति विभागो जातिवादमन्तरा सर्वथा दुर्निरूप एव । प्रकृतस्थित्या स निर्णेतुं शक्यते न वा ? इत्ययं विचारोऽन्यः । तत्त्वदृष्ट्या तु अयं विभागो दुरपह्नवः । धर्मो न कदापि केवलव्यक्तिमाश्रित्य जीवति ; किन्तु मानवसामान्यमवलम्ब्य तद्रक्षणभारं वहन् कल्पवृक्ष इव विराजते ॥

एवं वर्णाश्रमधर्मस्य सत्यवादे च अस्मद्भारते बहुवारं एतदपलापार्थप्रवृत्तावपि न तस्य समूलोच्छेदः अद्यावधि न केनापि संपादितः । किमर्थमेतावानाशयो मयोच्यत इति चेत् प्रकृते गीता सर्वेषामपि जनानां स्वस्वकर्मनिरतानां तदीयेनैव फलाकांक्षारहितस्वकर्तव्याचरणेन मुक्तिप्राप्तिमुपदिशतीत्ययं

रहस्यांशो वीरशैवानां सम्मतः। तमेव धर्मं वीरशैवाः कायकपदेन व्यवहरन्ति। हिन्दूमतस्य केचन ग्रन्थाः केषुचिन्मुक्तिमार्गेषु स्त्रीशूद्रयोरनधिकारं वदंति। परंतु स मार्गः न सर्वजनानुगुणः; न सर्वादरणीयश्च। ' स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः " इत्यादिना गीतायामुच्यमानवर्णधर्ममार्ग एव सर्वजनानुसरणीय इति भाव्यते। अत एवेदं गीताशास्त्रं सर्वजनोपजीव्यत्वात् पूर्णशास्त्रं संपद्यते। विशिष्य च कायकप्राधान्यवादिनां वीरशैवानां अत्यंतमुपदेयमिदं गीताशास्त्रम्॥

इमं रहस्यमजानंतः केचन वीरशैवाः रागद्वेषादिभिः वर्णाश्रमधर्मं निन्दन्तीति तु सत्यं शोकावहमेव। "वीरशैवानां वर्णाश्रमधर्म एव नास्ति। वीरशैवाः सर्वेऽप्यतिवर्णाश्रमिण एव" इति केचन प्रतिपादयंति। वीरशैवधर्मः अतिवर्णाश्रम इति तु सत्यमेव। परंतु अतिवर्णाश्रमधर्म इत्येतत् साक्षात्कृतधर्मसु ज्ञानिष्वेव अन्वेत्ति; न जनसामान्ये। वीरशैवजातीयैः सर्वैरपि सामान्यतो वर्णधर्मा आश्रमधर्माश्च पालनीया एव। ज्ञानी अपि लोकहिताय स्ववर्णोचितं स्वाश्रमोचितं कर्म अवश्यं कुर्यादेवेति नियमोऽपि वीरशैवैरङ्गीक्रियते। "ज्ञानेनाचारयुक्तेन प्रसीदति महेश्वरः" इत्येव वीरशैवानां वादः प्रवर्तते। रजस्वलादिसूतककालेऽपि यावज्जीवव्रतरूपा लिङ्गपूजा अवश्यं करणीयेति निर्बन्धस्तावत् वीरशैवमत एव वर्तन्ते। सूतककाले मानवसामान्यैरपि अर्चनादिकं न क्रियते। वीरशैवैस्तु तदानीमपि शिवयज्ञो नित्यविधित्वेन अनुष्ठेय एवेति नियमो वीरशैवधर्मे विश्रुतः। अतोऽत्र वर्णाश्रमधर्मो नास्ति इति केचन मुह्यन्ति। परन्तु अविचारमूलोऽयं मोहः वर्धिष्णूनां न हि हितावहः शोभते। एवं धर्मदृष्ट्या वर्णाश्रमधर्मव्यवस्थापकं गीताशास्त्रं न केवलमितरसाधकानां परन्तु वीरशैवनामप्यत्यतन्तमनुकूल इत्यत्र न संशयलेशोऽपि॥

तथापि केचन अविवेकेन गीताप्रस्थानं विनिन्दन्ति। "अत्र परमात्मनः शिवरुद्रलिङ्गादिपदैरभिधानमेव नास्ति। तस्य च शक्तिवैशिष्ट्य

मेव न प्रतिपाद्यते। षट्स्थलसंप्रदाय एवात्र न दृश्यते। गीतोपदेशः कृष्णप्रोक्तत्वात् केवलवैष्णवानामेव सम्मतः।" इत्येवं भगवद्गीतां केचन दूषयन्ति। ते तावत् शिवगीतामपि न मानयन्ति। ये वचनशास्त्र एव दत्तदृष्टयः 'तत्रैव सर्वं वर्तते' इति भावयन्तोऽन्यत्र दृष्टिमेव न निदधति। निर्मत्सरया दृष्ट्या परिशीलने गीताशास्त्रं न केवलं निगमागमसम्मतं परन्तु वचनशास्त्रस्याप्यत्यन्तमनुगुणमेव वर्तते। अनेकानि वचनानि संस्कृतपद्यरूपेण रचयित्वा एकैकश्लोकव्याख्याने च समन्वयार्थं भाष्ये दत्तानि। वचनशास्त्रे यदुच्यते तत्सर्वं गीताशास्त्रेऽपि दृश्यते। मानवकल्याणायैव तदुभयमपि समगतमिति मे मतिः। अतो वर्धिष्णुभिर्गीताविषये अन्यथा मतिर्न कार्या॥

सिद्धांतदृष्ट्यापि अधुना किंचित् परिशील्यते। विचित्रशक्तियुतं ब्रह्मैव जगदात्मना परिणमते इत्ययमेव सिद्धांतः शक्तिविशिष्टाद्वैतनाम्ना व्यवह्रियत इत्यादि पूर्वमेव बहुधा शक्तिविशिष्टाद्वैतदर्शननामकग्रन्थे उपपादितम्। तत्र एकस्यैव वस्तनो बहुधा परिणामे वस्तूनां परस्परं भेदाभेदावेव अङ्गीकर्तव्यौ। यथा एक एव मृत्पिण्डो घटशरावाद्यनेकात्मना परिणमते। तत्र घटशरावाद्यात्मना परिणतः एक एव मृत्पिण्डः 'अयं घटः' 'अयं शरावः' इति परस्परमत्यन्तविलक्षणोऽपि भाति। अतो घटत्वशरावत्वाकारेण परस्परं भेदोऽपि स्वाभाविकः। एक एव खलु मृत्पिण्डः घटशरावादिषु सर्वेष्वपि विलसति। अतः अभेदोऽपि स्वाभाविकः। तथा च एकमेव ब्रह्म यदा चिदचिदात्मना परिणमते तदा परिणतावस्थायां भेदः स्वाभाविक एव। मूलावस्थायां तथैव मुक्त्यवस्थायां च अभेदः स्वाभाविकः। तथा च जीवब्रह्मणोः संसारदशायां भेदः मुक्तिदशयामभेदः इति भेदाभेदयोरेव पर्यवसानम्। अत एव शक्तिविशिष्टाद्वैतमतं तु भेदाभेदमतमिति विश्रुतम्। इदं च मतं सर्वमानवानामपि सामान्यतया अन्वेति। सर्वेऽपि प्रकृति-संपर्कात् सहजतया परमात्मना भिन्ना एव। तथापि तदंशभूतास्ते तदुपासनेन तद्रूप्यं तत्सायुज्यं च विंदंतीति सर्वानुभवसिद्धमेतत्॥

गीतायां च "क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत " 'ममैवांशो जीवलोके जीवभूतः सनातनः' इत्यादौ जीवस्य परमात्मनश्च वस्तुदृष्ट्या ऐक्यं अंशांशिभावश्च प्रतिपादितः । अंशांशिनोश्च भेदाभेदमतमेव संमतमिति शक्तिविशिष्टाद्वैतदर्शने विस्तरशो निरूपितम् । अतश्च जीवपरमात्मनोः भेदाभेदावेव गीतायां प्रतिपादितौ । एवं " रसोऽहमप्सु कौन्तेय प्रभास्मि शशिसूर्ययोः " " आदित्यानामहं विष्णुः ज्योतिषां रविरंशुमान् " इत्यादिदशमाध्यायश्लोकेषु च जगति विद्यमानं सर्वं ब्रह्मात्मकमेवेति विस्तरशः प्रतिपादितम् । एवं च जगद्ब्रह्मणोः कालभेदेन अवस्थाभेदेन च भेदाभेदयोरेव पर्यवसानं भवति । एवं च भगवद्गीता भेदाभेदसिद्धांतस्य अत्यंतमनुकूला विराजते । अत्र शिवादिपदप्रयोगाभावेनैव सर्वव्याधिनिवारणरूपमिदं शास्त्रं दूरीकर्तुं न सर्वथा युज्यते । तथा च परमात्मनः तदंशस्य जीवस्य च शक्तिवैशिष्ट्यमनेवकारं गीतायां प्रतिपादितम् । एतत्सर्वं भाष्ये तत्र तत्र निरूपितमेव ॥

एवं धर्मदृष्ट्या सिद्धांतदृष्ट्या च भगवद्गीताया अत्यंतं वीरशैवमतानुकूल्यवत्त्वात् तस्या एनन्मतरीत्या व्याख्यानस्याद्यावधि केनाप्यकृतत्वाच्च तदर्थमेवायं प्रयत्नो भगवत्प्रेरणेन पित्राज्ञया च कृतः ॥

एतदुपरि भगवद्गीतायाः कृष्णेनोपदिष्टत्वात् , श्रीकृष्णस्य च वैष्णवत्वात् वीरशैवानां विष्ण्ववतारभूतश्रीकृष्णोपदिष्टा इयं गीता कथमुपादेया इत्याशङ्का मंदमतीनां अतिसंकुचिमनस्कानां केषांचित् भवेत् । इयं च शङ्का ग्रंथोपोद्घात एव विस्तरशः परिहृता । अतः पुनस्तस्य सर्वस्यात्र लेखनमनावश्यकमेव । एतादृशीमशुभां संकुचितभावनां दुरतः परित्यज्य स्वेनाविदिते विषये वृथाग्रहमौढ्यं च परिहाय निर्मत्सरैर्वीरशैवैरितरैश्च साधकैः अयं ग्रन्थ आद्रियेतेति भावयामि ॥ टि. जि. सिद्धप्पाराध्यः

———

## श्रीमन्निरञ्जनजगद्गुरुश्रीमल्लिकार्जुनमुरुघराजेन्द्रमहास्वामिनां आशीर्वचनम्

श्रीजगद्गुरुमुरुघराजेन्द्रविद्यापीठग्रन्थमालायाः द्वितीयं पुष्पमिदं वीरशैवीयं गीताभाष्यं वस्तुतः अद्वितीयमेव। श्वेताश्वतरभाष्यकर्तुः पण्डितप्रवरस्य डा. टि. जि. सिद्धप्पाराध्यस्य अविरतसारस्वततपसः फलायितेयं कृतिर्नूनं विद्वज्जनचेतोहारिणी। वीरशैवदर्शनदृशा अपूर्वमिदं गीताया व्याख्यानं सुतरां श्लाघनीयम्। गीतायाः कृष्णप्रोक्तत्वेऽपि तस्या वीरशैवानामप्यत्यन्तोपयोगित्वं भाष्ये तत्र तत्र सम्यक् प्रपञ्चितम्। गीताया आविष्करणमेव तत्सर्वोपादेयत्वं स्पष्टयति। रणरङ्गे शत्रून् पश्यतोऽर्जुनस्य मनस्युत्पन्नं कर्तृत्वाभिमानप्रयुक्तं बन्धुव्यामोहं परिहर्तुं, स्वकर्तव्ये तं नियोक्तुं च श्रीकृष्णस्तस्मै स्वीयां जगद्व्यापारलीलां परमात्मतादात्म्यभावनया यया वाण्या उपादिशत् सैव वाणी भगवद्गीतानाम्ना सर्वत्र विश्रुता। कृष्णोपदेशः एवमाविष्कृतोऽपि तस्य कृष्णगीतेत्यभिधानं विहाय भगवद्गीतेत्यभिधानं तदीयां उदात्ततां विश्वप्रियतां विशालव्याप्तिं सार्वजनिकतां चाभिव्यनक्ति। स च तदानीमर्जुनस्य भयशोकमोहसंशयान् परिहृत्य तस्मिन् कर्तव्यबुद्धिमुत्पाद्य स्वीयं महत्त्वं गांभीर्यं चाद्यापि प्रकटयतीति प्रमोदस्थानमेतत्। अर्जुनो यद्यपि सात्त्विकः साधकः ; तथापि तस्यैवैतादृशः संशयस्समागतश्चेत् रजस्तमोगुणाढ्यतानामिदानीन्तनानामप्येतादृशाः संशयाः पदेपदे प्रतिस्फुरंतीत्येतत्सहजमेव। एतादृशानां सर्वेषां श्रेयोऽभ्युदययोः गीतासंदेशस्यानिवार्यतां वाचा वर्णयितुं न पार्यते। अत एवायमुपदेशः न केवलं कृष्णाह्वयस्य दिव्यपुरुषस्यैव संबद्धः परन्तु निराकारस्य भगवतस्साक्षात्सन्देशः सर्वजीवकल्याणाय प्रवृत्त इति अस्योपदेशस्य भगवद्गीतेत्यभिधानं तात्त्विकदृष्ट्या युज्यते। अत एवेयं गीता सर्वानपिसाधकान् तमसो ज्योतिर्गमयतीत्यत्समस्तजनसौभाग्यमेवेति विद्वद्भिः परिगण्यते॥

एतादृश्याः पवित्रगीतायाः वीरशैवधर्मानुगुणं भाष्यमनिवार्यमासीत् । तस्याश्चानिवार्यतायाः निवारणाय प्रवृत्तैः सिद्धप्पाराध्यमहोदयैर्भाष्यविरचनेन महती सेवा समर्पिता दर्शनक्षेत्रे इति महदिदं प्रमोदस्थानम् । तदीये भाष्ये गीतार्थविवरणाय निगमागमानामिव शरणवचनानामपि पद्यरूपेण सम्यग्विरच्य प्रमाणतयोपनिबन्धनं भाष्यकर्तुरुदारमनोभावं समन्वयदृष्टिं च सम्यक् प्रतिपादयति । वेदागमा इव शरणगीतापि जनस्य नैराश्यदौर्बल्यदारिद्र्यपरिहारद्वारा तदीयशक्तिविकासाय प्रभवेदित्ययमंशः भाष्यकृत्समन्वयपरिपाट्या स्पष्टं प्रतीयते । देहे सहजतया प्रवर्तमानां परमात्मलीलां साधकास्सम्यगनभूय आत्मकल्याणाऽनवसादकतया स्वीयव्यवहारान् निर्वहन्तो लोककल्याणं यथाशक्ति साधयेयुरित्येतदेव वीरशैवदर्शनमिति सर्वैरभ्युपगतम् । गींतायामयमंशः आदितः प्रभृति यावदन्तं सम्यक् निरूप्यते । भाष्येऽपि अयमाशयः स्पष्टीकृतोऽनेकेषु सन्दर्भेषु ॥

साधकास्सर्वेऽपि स्वीयहृदये निर्लिप्ततया निवसन्तमीश्वरमकलुषितेन मनसा अनुभूय तस्मिन्समरसतया विलीय निर्लिप्ततया लोके व्यवहरेयुरित्ययमेव गीतायास्सारसन्देशः । अत एवेयं गीता ज्ञानकर्मसमुच्चयात्मकं योगशास्त्रमिति सर्वैरभ्युपगता । परमात्मांशाः जीवास्तस्मात्सहजतया भिन्नाः सर्वान्व्यवहारान् तदुपासनदृष्ट्या तत्रापि कायकभावनया निर्वहन्तः तेन सम्यग्युक्तास्तत्प्रसादमेव भुञ्जन्तो नित्यसुखिनो भवेयुरित्येवमेव वीरशैवसिद्धान्तः प्रतिपादयति । परमात्मपरिणामभूते सत्ये जगति परमात्मांशभूतः सत्यो जीवः तदाराधनरूपां सत्यामेवोपासनां निर्वहन् स्वीयं भेदं क्रमशः परिहृत्य स्वांशिनि परमशिवे समरसतया विलीय ऐक्यसुखमनुभवितुं पारयेदेव । एवं च भगवद्गीता सर्वदा वीरशैवधर्मानुगुणा वर्तत इत्येवं विदित्वा डा. सिद्धप्पाराध्यमहोदयाः स्वपित्राज्ञानुरोधेन पवित्रमिदं भाष्यं विरच्य जगद्गुरुश्रीमुरुघराजेन्द्रविद्यापीठग्रन्थमालायां प्रकटयित्वा जगद्गुरु इम्मडिगुरुसिद्धमुरुघराजेन्द्रमहास्वामिभ्यः समर्पितवन्त इत्येतत्तदीयनिरतिशय-

भक्तेर्मुख्यं निदर्शनमिति भाव्यते । श्रीजगद्गुरुमुरुघेशः भाष्यकर्तुस्तद्वंशीयानां च श्रेयः, तत्त्वजिज्ञासूनां अभ्युदयं चानुगृह्णात्वित्यभिलष्यते । अत्यल्पकालावधावेव श्वेताश्वतरोपदिषद्भाष्येन सह गीताभाष्यमपि अविश्रान्तेन तपसा परिसमाप्यास्मत्पीठे भक्तिपूर्वकं समर्प्यायं विद्वन्मणिः सर्वस्य विद्वद्वृन्दस्य मार्गदर्शको विराजत इति महानन्दभरिताः स्मः । भाष्यावलोकनेन सर्वे साधकाः योगयुक्ता एव सन्तः समदृष्ट्या लोके व्यवहरन्तः सुखदुःखे प्रसादरूपेण स्वीकुर्वतः आत्मकल्याणं साधयेयुरित्याशास्महे ॥

श्रीमल्लिकार्जुनमुरुघराजेन्द्रमहास्वामिनः

———

## आत्मनिवेदनम्

अष्टादशाध्यायसमायुक्तं गीताप्रस्थानमष्टादशवर्षावधौ शक्तिविशिष्टाद्वैतदर्शनरीत्या विवरणीयमिति पित्रादेशात् तथैव कृतपरिश्रमोऽहं समुद्दिष्टं गीताभाष्यं भगवदनुग्रहेण परिसमाप्य तन्मुद्रणसौकर्यपरिकल्पनाय पितृवर्यमेवानिशं प्रार्थयमानः कतिपयदिवसानत्यवाहयम् । तदानीमाकस्मिकतया श्रीमच्चिन्मूलाद्रिबृहन्मठमहासंस्थानाध्यक्षवर्याणां श्रीजगद्गुरुमल्लिकार्जुनमहास्वामिनां दिव्यसन्दर्शनमधिगम्य तत्प्रसादं स्वीकृत्य तदनुग्रहेणैव परिसमापितं भगवद्गीताभाष्यं तेभ्यः समर्पयितुं तेषु व्यज्ञापयम् । श्वेताश्वतरोपनिषद्भाष्यमिव गीताभाष्यमपि स्वीयग्रन्थमालायां प्रकटयितुं महास्वामिनः सन्तोषमभिव्यञ्जयामासुः । श्रीमठीयशून्यसिंहासनस्य द्वितीयाधिपतीनां जगद्गुरुइम्मडिश्री गुरुसिद्धमुरुघराजेन्द्रमहास्वामिनां स्मारकतया इदं भाष्यं तेभ्यः समर्पयितुमनसा मया श्रीगीताजयन्त्युत्सवावधौ तन्मुद्रणं महास्वामिनामनुग्रहेण परिसमापितमिति प्रमोदस्थानमेतत् ॥

श्रीबृहन्मठीयशून्यपीठस्य प्रथमाधिपतिभ्यः श्रीजगद्गुरुमुरुघराजेन्द्रमहास्वामिभ्यः प्रागेव प्रथमपुष्पं समर्पितम् । तत आरभ्य शून्यसिंहासनमहत्त्वं जिज्ञासुस्तत्प्रतिपादकान् ग्रन्थान् यथामति अशोधयम् । स्वस्मिन् संसाधितं सत्समायोगं पुरःसंस्थाप्य तस्य शून्यसिंहासनमित्यभिधानमकरोन्महात्मा बसवार्य इति चामरसः प्रभुलिङ्गलीलाग्रन्थे वर्णयति । इदं च सिंहासनं प्रथमतः महानुभावो व्योमकायः शून्यमूर्तिरल्लमप्रभुरलञ्चकार । तस्यैव कृपया बसवादिप्रमथाः शून्यसिद्धिं संप्राप्य कृतार्था बभूवुः । बसवार्यस्य निरहंभावभक्तेः प्रभाव एव अल्लमप्रभोः शून्यपीठरूपेण परिणम्य

तद्द्वारा अध्यात्मसमृद्धेः सत्यशुद्धं जीवनमार्गं प्रदर्शयामास । प्रभोः स्थितिः खलु वाङ्मनसोरगोचरा आसीत् । स तु परमाकाशे विहरन् आत्मारामः परिपूर्णश्च सन् परंज्योतिरेवासीत् । आकाशमावृत्य तन्मयीमेव शय्यां परिकल्प्य, तमेव परिधाय, तमेवोपधानीकृत्य सुषुप्तिसुखमनुभवन्तं प्रभुं कथं वा दुःखं बाधेत ? एवमविज्ञातदुःखगन्धो नित्यानन्द एवासीत्स महात्मा । सः गोरक्षेणास्त्रेण छिद्यमानोऽप्यच्छिन्न एवासीदित्येतद्विश्रुतमेव । एवं गुणातीतोऽसंस्पृष्टपञ्चभूतविकारः सः सर्वत्र रूपादिविषयैरावृतोऽप्यनावृत इव अन्तर्बहिश्च निरञ्जनतया निश्चलस्सन् परमात्मैवासीत् ॥

अन्तःपूर्णो बहिःपूर्णो पूर्णकुम्भ इवार्णवे ।
अन्तःशून्यो बहिशून्यः शून्यकुंभ इवांबरे ॥

इत्युपनिषत्काराः निरञ्जनस्थलापरनामधेयं शून्यं अन्तरङ्गबहिरङ्गयोः पूर्णतया संसारवासनाराहित्यं प्रतिपादयन्ति । अर्णवान्तर्निहितो घटः अन्तर्बहिश्च जलपूर्णो यथा वर्तते यथा चाकाशे निहितः कुंभः अन्तर्बहिश्च सर्वविधदोषैरसंस्पृष्टो निर्मलस्सर्वशून्यो विराजते तथा प्रभुर्लोकेऽवस्थितोऽपि न लोकधर्मा आसीत् ; एवं पञ्चभूतैरावृतोऽप्यतिक्रान्तपञ्चतत्त्वविकारः चिदानंदमये पराकाशे विहरन् परिपूर्ण आसीत् ॥

शून्यपीठारोहणार्थमवतीर्णः प्रभुर्महात्मनो बसवार्यस्य भक्त्यतिशयेन परिकल्पितं मनःप्रसन्नतारूपं शून्यसिंहासनं यथारुह्य पर्यशोभत तथा निर्मलेन मनसा तदानीन्तनाः शून्यस्वरूपं वितर्क्य तत्प्रकारं यथामति परिकल्पयामासुः । निरवयवशून्यलिङ्गमेव परिपूर्णताद्योतकं शून्यमिति ते जगदुः । मानवस्वातन्त्र्यस्य पराकाष्ठां शून्यमिति च ते आचख्युः । प्रभोः स्थितिसंदर्शनेन तदीयशून्यसिंहासनस्वरूपमेवमवेदिषुः शरणार्वत्राः । स संयुज्यापि सर्वमावृत्यापि विश्वातीततया पल्लवितं विश्वातीतरूपेण परिणतं मूलभूतं परशिवब्रह्मैव शून्यमिति ते भावयांचक्रुः । घटं विच्छिद्य तदंतःस्थितावकाशदर्शन-

रूपा विश्लेषणात्मिका दृष्टिस्तथा नाभ्युपगता ; परंतु घटे विद्यमान एवावकाशः सर्वदोषशून्यो निर्लिप्तस्सन् शून्य इति शरणैरभ्युपगतः । तादृश्यां शून्यस्थितौ वर्तमानः प्रभुर्निरवयवशून्यलिङ्गमूर्तिरेवासीत् । तादृश्यां दशायामवस्थानमेव शून्यपीठारोहणमिति शरणाः भावयामासुः । परमवैराग्यशालिनः साक्षात्कृत-धर्माण एवैतादृशं निरञ्जनाख्यं पीठमारोढुं प्रभवंति । एतादृशं शून्यसिंहासन-मारोढुमल्लमप्रभुः प्रथम आसीत् ; तेनैवेयं शून्यपरंपरा आरब्धा इति निरञ्जनवंशरत्नाकरे उपवर्ण्यते । तदनंतरं शरणाग्रगण्यः श्रीचन्नबसवार्यः शून्यपीठमारुरोह । तस्मादेकोनविंशाः श्रीतोण्टदार्यमहास्वामिनः ; तेभ्यो दशमाः, अल्लमप्रभोः षड्विंशाश्च मुरुघराजेन्द्रमहास्वामिनः इत्येवं शून्यपरंपरा विराजयाना वर्तते ॥

त्रिषष्ठिपुरातनेषु षण्मुखावतारभूतो मुरुघ इति विश्रुतः पुरातन आसी-दिति इतिहासे दृश्यते । शरणकालीनः चन्नबसवार्यः मुरुघरूपेण अवती-र्णस्य षण्मुखस्य अवतार इति श्रूयते । स च कल्याणक्रांतिसमये व्यवहार-मुद्रां, शून्यपीठचिह्नं सौवर्णं सिंहासनं च वजीरमल्लखानसकाशात् डिल्ली-चक्रवर्तिने बादषाहाय प्रेष्य "अस्मद्वंशीयः बादषाहं उपसृत्य यदा तद्वस्तुत्रयं अपेक्षते तदा तस्मै तत्प्रत्यर्प्यम्" इत्यादिदिशुः । तत्परंपरानुयायिनः कड्गिगेहळ्ळि सिद्धलिङ्गस्वामिन स्वीयं शिष्यं मुरुघनामानं बादषाहात् तद्वस्तु-त्रयमानेतुं प्रेषयामासुः । सोऽपि तपोनिष्ठः शिवयोगनिरतस्तत्र गत्वा रुग्णं चक्रवर्तिनो हस्तिनं दण्डेन संस्पृश्य नीरुजमकरोत् । पश्चात् चक्रवर्तिना ससन्तोषमंतःप्रवेशितास्ते नगराभ्यंतरे सगौरवमभिनंदिताः राजमर्यादापुरस्सरं वस्तुत्रयप्रत्यर्पणपूर्वकं प्रस्थापिताः । तथैव हैदराबादनगरे नवाबसकाशात् यथोचितां मर्यादामुपलभ्य अनेकदेशाटनं कुर्वंतः चित्रदुर्गमवापुः । तदानीं तत्र एतैरेव महास्वामिभिः प्रागत्यंतमुपकृतः भरमण्णनायकः तत्प्रांताधिपतिः एतेषां महास्वामिनां विरहं सोढुमशक्नुवन् तदागमनमेव निरीक्षमाण आसीत् । सः स्वामिनामाकस्मिकमागमनमाकर्ण्य अतीव संतुष्टस्तदीयप्रासादसमीपे

ससत्यधिकत्रिशताङ्कणपरिमितं मठं तदर्थमेव निर्मापयामास। तत्र कञ्चित्कालं पूजादिकं निर्वर्तयंतो महास्वामिनः इदानींतने बृहन्मठे निजयोगसमाधये अवकाशं तन्मुखेन कल्पयित्वा इम्मडिगुरुसिद्धस्वामिमहोदयेभ्यः शून्य-सिंहासनाधिपत्यमनुगृह्य सर्वांश्च भक्तवृन्दाननुगृह्य निजयोगसमाधिमापुः। अयमेव समाधिस्तदारभ्य चित्रदुर्गबृहन्मठे विराजमानः भक्ताननुगृह्णन् प्रद्योतते। तच्छिष्याः श्रीजगद्गुरुगुरुसिद्धस्वामिनः शून्यपीठमहत्त्ववृद्धिगुण्या-पादनेन " इम्मडि " इत्युपाधिमधिगतवंतः अद्भुतया रीत्या भक्तानुग्रहलीलां निर्वहंतः आनंदपुरे मुरुघामठे निजयोगसमाधिमास्थाय विराजन्ते॥

एवं शून्यपरंपरामहत्त्वं विदित्वा तत्परंपरागतेभ्यः जगद्गुरु इम्मडिगुरुसिद्धमुरुघराजेंद्रमहास्वामिभ्यः गीताभाष्यमिदं सादरं सविनयं च समर्प्यते। एतत्स्वीकारेण महादेवस्वरूपो श्रीमुरुघेशः प्रीतो भवत्विति सभक्ति प्रार्थये। एतदवलोकनेन साधकाः समुचितप्रयोजनमुपलभ्य मदीयश्रमं सफलयत्वित्यभ्यर्थये॥

मार्गशिरशुद्धैकादशी
4—12—65

टि. जि. सिद्धप्पाराध्यः
विद्वज्जनविधेयः

———

# श्रीमद्भगवद्गीतावीरशैवभाष्यम्

॥ ओं शिवाय परब्रह्मणे नमः ॥

## प्रथमाध्यायः

चिद्रूपशक्त्या विलसन्सदैव जीवात्ममोक्षस्थितिबन्धहेतुः ।
मृत्युञ्जयः पाशविमोचनेन पायान्मुदा किङ्करभावनम्रान् ॥ १ ॥

सात्त्विकैरर्चितो योगिभिस्सेवितः कृत्तिना रञ्जितो भस्मना रूपितः ।
गङ्गया शोभितो भोगिना वेष्टितो नंदिनाराधितः पातु वरशङ्करः ॥२॥

लिङ्गस्य तत्त्वं निहितं हि लोके सर्वैर्यथा ग्राह्यमनन्यभक्त्या ।
तथा प्रचारं कुरुते स्म नित्यं दिव्योपदेशात् गुरुरेणुकार्यः ॥ ३ ॥

नमामि शंभुं गुरुरूपधारिणं सनातनं शाश्वतधर्मबोधकम् ।
लिङ्गोद्भवं लिङ्गसमानवैभवं यो विश्वमावृत्य विराजतेऽनिशम् ॥ ४ ॥

यो वीरशैवं स्थिरयन्महीतले संराजतेऽद्यापि सुनिर्मले हृदि ।
अगस्त्यसंबोधितया दिशाधुना कुर्यात्स देवश्शुभसन्ततिं पराम् ॥ ५ ॥

वैराग्यमूलं वरशून्यपीठं सुज्ञानलभ्यं गुरुरल्लमार्यः ।
गुहेशनिष्ठस्समलञ्चकार लोकेषु स्थित्वाऽयमलोकधर्मा ॥ ६ ॥

तदीयपीठे विलसन् शिवात्मको योगीश्वरः श्रीगुरुतोण्टदार्यः ।
भक्तान्सदा पातु कृपाप्रसादाद्यदर्थमेवागत एष देवः ॥ ७ ॥

निर्लिप्तमूर्तिः शिवयोगिवर्यश्चिदात्मको निर्मलज्योतिरूपः ।
सन्दर्शयामास तदीयरूपं ह्यमूर्तमस्यां भुवि सञ्चरन्यः ॥ ८ ॥

वैराग्यतत्त्वं परिनिष्ठितं चेत्सद्भक्तवृन्दं समलङ्करोति ।
तस्यैव दार्ढ्याय गृहीतवेषो ह्यमूर्तशंभुर्भुवि सञ्चचार ॥ ९ ॥

स एव शंभुर्मुरुघेशनाम्ना निरञ्जनं पीठमुदारुरोह ।
बृहन्मठे योगसमाधिमग्नो जगद्‌गुरुर्लोकहितैकनिष्ठया ॥ १० ॥

निर्लेपनं नाम भवाब्धितारणं रागादिदुःखौघनिवारणौषधम् ।
मायाख्यशक्तेः परिमार्जनं वरं तत्त्वार्थविज्ञानविचारभूषणम् ॥ ११॥

एतादृशं दिव्यतपःफलोदयं हृद्रोगनाशाय समर्थमौषधम् ।
प्रदातुमीशश्वरजङ्गमाह्वयो विराजते शुद्धविरक्तमुद्रया ॥ १२ ॥

महानुभावो मुरुघेशवर्यः पापौघसन्त्रासनिबद्धकक्ष्यः ।
योगेन दिव्यं परिगृह्य देहं सदानुगृह्णाति समस्तभक्तान् ॥ १३ ॥

मुरुघेश एषो भुवि शून्यपीठे चिद्रूपदेहे विमले विराजते ।
नमामि तं सद्‌गुरुमल्लिकार्जुनं यत्पादपद्मे विनिविष्टमानसः ॥ १४

विद्वद्भिरासेवितदिव्यपादं सद्भक्तिगम्यं चिरशांतियुक्तम् ।
शास्त्रार्थसंशोधनबद्धलक्ष्यं वैराग्यवीरं चरलिङ्गमीडे ॥ १५ ॥

सदानुरक्तो जगतो हितावहे सत्कर्मवृन्दे मुरुघेशतुष्टये ।
फलाभिसंधिं परिहाय लौकिकीं विशालदृष्ट्या विलसत्ययं भुवि ॥१६॥

जगद्‌गुरुस्सोऽयमुदारभावात् श्रीकृष्णगीतार्थविवेचनाय ।
समन्वयाख्यं गुरुभाष्यमेतत्प्रकाशयामास जगद्धिताय ॥ १७ ॥

स एव चित्ते निवसन्मदीये सिद्धार्यभाष्यं वरवीरशैवम् ।
शिवप्रियं सर्वसमीहितं यत् संयोजयामास विशुद्धबुद्ध्या ॥ १८ ॥

इदं च भाष्यं मुरुघेशतुष्ट्या पितुश्च तुष्ट्यै प्रभवत्विदानीम् ।
आज्ञा तदीया परिपालितैषा जगद्‌गुरोः पूर्णकृपाप्रसादात् ॥ १९ ॥

भाष्यं वितन्यादुपयुक्तमर्थं मनस्तु नित्यं लभतां चिदैक्यम् ।
बुद्धिः प्रसन्ना रमतां गुहेशे शक्तेर्विकासोऽस्तु शिवप्रसादात् ॥ २०॥

चिदात्मकोऽयं गुरुघेशदेवस्संवीक्ष्य भृत्यं करुणार्द्रदृष्ट्या ।
गीतार्थसंशोधनकार्यरङ्गे समाधियोगं वितरत्वमोघम् ॥ २१ ॥

विचित्रानन्तशक्तिविशिष्टं परमशिवसदाशिवरुद्रादिशब्दैरभिधीयमानं परब्रह्मैव जगदात्मना परिणमत इति निरूपितं शक्तिविशिष्टाद्वैतदर्शने । एकमेव परं ब्रह्म तत्तच्छक्तिविशिष्टतया तत्तत्कार्यं निर्वहति । एवं सृष्टिस्थिति-संहारादिकं जगद्व्यापारं लीलया निर्वर्तयदेव परशिवब्रह्म स्वीयानन्दानु-भवेन आत्मारामं च विराजते । तत्र सृष्ट्यनुकूलज्ञानशक्तिविशिष्टस्सन् परमात्मा चतुर्मुखब्रह्मेत्युच्यते । एवमेव रक्षणानुकूलक्रियाशक्तिविशिष्टः स एव विष्णुरिति कथ्यते । तथैव संहारानुकूलज्ञानक्रियासमन्वयात्मकशक्ति-विशिष्टस्स एव कालरुद्र इत्यभिधीयते । यतः प्रळयाधिकारी कालरुद्रो यस्य जीवस्यावसानकालस्संप्राप्त इति सम्यग्विवेचनेनैव स्वीयां प्रळयक्रियां निर्वर्तयति । एवं च त्रिमूर्तयोऽपि परशिवब्रह्मणो विभूतिरूपा एव । अत एव "ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते" इत्यथर्वशिखायां श्रूयते । अत्र निर्दिष्टो रुद्रः कालरुद्रपरः । एवं त्रिमूर्तिरूपतः स्थित्वा सृष्टिस्थिति-संहारान् निर्वहन् परमात्मा यदा यदा अधर्मभारवशात् जगदेव विनाशोन्मुखं भवेत् तदा तदा रक्षणाधिकारिविष्णुरूपेण जगति स्वयमेवावतीर्य जगद्रक्षणं करोति । एवं जगद्रक्षणार्थं अमूर्तः परमात्मैव दिव्यमूर्तरूपेण विष्णुनाम्ना अवतरति । एवं विष्णोर्दशावतारा अपि भगवतः पराशक्तिविशिष्टस्य परशिवस्य लोककारुण्यलीलाविभूतय एव । त्रिमूर्तिष्वन्यतमोऽयं विष्णुः परशिव-निष्ठायाः पराशक्तेरंश इति सामाम्नायरुद्रसूक्ते निर्दिष्टम् । "एकैव शक्तिः परमेश्वरस्य भिन्ना चतुर्धा विनियोगकाले । भोगे भवानी समरेषु दुर्गा क्रोधे च काळी त्ववने हि विष्णुः ॥" इति तत्र विष्णोः पराशक्त्यंशत्व-मुपदिष्टम् । अतो रक्षणार्थे नियुक्तो विष्णुः शिवस्य प्राणशक्तिरूप एव ॥

अयं च परशिवः त्रिमूर्त्यतीतोऽपि त्रिमूर्त्यात्मकस्सन् जगद्व्यापारं निर्वहतीति "लोकवत्तु लीलाकैवल्यम्" इत्येतद्ब्रह्मसूत्रव्याख्याने श्रीपति-

पण्डिताराध्यैर्निरूपितम् । यतश्शिव एव त्रिमूर्त्यात्मकेन रूपेण परिणतो भूत्वा जगतो हितं साधयत्यतस्स एव महादेव इति परिगणितः । "अथ कस्मादुच्यते महादेव? यतः आत्मज्ञानयोगैश्वर्येण महति महीयते तस्मादुच्यते महादेवः" इति व्यपदेशात् सर्वेश्वरत्वं सर्वान्तर्यामित्वं सर्वफलप्रदःतृत्वं च महादेवे शिवे परमकारण एव व्यवस्थाप्यत इति श्रीकरभाष्ये त्रिमूर्तिसकाशात् जगद्व्यापारनिर्वहणं निराकारशिवस्य लीलाविनोद इति सम्यगुक्तम् । एतेषु त्रिमूर्तीनामवतारेषु विश्रुतौ रामकृष्णावतारौ । तयोश्च रामावतारस्सद्वर्तनसौशील्यादिगुणैस्सत्क्रियानुष्ठानमार्गे च सुप्रतिष्ठितो विराजते । कृष्णावतारस्तु विशेषतस्तत्त्वोपदेशाय दिव्यादर्शतया विश्रुतः । अनेन चोपदेशेन कृष्णोऽर्जुनव्याजेन त्रिगुणात्मकान् सर्वान् जीविनः पावयति । एतस्याप्युपदेशस्य रामावतारे शिवेनोपदिष्टा गीतैव मूलाधार इति निर्विवादम् । पुरा त्रेतायुगे सीतावियोगदुःखमनुभवितुमशक्नुवानस्य श्रीरामस्य प्रार्थनानुसारेण स्वांशभूतं तं समाधातुं त्रिमूर्तिभिस्सह वैभवेन दण्डकारण्यमुपागतेन दिव्यमङ्गळविग्रहेण शिवेन सदयमनुगृहीतस्तत्त्वोपदेशः शिवगीताभिधानेन व्यासमहर्षिभिः पद्मपुराणे सन्निबद्धो विराजते । तदानीमुपदिष्टं शिवतत्त्वं श्रद्धयाकर्ण्य श्रीरामचन्द्रो निरतिशयं मनस्समाधानमलभत । तदानीं श्रीरामे संस्काररूपेण स्थितः प्राक्तनोऽयमुपदेशः कृष्णावतारेऽर्जुनविषादं परिहृत्य तं कर्तव्यनिष्ठं कर्तुमशक्नोत् । कृष्णमुखेन समायातो दिव्योपदेशः अर्जुनं निमित्तीकृत्य तद्रूपास्सर्वे जीवा यथेश्वरप्रीत्यर्थमेव लोके व्यवहरन्तो नित्यसुखनुभवेयुस्तथा तेषु दिव्यां स्फूर्तिं स्वरूपस्मृतिं चोत्पादयन् वर्तत इति विश्रुतमेव । त्रेतायुगे शिवगीतामृतेन समाहितचेतनो रामो यथा सच्चारित्र्येणात्मानं पावयामास तथा तदीयात्मसंस्कारेण स एव द्वापरयुगे कृष्णाभिधानेनावतीर्य अर्जुनव्याजेन सर्वानार्तान् जीवानुपदेष्टुमपारयत् । अयमाशयः "अपि च स्मर्यते" इत्येतत्सूत्रार्थविवरणावसरे श्रीकरभाष्ये कूर्मपुराणान्तर्गतशिवगीतानुसारेण "गीताशास्त्रमपीश्वराल्लब्ध्वा तदाज्ञावशा-

देव कृष्णेनार्जुनायोपदिष्टम् " इत्येवमुल्लेखितम् । तत्रत्यः प्रस्ताव एवं वर्तते । "मयैतद्भाषितं ज्ञानं हितार्थं ब्रह्मवादिनाम् । दातव्यं शान्तचित्तेभ्यः शिष्येभ्यो भवता सदा ॥" इति शिवो राममादिशत् । तथैव "नारायणोऽपि भगवान् देवकीतनयो हरिः । अर्जुनाय स्वयं साक्षाद्दत्तवानिदमुत्तमम् ॥" इति महर्षिर्व्यासो भगवतो नारायणस्य शिवाज्ञानिर्वाहमावेदयति । अयमेव व्यासः पद्मपुराणान्तर्गतायां शिवगीतायां "रामाय दण्डकारण्ये पार्वतीपतिना पुरा । या प्रोक्ता शिवगीताख्या गुह्यात् गुह्यतमं हि सा ॥" इति रामावतारे शिवोपदिष्टाया गीतायाः गोप्यतां प्राचीनतां च सम्यक् प्रकटयति । स एवोपदेशो महाभारतकाले कृष्णावतारे प्रसिद्धिं गतः प्रचारातिशयमलभत । यतोऽस्मिन्नेवावतारे नष्टमध्यात्मज्ञानमर्जुनं निमित्तीकृत्य सर्वलोकहिताय पुनस्समुपदिष्टं परमात्मना श्रीकृष्णद्वारा । स एवोपदेशो भगवद्गीतेत्युच्यते । "शास्त्रदृष्ट्या तूपदेशो वामदेववत् " इत्येतत्सूत्रार्थविवरणवेलायां श्रीकरभाष्ये श्रीकृष्णः परशिवतादात्म्यमापन्नः शिवोऽहंभावनया शिवतत्त्वमुपदिशतीत्याशयं वामदेवदृष्टान्तेन सम्यक् प्रकटितम् । वामदेवो महर्षिरुपदेशावसरे प्रतिपदं 'अहं मनुरभवम् ' इत्यादिना स्वस्यैव सर्वात्मकत्वं निर्दिशति । तद्वत्कृष्णोऽप्युपदेशावसरे अयं सर्वोऽपि स्वस्यैवोपदेश इत्येवाविष्करोति । दण्डकारण्ये भगवता परमशिवेन श्रीरामचन्द्रः 'सर्वो वै रुद्रः, 'एक एव रुद्रो न द्वितोयाय तस्थे,' 'शिव एको ध्येयश्शिवङ्करस्सर्वमत्यत्परित्यज्य, 'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज " इत्यादिना सर्ववेदान्तसारभूतं शिवज्ञानमुपदिष्टः किल । स एव रामः कृष्णावतारेऽर्जुनं प्रति "वासुदेवस्सर्वमिति स महात्मा सुदुर्लभः ' 'ममैवांशो जीवलोके जीवभूतस्सनातनः " इत्यादीनि वाक्यानि शिवतादात्म्यदृष्ट्या उपदिदेश । "ब्रह्म वेद ब्रह्मैव भवति " इति श्रुतिरेव शिष्यस्य बुद्धावस्थायां गुरुणा ऐक्यं उपदिशति । शिवेनोपदिष्टं शिवतत्त्वं ज्ञात्वा रामो यथात्मारामस्सन्

शिवस्समपद्यत तथा स एव कृष्णरूपेणावतीर्णस्तमेव संस्कारमलभत । अतः कृष्णोऽपि शिव एव सन्नुपदेशावसरे 'अहमेव कर्ता कारयिता भोक्ता प्रेरयिता' इत्यादिना क्रमेणास्मत्पदमनेकेषु सन्दर्भेषु प्रयुंक्ते । तच्च श्रुतियुक्त्यनुभवानुरोधेन युज्यत एव । अत एव विद्यमानास्वप्यनेकासु गीतासु इयमेव सर्वैराद्रियते । अस्याः विष्णुगीतेति नाम विहाय भगवद्गीतेति नामकथनादेव सर्ववैशिष्ट्यं सूच्यते । अत एव सर्वैरप्याचार्यैः शङ्कररामानुजादिभिः स्वस्वमतानुसारेणेयं व्याख्याताऽस्ति । परं तु शक्तिविशिष्टाद्वैतमतरीत्यैतावता कालेन केनापि व्याख्यानस्याकरणादनया दिशा व्याख्याने प्रयत्नः क्रियतेऽद्य ॥

शक्तिविशिष्टाद्वैतदर्शने हि कर्माङ्गकात् ज्ञानादेव मुक्तिरिति निरूपितम् । अत एव भगवानपि जीवननिर्वहणरूपे युद्धरङ्ग एवेदं शास्त्रमुपादिशत् । पाण्डवानां राज्यं द्यूतादिभिर्दुरुपायैर्दुर्योधनोऽपजहार । तस्य वचनानुसारेण पाण्डवाः द्वादशवर्षाणि वनवासं एकवर्षमज्ञातवासं च निरुह्य पुनरागत्य स्वराज्यं पप्रच्छुः । दुर्योधनस्तु दुराशाग्रस्तः "पञ्च ग्रामानपि नाहं दास्यामि । यदि शक्तिरस्ति युष्माकं, गृह्यतां राज्यं बलप्रदर्शनेन" इति धार्ष्ट्यादवोचत् । अन्ते गत्यन्तराभावात् पाण्डवास्तु धर्मस्वरूपिणं भगवन्तं श्रीकृष्णं शरणं ययुः । "ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः । ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम् ॥" एवं धर्मस्वरूपी श्रीकृष्णः पाण्डवपक्षे स्थित्वाऽऽश्रितवात्सल्यादर्जुनस्य सारथ्यमप्यङ्गीकृत्य धर्मसंस्थापनार्थं महद्युद्धं कारयामास । एवं तयोर्युद्धे प्रवृत्ते दुर्योधनादीनां शतानां कौरवाणां पिता धृतराष्ट्रो जात्यन्धो वृद्धः युद्धं द्रष्टुमशक्तस्तद्विषयं तदातदा ज्ञातुमियेष, प्रार्थयामास च तदुपायं श्रीव्यासमहर्षिम् । व्यासोऽपि कृपया सञ्जयमाहूय तस्मै दिव्यदृष्टिं दत्वा "प्रतिदिनं यद्युद्धरङ्गे प्रवर्तते तत्सर्वमपि त्वयाऽस्मै वक्तव्यम्" इत्यादिदेश । एवं नियुक्तं सञ्जयं धृतराष्ट्रो युद्धवार्तां श्रोतुमिच्छया पप्रच्छ ।

एवं क्रमेण भगवद्गीता आरभते । एवं ज्ञानक्रियासमन्वयमार्गानुसरणादेव व्यावहारिकानां सर्वेषामपि मान्यतमो गीतोपदेशः तथैव व्यवहारानुगुणस्य शक्तिविशिष्टाद्वैतदर्शनस्याऽतीवसम्मत इत्यभिज्ञा विश्वसन्ति । "ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः । लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥" इति खलु गीता उपदेशति । एतदनुसारेण यः हृदये निवसतेश्वरेण संयुज्य फलाभिसन्धिं विना व्यवहरति तस्य पापलेपो न सम्भवति । हृदये प्रभुर्निवसतीति यो जानाति सः स्वीयं कर्मफलं तस्मै समर्पयितुं प्रभवति । एवं फलार्पणादेव कर्म तं न बध्नाति । अयमेव कर्मयोग इति गीतायां निर्दिश्यते । अयं च योगः ज्ञानकर्मयोरुभयोरपि समप्राधान्यं निर्दिशति । शक्तिविशिष्टाद्वैतदर्शनेऽपि चित्तशक्तिविशिष्टजीवस्य चिच्छक्तिविशिष्टेन शिवेन साधनीयेऽद्वैतरूपे सामरस्ये ज्ञानक्रियासमन्वयमार्गस्य महती आवश्यकता वर्तते । जीवः यदा स्वस्मिन् विद्यमानं परशिवं ज्ञात्वा तस्मै स्वीयं सर्वमपि कर्मफलं भक्त्या समर्पयति तदानीमेव तदीया चित्तशक्तिः चिद्रूपतया परिणमते । अयमेव मुक्त्यपरनामधेयः शक्तिविकास इति तत्र परिगणितः । एवं शक्तिविशिष्टाद्वैततत्त्वं गीतायां सम्यगन्वेतीत्यनयापि दिशाऽस्य व्याख्यानेऽद्य प्रयत्नः कृतः ॥

एतद्दर्शनरीत्या अस्या व्याख्यानस्यावकाशे सत्त्वेऽपि तत्रत्यानि कानिचिदनौचित्यान्याक्षिप्य परिह्रियन्तेऽधुना—

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥

इति भगवद्गीतायां श्रीकृष्णः परमात्मैपम्यदृष्ट्या स्वीयावतारोद्देशं निरूपयति । अत्र "अहं संभवामि" इत्यादौ अस्मच्छब्दः न तावत्

भ्रूणहत्यासमं त्वघम् ॥" इति भक्तान्प्रति शङ्करवचनम् । "अहं त्वं कृष्णावतारमूर्तिमात्रवाची तादृशमानुषमूर्तेर्नेश्वरत्वात्, तस्य सर्वजगत्कारणत्वासंभवाच्च । तद्वदेव स शब्दः न तन्मूलभूतविष्णुमात्रवाची, विष्णोः केवलरक्षणमात्राधिकृतत्वेन सृष्टिप्रळयकर्तृत्वाभावेन च 'अहं कृत्स्नस्य जगतः प्रभवः प्रळयस्तथा' इत्यादौ सृष्टिप्रळयकर्तृत्वोक्तेर्विरोधप्रसंङ्गात् । अतः सृष्टिस्थितिसंहाररूपत्रिविधकार्यकर्तृणां त्रिमूर्तीनामपि मूलभूतपरशिवब्रह्मपर एवास्मच्छब्द इति निर्विवादमेतत् । अतः श्रीकृष्णः परशिवब्रह्मणोऽवतार एव । यतस्त्रिमूर्तयः परशिवस्य लीलाविनोदभूमयो दिव्यविभूतय एव । ननु तर्हि कृष्णस्य विष्ण्ववतारत्वेन प्रसिद्धिः कथमविरासीदित्याक्षेपस्सञ्जायते । विष्णुर्हि पालनानुकूलक्रियाशक्तिविशिष्टं परशिवब्रह्मैव । न तत्र कस्यापि विप्रतिपत्तिस्संभवेत् । कृष्णेनापि दुर्योधनाद्यासुरीशक्तेर्दमनद्वारा पाण्डवादिदैवीशक्त्युत्कर्षसंपादनेन जगद्रक्षणकार्यनिर्वाहात् सः विष्णोरवतार इत्यपि कथ्यते । विष्णुना तदवतारभूतेन कृष्णेन च यत्कार्यं निरूह्यते, यद्वचनं प्रोच्यते तत्सर्वं तदन्तर्यामिणा परंज्योतिस्वरूपेणामूर्तपरशिवब्रह्मणैवानुष्ठीयत इत्यनुभविनो विश्वसन्ति । ये तावत्केवलपाठकास्ते अनधिगतसाक्षात्काररूपानुभवाः परस्परं मात्सर्यासूयादिभिः हृदयं कलुषीकृत्य परमात्मरूपिणं श्रीकृष्णं दिव्यामृतरूपं तदुपदेशं च द्विषन्ति । न हि विवेकिनां त्रिमूर्तिषु तारतम्यबुद्धिस्सञ्जायेत न वा त्रिमूर्तीनां परशिवान्यत्वभावना चोत्पद्येत । तादृशतारतम्यबुद्धिरन्यत्वभावना च शास्त्रेष्वत्यन्तं निन्दिता परिदृश्यते । यथा आकरग्रन्थेषु ब्रह्माण्डपुराणे "भवानहं च विश्वात्मन् एक एव हि कारणम् । जगतोऽस्य जगत्यर्थे भेदेनावां व्यवस्थितौ ॥ त्वया यदभवद्दत्तं तद्दत्तमखिलं मया । मत्तो न भिन्नमात्मानं द्रष्टुमर्हसि शङ्कर ॥' इति शङ्करं प्रति विष्णोर्वचनम् । भविष्योत्तरपुराणे "विष्णोरन्यं तु पश्यन्ति ये मां ब्रह्मणमेव वा । कुतर्कमतयो मूढाः पच्यन्ते नरकेष्वधः ॥ ये च मूढा दुरात्मानो भिन्नं पश्यन्ति मां हरेः । ब्रह्माणं वाऽथवा, तेषां

सर्वगो देव त्वमेवाहं जनार्दन आवयोरन्तरं नास्ति शब्दैरर्थैर्जगत्पते ॥ यानि नामानि गोविन्द तव लोके महान्ति वै । तान्येव मम नामानि नात्र कार्या विचारणा ॥ त्वदुपासा जगन्नाथ सैवास्तु मम गोपते । यश्च त्वां द्वेष्टि हे देव स मां द्वेष्टि न संशयः ॥" इति महाभारते विष्णुं प्रति शङ्करवचनम् । एवं शिवविष्ण्वोरैकात्म्यं सम्यक् प्रतिपाद्यते प्रमाणग्रन्थेषु ॥

परं तु भगवद्गीता शिवांशभूतेन कृष्णेन प्रोक्तापि तदुपदेशकः कृष्णः सूत्रप्रोता दारुमयी योषेव शिवप्रेरितमेवांशयमाविष्करोति । तदीय-विश्वरूपाविष्करणसमये सः "पश्य मे योगमैश्वरम्" इति स्वान्तरङ्गे विराजमानामीश्वरमहाविभूतिमेवार्जुनाय प्रदर्शयति । "ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि चोत्तमम् ॥" इतीश्वरप्रसादसिद्धिमेवार्जुनायावश्यलभ्यामुपदिशति सः । यद्यपि क्वचित् "मन्मना भव" इत्यस्मपदं कृष्णः स्वात्मान्येव प्रयुङ्क्ते ; यज्ञफलभोक्ता स्वयमेवेति निर्दिशति ; "यत्करोषि यदश्नासि—तत्सर्वं मह्यं समर्पय" त्यार्जुनायोपदिशति च । तथापि "तच्चित्तास्तद्गतप्राणाः" इत्यनेकेषु सन्दर्भेषु तच्छब्दमेव प्रयुज्य कृष्णस्सर्वेष्वपीश्वरार्पणबुद्धिमेवोत्पादयति । यत्रास्मच्छब्दः प्रयुज्यते उपदेशवेळायां तत्र स शब्दो न हि प्राकृतिकः किन्तु पारमेश्वरीय इति मन्तव्यम् । प्रकृतिसम्बन्धी त्वहङ्कारः विश्रुत एवास्ति । भक्तानुग्रहलीलानिर्वाहाय इयमेव पराहन्ता सर्वैरप्यनुभवि-भिरुपयुज्यते । परमात्मनि ये समरसं विलीनास्ते तावत्तादृशीं स्थिति-मधिगच्छंति । कृष्णस्तावत् पराहान्तास्थितौ वर्तमानो लोकसंग्रहार्थ-मव्याजप्रेम्णा पूर्णकामोऽप्यनासक्त इव व्यवहरति । यतः कृष्णो मानवस्सन्नपि शिवयोगेन शिवभावे स्थित्वा लोकं पश्यति अतस्तस्योपदेशे अस्मच्छब्दप्रयोगे परस्परबाधो न संघटते । गीतार्थसमालोचनेनापि कृष्णस्य शिवतादात्म्यभावना हृद्गतासीदिति स्पष्टं प्रतिभाति ॥

परमेश्वरस्यापि विष्ण्ववतारभूते कृष्णे प्रीतिः एवमेव निरतिशया आसीत् । कूर्मपुराणान्तर्गतायां शिवगीतायां शिवोऽपि विष्णोर्विषये तथैव आत्मीयतया स्वीयमाशयमाविष्करोति । शिवः तत्रैवं रामायोपदिशति " ममैषा परमा मूर्तिर्नारायणसमाह्वया । सर्वभूतात्मभूतस्था शान्ता चाक्षरसंज्ञिका । तस्मादेष महायोगी मद्भक्तः पुरुषोत्तमः । अर्चनीयो नमस्कार्यः मत्प्रीतिजननाय हि ॥ " इति । एतादृशं गौरवं नारायणविषये शिवः प्रकटयति । " यो विष्णुं निन्दति सो मदनुग्रहं न लभते " इति पद्मपुराणान्तर्गतायां शिवगीतायां शिव एवोपदिशति । " नमो भगवते रुद्राय विष्णवे मृत्युर्मे पाहि " इति भगवती श्रुतिरेव शिव-केशवयोस्तादात्म्यमुपदिशति । आदित्यपुराणे विष्णुं प्रति शिववचनं सुशोभतेऽस्मिन्सदर्भे । " प्रकृतिस्त्वं सुरश्रेष्ठ पुरुषोऽहं न संशयः । त्वन्मयं मन्मयं सर्वमव्यक्तपुरुषात्मकम् ॥ " एतादृशं मधुरं बान्धव्यं सहजतया वर्तते तयोः । " प्रकृतिः परमो विष्णुः पुरुषः परमशिवः " इति कूर्मपुराणे अभिधीयते । " आ वो राजानमध्वरस्य होतारं रुद्रम्" इति श्रुतौ यज्ञपतित्वं सर्वान्तर्यामिणो महादेवस्य सर्वकारणस्य रुद्राभि-धेयस्य शिवस्यैव निर्दिष्टम् । अत एवाथर्वणिकी श्रुतिः " विश्वाधिको रुद्रो महर्षिः " इति तस्य विश्वाधिक्यं स्थापयति । " आखुस्ते रुद्र पशुस्तं जुषस्वैष ते रुद्रभागस्सह स्वस्रांबिकया " इति श्रुतौ यज्ञ-भूमौ अग्रपूजास्वीकारार्थं रुद्र एव आहूयते । अत एव कैवल्ये ' उमा-सहायं परमेश्वरं प्रभुम् ' इत्यारभ्य " स एव विष्णुस्स प्राणस्स कालोऽग्निः स चन्द्रमाः " इत्यादिना विष्ण्वादिसर्वदेवात्मकः परमशिव एवेति सम्यगुपदिष्टम् । " शब्दविशेषात् " इत्येतत्सूत्रभाष्ये " शिवो-पासनया शिवभावमापन्नस्य नारायणस्यानितरसाधारणदहरावच्छिन्नज्योति-र्लिङ्गानुसन्धानसामर्थ्यात् परमेश्वरनिष्ठाः व्यापकत्वान्तर्यामित्वादयो धर्माः नारायणेऽपि दृश्यन्ते । " इति स्पष्टं निर्दिष्टम् । " नारायणात्परो भक्तो

मम नास्ति वरानने । भार्यात्वं वृषभत्वं च बाणत्वमगमत्पुरा ॥ " इति स्कान्दे शिववचनं विराजते । द्रोणपर्वण्यश्वत्थामानं प्रति शिववचनमेवं वर्तते । " अहं यथावदाराध्यः कृष्णेनाक्लिष्टकर्मणा । तस्मादिष्टतमः कृष्णादन्यो मम न विद्यते ॥ " शिवविष्ण्वोस्सम्बन्ध एवं विलसति । सौरसंहिता तावत् " शिवस्य परतत्त्वार्थं स्वयं ज्ञात्वा शिवस्तथा । उवाच विष्णवे ' विष्णुः पद्मगर्भाय प्रोक्तवान् ॥ " इत्यादिना क्रमेण शिवविष्ण्वोरुपास्योपासकभावं गुरुशिष्यभावं च सम्यगुपदिशति । व्यासभुजस्तम्भनानन्तरं व्यासं प्रति विष्णुवचनं स्कान्दे " अहमेव जगत्कर्ता मम कर्ता महेश्वरः " एवं प्रवर्तते । " वैदिकस्सर्वकर्माणि शिवमुद्दिश्य कारयेत् " इति शैवपुराणे स्पष्टं विधीयते । श्राद्धप्रारंभे " ईशानः पितृरूपेण महादेवो महेश्वरः । प्रियतां भगवानीशः परमात्मा सदाशिवः " इति शिवप्रीतिकरत्वेन शिवाराधनरूपं गुरुजङ्गमसन्तर्पणात्मकं श्राद्धकर्म वैदिकैराचरणीयमित्युपदिष्टम् । अत एव ' वन्दे मुकुन्दप्रियम् ' इति स्कान्दे शिवस्य विष्णुवल्लभत्वं तत्प्रियत्वं च यन्निर्दिष्टम् तत्समञ्जसमेव भाति । " शिवकेशवसंभूतं कलये कालभैरवम् " इति शक्तिपुराणे कालभैरवः शिवकेशवयोः प्रियपुत्रत्वेन निर्दिश्यते । एवं शिवनारायणयोरैक्यबोधकानि वाक्यानि परश्शतानि सन्ति ॥

न केवलं कृष्णोऽमूर्तशिवतत्त्वबोधक एव परं तु प्राक्तनसंस्कारानुरोधेन प्रेरितः शैवमहर्षिवर्येणोपमन्युनानुगृहीतशिवदीक्षासंस्कारः मूर्तशिवपूजामहत्त्वमपि सम्यगजानात् । किं नाम शिवाराधनमिति तेन पृष्टः सः महर्षिरेवमुत्तरयति " सर्वाभयाप्रदानं च सर्वानुग्रहणं तथा । सर्वोपकारकरणं शिवस्याराधनं विदुः ॥ " इति । शिवतत्त्वं स्वस्मै बोधयितुं श्रीकृष्णः उपमन्युमहर्षिं प्रार्थयामासेति वायुसंहितायां " भगवन् श्रोतुमिच्छामि शिवेन परिभाषितम् । वेदसारं शिवज्ञानं स्वाश्रितानां विमुक्तये ॥ " (अध्या.

४०–१) इत्यभिधीयते। उपमन्युमहर्षिः श्रीकृष्णाय शिवदीक्षां ददाविति कूर्मपुराणे अभिधीयते। "एवमुक्त्वा ददौ ज्ञानमुपमन्युर्महामुनिः। व्रतं पाशुपतं योगं कृष्णायाक्लिष्टकर्मणे। स तेन मुनिवर्येण व्याहृतो मधुसूदनः। तत्रैव तपसा देवं रुद्रमाराधयत्प्रभुम्॥" इति। कृष्णेनार्जुनेन च कृतं शिवलिङ्गार्चनं द्रोणपर्वणि निर्दिश्यते। शत्रुपक्षीययोस्तयोः शिव–लिङ्गार्चनादेव अश्वत्थाम्नः प्रयत्नः पराहत इति तत्र स्पष्टमुच्यते। अत्र कृष्णाय अक्लिष्टकर्मेति विशेषणमन्वर्थं दृश्यते। सः सर्वमपि कर्म क्लेशं विनैव साधयितुं प्राभवदित्यर्थोऽनेन द्योत्यते। अतश्चायमादर्शभूतः कर्म–योगी आसीदेवेति ध्वन्यते। पराशक्तेः पुरुषरूपोऽयं कृष्णोऽत एव न केवलं शिवेन किन्तु सर्वैरपि देवैर्विशेषतः प्रशस्यते। एवं च रक्षणरूप-जगद्व्यापारनिर्वहणेऽयमतीव निपुण आसीदित्ययमंशो महाभारतेऽनेकवार-मनूद्यते। यतस्सः कर्मयोगी आसीदत एव तत्त्वज्ञान्यपि सन् तत्त्वोपदेशाय शक्तश्च बभूव। अत एवायं परमशिवभक्तः कृष्णः शिवस्य हृदयरूपिणी प्राणशक्तिरेवासीदिति निर्विवादमेतत्। एतादृश्याः विशालभावनायाः संस्कारजन्यत्वात् कृष्णश्शिवानुग्रहेण लब्धसकलैश्वर्यः अर्जुनसदृशं समग्रमपि लोकं कल्याणबुद्ध्यैवापश्यत्। सर्वलोकहिते रतिस्तस्मिन्सहज-तयाविरासीत्। "सर्वाकारे चिदानन्दे सत्यरूपिणि शाश्वते। परा-काशमये तस्मिन् परब्रह्मणि निर्मले। एकीभावमुपेतानां योगिनां परमात्म-नाम्॥" इति रेणुकाचार्यवर्यैर्निर्दिष्टेषु शिवयोगिसार्वभौमेष्वन्यतमः श्रीकृष्णः परमात्मपदेनैव व्यवहारयोग्यस्सञ्जातः। भेदशङ्काविवर्जिते सर्वात्मनि निराकारे परे तत्त्वे विलीय निर्विकल्पतया व्योमवत्स्थितः कृष्णः कस्य वा ज्योतिर्मयः परमात्मा न भवेत्? स्वप्रकाशे निरन्तरे चिदाकारे ज्योतिर्लिङ्गे एकीभावमुपेतो भगवान् श्रीकृष्णः कस्य वा मान्यो न भवेत्? एवं परब्रह्मणि विलीनस्स भगवान् साक्षात्कृतधर्मत्वात् त्रिगुणातीतत्वाच्च सर्वमान्यः संभूतः। परशिवं विदित्वा तस्मिन् समरसं विलीनो योगी परशिव एव

संपद्यत इति सर्वप्रमाणभूता श्रुतिरेव भगवती स्पष्टमुपदिशति । यतः श्रीकृष्णस्स्वयमनुभूतगुहेश्वरस्तदीयलीलानाटकसूत्रधारी आसीदत एवेश्वरभावे स्थित्वेश्वरतादात्म्येनैवोपदिदेश । न तत्र काप्यनुपपत्तिः । ईश्वरदर्शनात् सर्वेऽप्येकजातीया एव भवन्ति । सा च जातिराध्यात्मिकेति विश्रुता । इयं च जातिर्दीक्षाग्निदग्धाऽभिनवा अतिवर्णाश्रमेति परिगण्यते । अस्यां असाधारणायां जातौ पुनर्जातास्ते महात्मान अद्भुतां पारमेश्वरीं शक्तिमधिगतवन्तः लोककल्याणापेक्षयैव सर्वदा जागृता वर्तन्ते । एतादृशासु असाधारणासु महाव्यक्तिष्वन्यतमो हि कृष्णो लोकहितार्थमेव दिव्यममूर्तं तत्त्वमुपादिशत् । एतच्च तत्त्वमुपनिषत्सागरादुद्धृतं दिव्यामृतमेव । एतत्पानेन मानवो देवस्संपद्यते ; मर्त्योऽपि अमृतो जायते ; त्रिगुणबद्धः पशुसदृशो जीवस्त्रिगुणातीत ईश्वरस्संपद्यते । एवमध्यात्मसारभूतायाः श्रीकृष्णगीतायाः ज्ञानक्रियासमन्वयरूपत्वात् तत्प्रतिपादकं भाष्यमत्यावश्यकमिति सर्वे पण्डितवर्याः बहोः कालादारभ्य विश्वसन्तः प्रयतमानाश्च वर्तन्त इति प्रमोदस्थानमेतत् ॥

दिव्योपदेशः येन केनापि पुंसा यया कयापि स्त्रिया वा समागच्छतु । सोऽवश्यं वर्धिष्णुभिर्भक्त्या परिग्रहीतव्या । "मात्सर्यमुत्सार्य विचार्य कार्यं आर्यास्समर्यादमुदाहरन्तु" इति खलु नीतिमतामादर्शो मार्गः प्रसरति । तमेव मार्गमनुसरन्तो वयं भगवता दिव्यमूर्तरूपिणा कृष्ण–परमात्मना समुपदिष्टमूर्तपरशिवतत्त्वं तत्प्राप्त्यनुकूलमूर्तोपासनरहस्यं च सम्यक् जानीम । तमसावृतामस्मत्प्रकृतिं सांत्वयितुं भगवदुपदेशानुरोधेन यथा–कथंचित् प्रयतामहै । आसुरीसंपद्भरितामस्मत्प्रकृतिं दैवीसंपदा भूषयितुं यथाशक्ति यथामति च साधयाम । कामाग्निदग्धा वयं भगवद्विहितया दिव्यामृतवृष्ट्या सम्यक्सिञ्चिताः तृषाश्शान्ताश्च भवाम । 'नास्ति बुद्धि–रयुक्तस्य न चायुक्तस्य भावना । न चाभावयतः शांतिरशांतस्य कुतस्सुखम् ॥'

एवं गीतायां भगवानेवोपदिशति । "तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन" इति योगनिष्ठां च स एवोपदिशति । मानवैस्सर्वैरपि सर्वदा शिवयोगनिष्ठैरेव भवितव्यम् । व्यवहारमग्नैरपि सर्वैः स्वीयहृदये विराजमानो गुहेश्वरः सर्वदा निर्मलेन मनसा परिचिन्तनीयः । अयमेव योग इति गीता निर्दिशति । एतादृशयोगयुक्ताः पुरुषाः स्त्रियो वा व्यवहारनिरता अपि गुणदोषैर्न बाध्यन्ते । एतादृशेषु न कदापि कर्म लिप्यते। एवं निर्लिप्तं जीवनं निर्वहन् परमवैराग्यशाली चिदाकाशे विहरन्नात्मारामः श्रीकृष्णः कथं वा शक्तिविकासरूपशिवयोगलक्षणं नाधिगच्छेत् ? वैभवेन गोपिकास्त्रीभिर्विहरन्नेव परमवैराग्यसुखमनुभवन् सः उभयोरपि तयोरावश्यकतां सर्वेभ्यः प्रदर्शनाय कथं वा न प्रभवेत् ? तदर्थमेव निर्लिप्ततया यः सर्वत्र सञ्चचार स तादृशो भगवान् वासुदेवः पराशक्तिरूपः कस्मै शिवानुग्रहं न दद्यात् ? शिवमये जगत्यव्यक्ततया निवसतः शिवस्य प्रकाशनाय शिवभक्ताग्रगण्येन कृष्णपरमात्मना प्रदर्शितो दिव्यो मार्गः कस्मै साधकाय न स्वदेत ? अतो भगवद्गीता कृष्णप्रोक्तापि न केवलं वैष्णवानां, शैवानां वा किन्तु वीरशैवानामप्यतीव मान्या विराजत इति विश्वजनीनमेतत् ॥

एतादृश्या आप्तवाक्यरूपायाः परमात्मनैव स्वतः प्रोक्तायाः प्रमाणभूतायाः भगवद्गीतायाः भावविवरणरूपं वीरशैवभाष्यं अनिवार्यमिति प्रतिभाति । प्रस्थानत्रयान्तर्भूताया गीतायाः ज्ञानक्रियासमन्वयबोधकं भाष्यं कं वा जीवं नोद्धारयेत् ? जीवितसमय एव देहाभिमानं परित्यज्य देहस्थं परमेश्वरं प्रस्थातुं येऽभिलषन्ति तेषां सर्वेषामपि ज्ञानकर्मसमन्वय आवश्यक इत्यनुभविनो वदन्ति । तथा प्रस्थातुकामानां सर्वेषामपि साधकानां गीताभाष्यं विश्रान्त्यावहः प्रकरणग्रन्थो भवितुमर्हतीत्यभियुक्तोक्त्यात्र प्रवर्तनं युज्यत एव । दहराकाशे चिदानन्दमये रम-

माणस्य शिवभक्तिसम्पन्नस्य कृष्णस्य ऐश्वरो योगः यदि न प्रकाश्येत तदा महता तमसा आवृता भवेम भगवदंशभूता वयं सर्वेऽपि । हृदये विराजमाने प्राणलिङ्गे सुषुप्त्यानन्दमनुभवन् कृष्णो यद्दिव्यतत्त्वमुपदिशति तद्यदि न प्रकाश्येत तदाऽस्मत्सङ्कोचावस्था न हीयेत । तथैवास्माकं सङ्कोचप्रकृतिर्न विकासमधिगच्छेत् । तथा च वयं सद्रूपं सर्वव्यापि पारमैश्वर्यमनुभवितुं न पारयेम । सन्नपि हृदयप्रकाशो न कदाप्यस्माकं जीवने स्फुरेत् । निष्कळङ्कज्ञानस्वरूपा अपि वयं विस्मृत्या अज्ञानान्धकारे मोहान्धा इव परितपेम । एतावान्महाननर्थस्सञ्जायेत यदि परमशिवयोगिनः श्रीकृष्णपरमात्मनो दिव्यसन्देशो नास्माकं हृदयं प्रविशेत् । अतो निर्मत्सरया दृष्ट्या गीतार्थविवरणं विवेकिभिरनुसन्धेयम् । विनैव वर्णाश्रमलिङ्गवयोभेदं सर्वेषामपि हृदयविकासाय प्रयतमानो गीताचार्यः परमयोगीश्वरो भगवान् कृष्णः कस्मै साधकाय न रोचेत ? अत एतद्भाष्यरचनायां महादेवप्रेरणेन यथामति प्रयतनं युज्यत एव । नो चेदन्धेनैव नीयमाना यथान्धास्तथा मोहतमसि पतित्वा वयं जन्मसार्थक्यं नाधिगच्छेम । मानवजीवने तावत् कृतकृत्यता प्रतिनिमिषं साधनीयैव । एतच्च साधनं ईश्वरानुग्रहाधीनमेव । ईश्वरानुग्रहोऽपि हृदयवैशाल्यमात्मविश्वासं चावलम्बते । एवमनुगृहीता यदि वयं न स्याम तदा प्रकृतिरस्मान्नियुञ्जीत । एवं प्रकृतिबद्धा वयं पशव इव यदि भोगिनो भवेम तदा योगानन्दस्य गन्धोऽपि न स्यादस्मासु । अतस्त्यागभोगयोगसमन्वयाख्यो जीवनमार्ग एवावश्यमस्माभिराश्रयणीयः । " शक्तो दयालुः प्रभुराश्रयार्हः " इति खलु लौकिका अभिप्रयंति । कृष्णस्त्वेतदुभयलक्षणसंपन्न एव वर्तते । अतस्समन्वयजीवननिर्वाहाय कृष्णगीतैवास्माकं दिव्यसंजीविनी भवितुमर्हति । अतस्तदर्थविवरणरूपं भाष्यं चिराभिलिषितमधुना भगवत्कृपयाऽविर्भूतमिति प्रमोदस्थानमेतत् ॥

स्वीयकर्मानुसारेण देहमधिगतवात् जीवो जातिमतकुलगोत्रसङ्कोचं

विहाय स्वस्वरूपज्ञानेन प्रकृतिदत्तां परिमितिं हित्वा स्वान्तर्वर्तिनं गुहेश्वरमन्तर्बहिश्चोपास्य तस्मिन्नेव समरसं विलीय लोके व्यवहरेत्। अयमेव भगवद्गीतायाः सारसन्देशः। एतादृशो दिव्यसन्देशः कस्य अप्रियो भवेत्। तत्र वर्णाश्रमयोर्न्यूनाधिक्यगणनायाः अवकाशः कुत्र वर्तेत? आत्मानन्दानुभवायैव जाताः पुरुषाः स्त्रियो वा यदि तादृशमनुभवं न लभेरन् तर्हि तज्जन्मसार्थक्यं कथमधिगम्येत? ये त्वात्मानन्दं नानुभवन्तीह जन्मनि ते तावत्सर्वदा भेददृष्टय एव वर्तेरन्। नहि तैरात्मकल्याणं कदापि साध्येत। लोककल्याणसाधनं तावद्दूरापास्तमेव। ते तावत् स्वेषामेव घातका भवेयुः। तादृशस्तु भगवद्गीतार्थं ज्ञातुं न पारयेयुः। साक्षात्कृतधर्मसु ज्ञानिषु ये वर्णाश्रमभेदं न गणयन्ति त एव त्रिगुणात्मकात् पाशात् मुक्ता भवेयुः। तत्त्वदर्शिनो ज्ञानिनः दिक्कालाद्यनवच्छिन्नाः अतिवर्णाश्रमिणः परंज्योतिस्वरूपतया विराजन्ते। एतादृशाः परमविरक्ताः सुखदुःखेषु विगतस्पृहाः निर्लिप्तवर्तनेन आत्मारामास्सन्त एव लोककल्याणमद्भुतया रीत्या अनायायासेनैव निर्वहन्तो जगदादर्शास्संपद्यन्ते। एते शुद्धसत्त्वा वेदांतविचारविनिश्चितार्था निरञ्जनस्थितौ आत्मानन्दमनुभवन्त एव त्रिगुणबद्धेष्वपि मानवेष्वव्याजप्रेम्णा हृदयविकासमुत्पादयंति। सर्वभूतहिते रता एते महानुभावाः परमेश्वरसाक्षात्कारेण परमेश्वरा एव सन्तः सर्वेषामाकर्षकत्वात् गुरुशब्दवाच्यास्सदुपदेशेन सर्वेषां श्रेयस्साधनाय सर्वत्र सञ्चरंतश्चरजङ्गमाः, निरञ्जनमूर्तयः, शिवयोगिन इति च व्यवह्रियंते॥

एवं गुरुचररूपधारी परमेश्वरः सर्वेषा साधकानां हितरक्षणाय सर्वत्र निर्लिप्ततया निवसन् सर्वं कर्म लीलयैव निर्वहन् कर्मयोगस्य दिव्यमादर्शं सर्वेभ्यः प्रदातुं कृष्णमूर्तेस्सकाशात् आध्यात्मतत्त्वं यदुपदिदेश तदेव भगवद्गीतायां आचन्द्रार्कतया विराजते। तदीयो दिव्योपदेशः कृष्णरूपेण मानवेनाभिहित इति भावनयैव यस्तं नानुमोदते सः न कदाप्याध्यात्मसुख-

स्पर्शमपि लभेत । एतादृशदिव्यतत्त्वबोधकः श्रीकृष्णः केषां मानसीं दैहिकीं च व्यथां न परिहरेत् ? 'गुणान् रुन्धे इति गुरुः' इति व्युत्पत्त्या क्रियासारोक्तदिशा सत्त्वरजस्तमोरूपान् त्रिगुणानतीत्य निस्त्रैगुण्यस्थितौ निर्लिप्ततया विराजमानः परमयोगीश्वरः श्रीकृष्णः कस्य न प्रियो भवेत् ? अनासक्ततया सर्वं व्यवहारं महाभारतं युद्धं च निर्वहन्तं कृष्णरूपमादर्शकर्मयोगिनं को विवेकी न संभावयेत् ? परं तु गीतोपदेशः न केवलं पारिभाषिकः किन्तु सार्वजनिकव्यवहारविषय एव । तत्रत्यास्सर्वे विचाराः दैनन्दिनवार्तामेव प्रतिपादयंति । धृतराष्ट्रपुत्रास्तावत् दुरभिमानदुरहङ्कारद्योतका रजस्तमोगुणप्रचुराः आसुरीसंपदाविष्टा दुर्विचारा इति परिगण्यन्ते । तथैव पाण्डुपुत्रास्तावत् ज्ञानक्रियासमन्वयसूचकास्सत्त्वप्रधानाः दैवीसंपद्भरितास्सद्विचारा इति संभाव्यन्ते । तथैव श्रीकृष्णो निराकारपरशिवब्रह्मणस्साकारमूर्तिरित्येव सन्मान्यते । कृष्णरूपस्येश्वरस्य सङ्कल्पेन सद्विचाराणां दुर्विचारैस्सह प्रवृत्तं युद्धमेव महाभारतमित्यनुभविभिर्भाव्यते । ईश्वरानुग्रहेण दुर्विचाराः कौरवाः पराजयं प्राप्नुवन्ति ; सद्विचारास्तु पाण्डवा दिग्विजयं प्राप्य नित्यसुखिनः संपद्यन्ते ॥

गीतानुसारेण अयं सच्छब्दः परमात्मनि, शुद्धजीवे, तदीयप्रशस्तकर्मणि च प्रयुज्यते । कृष्णपरमात्मनि सच्छब्दं प्रयोक्तुं न कस्यापि विरोधो वर्तते । तथैवार्जुनरूपे शुद्धजीवेऽपि सच्छब्दप्रयोगो युज्यते । तेनैव क्रमेण धर्मस्थापनाय ईश्वरोक्तेन मार्गेण परब्रह्मान्वेषणरूपं महाभारतं युद्धं निमित्तमात्रं निर्वहता अर्जुनरूपेण शुद्धजीवेन निर्वर्त्यमानं अधर्मनिर्मूलनरूपं धर्मस्थिरीकरणरूपं च प्रशस्तं कर्म सच्छब्देन व्यवह्रियते । एतादृशेषु सद्विचारेषु जिज्ञासामुत्पादयन्तीयं श्रीकृष्णगीता तदन्तर्यामिपरशिवब्रह्मोपदेशरूपत्वादेव भगवद्गीतेति निराकारतत्त्वबोधकेन पवित्रनाम्ना व्यवह्रियमाणा सर्वसाधकानां मनोमंदिरमधिवसति । परमेश्वरप्रसादलब्धाया एतादृश्याः पवित्रगीताया वीरशैवमतपरं भाष्यं एतावत्पर्यंतं नाविरासीदिति विषादस्थानमेतत् ॥

किं नाम वीरशैवमतस्वरूपम् ? तन्मतसम्मतस्यास्य भाष्यस्य का

नामावश्यकता ? इत्ययं प्रश्नोऽत्र समालोच्यः। वीरशैवमतं तावत् जीव-ब्रह्मणोर्बद्धावस्थायां स्वाभाविकं द्वैतं, बुद्धावस्थायां स्वाभाविकमद्वैतं चानुमोदते। अत एव "द्वैताद्वैतमते शुद्धे वीरशैवैकसंज्ञके। सर्वश्रुतिसमन्वयः" इति श्रीशैलपीठाध्यक्षैर्जगद्गुरुभिः श्रीपतिपण्डिताराध्यैर्यदुक्तं तत्समञ्जसमेव एवं च द्वैताद्वैतबोधकयोरुभयोरपि श्रुत्योस्समन्वयेनेदं मतं समन्वयाख्यया सर्वत्र विश्रुतम्। श्रुत्युक्तो जीवेश्वरयोर्भेदः सहज एवेत्यस्मिन्मते परिगण्यते। न तत्रोपाधिकल्पना युज्यते। "ज्ञाऽज्ञौ द्वावजावीशानीशौ" "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिस्वजाते" इत्याद्याः श्रुतयः, "गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्" इत्यादीनि ब्रह्मसूत्राणि च जीवेश्वरभेदं सहजतया स्पष्टमेवोपदिशंति न त्वौपाधिकतया तं सूचयंति। अतो वीरशैव-मतं जीवेश्वरभेदं स्वाभाविकमित्यङ्गीकृत्य वैदिकविश्वासं साधयामास। तथैव 'तत्त्वमसि', 'अयमात्मा ब्रह्म' 'सर्वो ह्येष रुद्रः' इत्याद्याः श्रुतयः जीवेश्वरयोरैक्यरूपं सामरस्यापरनामधेयमद्वैतं बोधयंति। तदपि वीरशैव-मते सम्यगनुस्रियते। शिवांशभूतो जीवः शिवाद्भिन्नोऽपि निरन्तरं शिव–मुपास्य स्वीयं भेदं क्रमशः परिहाय स्वांशिनि शिवे विलीनो भवति। अयमेव विलयः आत्यन्तिकपाशनिवृत्त्या जीवेश्वरसंयोगरूपं सामरस्यं साधयति। इदमेवैक्यसुखं निरञ्जनाख्यं सामरस्यमित्यनुभविनो वदंति। यो गुरुणा दीक्षासंस्कारमधिगम्य तल्लिङ्गानुभवं जङ्गमेन च वर्धयित्वा लिङ्गनिष्ठो भवेत् स एव अङ्गशब्दवाच्यः संपद्यते। अं परमात्मानं गच्छतीत्यङ्गम्। परमात्मनि समरसतया विलीनो भवितुं प्रभवति तादृशः सुसंस्कृतो जीवः। अयं वीरशैवमते अङ्गमित्युच्यते। तदानुकूल्यायैव तदीयहृदये विराजमान ईश्वरोऽपि लिङ्गशब्दवाच्यो भवति। "ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति" इत्यत्रोपदिष्ट एवेश्वरो वीरशैवमते प्राणवत्प्रियमिष्ठलिङ्गमित्यभिधीयते। अङ्गना-मको जीवः निरन्तरोपासनद्वारा ईश्वरानुग्रहेण हृदयविकासमधिगच्छति। तादृशे निर्मले ज्योतिर्मये हृदये समरसं विलीनो जीवः ईश्वरानन्दमनुभवन्नेव

लोकव्यवहारानपि निर्लिप्ततया निर्वोढुं प्रभवति । इदमेव लिङ्गाङ्गसामरस्यं भगवद्गीतायां जीवेश्वरैक्यमिति निर्दिश्यते । एवं नित्यानन्दरूपमुक्तिसाधकत्वादेव भगवद्गीता प्रस्थानत्रये प्रख्याततया परिगणिता विराजते । एतादृशस्य गीताप्रस्थानस्य सर्वश्रुतिसमन्वयप्रकारेण, ज्ञानक्रियासमन्वयात्मकेन मार्गेण च कालभेदेनावस्थाभेदेन भेदाभेदयोरुभयोरपि सत्यत्वव्यवस्थापकं सर्वमतस्समतं भाष्यं महता कालेन पण्डितवर्यैर्महास्वामिभिर्महाजनैश्च निरीक्ष्यमाणमासीत् । तदेवेदमद्य समागतमित्यात्मविश्वासेन सहृदयेषु विज्ञाप्यते ॥

न केवलं भेदाभेदसमन्वयात्मकमेवेदं भाष्यं किंतु परशिवब्रह्मस्वरूपनिर्णयेऽपि समन्वयबोधकमित्यपरं प्रमोदस्थानमेतत् । श्रुतौ तावत् परशिव–ब्रह्म क्वचित्सगुणं, क्वचिन्निर्गुणं, क्वचित्साकारं, क्वचिन्निराकारं, क्वचित्सविशेषं, क्वचिन्निर्विशेषं इति बहुधा प्रतिपादनात् परस्परविरोध इव दृश्यते । सर्वैः प्रमाणतयाभ्युपगतयां श्रुतौ एतादृशो विरोधो न कदापि युज्यते । अतश्च अधिकारिभेदेनैतादृश्यो विप्रतिपत्तयः समन्वेतव्याः । एतदर्थमेव समन्वयाधिकरणं प्रवृत्तं सूत्रप्रस्थाने । नो चेत् सर्वसंप्रतिपन्नायाः श्रुतेः प्रामाण्यं व्याहन्येत । वीरशैवमतं तावत् परमात्मनि मूर्तममूर्तं चोभयं रूपमङ्गीकृत्य सर्वश्रुतिसमन्वयं साधयति । अद्वैतमते तावत् परमात्मनः अमूर्तत्वमात्रं परमार्थतयाङ्गीक्रियते । द्वैतमते विशिष्टाद्वैतमते च परमात्मनो मूर्तत्वमात्रमभ्युपगम्यते । श्रुतिस्तु " द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तमेव च " इति तस्योभयमपि रूपं सत्यतयैव निर्वक्ति । अतो वीरशैवमतं मन्दाधिकारिभ्यः परमात्मनो मूर्तरूपं, उत्तमाधिकारिभ्यश्चामूर्तरूपं च आवश्यकमित्यङ्गीकरोति । अयं चाङ्गीकारः परमात्मनः शक्तिवैचित्र्यमेवावलंबते । शक्तिसंपर्कं विना परमात्मन्येतादृशः समन्वयो न संघटते । परमात्मनः शक्तिसंकोचावस्थायां निर्गुणश्रुतिं निर्विशेषश्रुतिं च समन्वेतुं सुशकं भवेत् । तथैव सगुणश्रुतिं सविशेषश्रुतिं च परमात्मनः शक्तिविकासावस्थायां समन्वेतुं सुकरं भवेत् । अद्वैतमते तावदेतादृशस्य समन्वयस्यावकाश एव नास्ति । परमात्मना

निर्वर्त्यमानं सत्यं जगद्व्यापारमपलपितुमनुभवविरोधः प्रसज्येत । सत्यं वस्तु न कदापि मिथ्याभवितुमर्हति । जीवेन देहे निर्वर्त्यमानं पूजादिकमपि मिथ्येति वक्तुं न शक्यते । सर्वं व्यवहारं यथार्थतया निर्वहन् मानवो यदि तं केवल-व्यावहारिकमिति यदि भावयेत् तदा तस्य बुद्धौ यत्कञ्चित् वैपरीत्यं संभाव्य-मेव । अतः द्वैतभावनया यद्यक्रियते तत्सर्वमपि यथार्थमेवेति ग्राह्यम् । एवं द्वैतस्यापि सत्यत्वाङ्गीकारः शक्तिवैशिष्ट्यं विना न संघटत एव । यतः शिव एव जीवरूपतया परिणमते एतस्यां परिणामावस्थायां शिवस्याद्भुतायां निरर्गळ-शक्तौ यः कश्चन सङ्कोचः अद्वैतिभिरप्यवश्यमभ्युपगम्य एव । जीवः शिवांशस्सन्नपि शक्तिसङ्कोचेनैव याथार्थ्येन मोहं गतस्संसारचक्रे परिभ्रमन् वर्तते । एतस्यामवस्थायां तं परब्रह्मैवेति को वा विवेकी वदेत् । तथैव 'सः न कदापि परब्रह्म भवितुमर्हति' इत्यपि न कोऽपि वदेत् ; यतः स परमात्मनस्संबद्ध एव वर्तते ; अपि तु परमात्मनिष्ठया मायाशक्त्या सहजतया विभिन्नोऽविवेकेन परमात्मानं स्वबन्धुं विस्मृत्य स्वतन्त्रतया स्वयमेव व्यवहरति । तादृशं जीवं ब्रह्मैवेति, तथैव न ब्रह्मेति च वक्तुं न शक्यते । अत एव तस्य बद्धावस्थायां जीवभावः सत्यतयैवाङ्गीकार्यः । स एव विवेकदशायां स्वीय-बन्धोरानन्दमयस्य परमात्मनः पुर्णपरिचयेन तस्मिन् समरसं विलीय शक्तिविकास-मधिगच्छति । अयं च शक्तिविकासो जीवस्य बुद्धावस्थैव । एवं शक्ति-सङ्कोचविकासाङ्गीकारेणैव जीवपरमात्मव्यवहारः सुशको भवेत् । शिवशक्तेः सङ्कोचावस्थैव जीवभावः, तद्विकासावस्थैव शिवभाव इत्यभ्युपगमेनैव व्यवहारः समन्वेतीति शास्त्रमपि सफलं भवेत् । शक्तिसङ्कोचेन जीवस्सन्नपि शक्तिविकासेनैककाल एव शिवभावेऽपि यदि परमशिवो विराजते तदानीमेव तस्य जगतपतित्वं प्रभुत्वं च सिद्ध्येत । एवं परमात्मनि शक्तिवैशिष्ट्यस्या-भ्युपगमः सर्वानुभवसिद्धः शास्त्रप्रमाणगम्यश्च । अत एव वीरशैवमते शक्ति-विशिष्टाद्वैतमेव सिद्धान्त इति जगद्गुरुभिः श्रीरेणुकाद्याचार्यैरल्लमादिशरणैश्च स्पष्ट प्रतिपादितम् । शक्तिविशिष्टाद्वैतमते शिवजीवयोर्यस्संबन्ध उपवर्ण्यते

स एव वीरशैवमतेऽपि यथार्थतया निर्दिश्यते ॥

इदमेव शक्तिवैशिष्ट्यं निमित्तीकृत्य परमात्मनि श्रुतिसमन्वयः शिवागमेष्वपि साध्यते । " मूर्तामूर्तात्मकोऽनन्तः प्रपञ्चातीतवैभवः । निष्कलङ्को निराधारः निर्लिप्तः शिव उच्यते । अनन्तानन्तकल्याणगुणैकघन ईश्वरः । शिव इत्युच्यते सद्भिः शिवतत्त्वार्थवेदिभिः ॥ " इति स्मृतौ शिवशब्दवाच्यं परब्रह्म उभयलिङ्गमिति श्रीकरभाष्ये उभयलिङ्गाधिकरणे श्रीपतिपण्डिताराध्यैः व्याख्यातम् । " उपस्थितेऽतस्तद्वचनात् " (३-३-४०) इत्येतत्सूत्रभाष्ये " सर्ववेदान्तमुख्यार्थवेदिभिः रेवणसिद्धमरुळसिद्धोद्भटाराध्यवेमाराध्यादिभिः सगुणश्रुतीनां सर्वासां शक्तिविकासपरत्वं, निर्गुणश्रुतीनां शक्तिसङ्कोचविषयत्वमिति व्यवस्था निर्णीता " इत्यभिधीयते । " लोकवत्तु लीला कैवल्यं " इत्यस्मिन्सूत्रे परब्रह्मणः शिवस्य शक्तिप्राचुर्यतया सृष्ट्युन्मुखस्थितौ लीलाश्रयत्वं संहारानन्तरं पुनस्सृष्टिपर्यंतं स्वेच्छया शक्तिसङ्कोचत्वेन केवलत्वमुपदिष्टमिति श्रीकरभाष्ये कथ्यते । निरञ्जनजङ्गमपुङ्गवेन अल्लमप्रभुदेवेनापि " लीलेयादोडे उमापति, लीले तप्पिदोडे स्वयंभु " इत्यादिना एकस्मिन्नेव परमात्मनि सृष्टिकाले भक्तानुग्रहलीलावस्था, प्रळयकाले स्वयंभ्ववस्था च संभवत इति मूर्तामूर्तोभयस्थितिसमन्वयः स्पष्टं निर्दिश्यते । न केवलं सृष्टिकाले किन्तु सृष्टेः अनन्तरमपि परमात्मनो जीवावस्थायां शक्तिसंकोचः भक्तानुग्रहलीलानिर्वाहाय शक्तिविकासश्चावश्यमभ्युपगन्तव्यः । एवं सर्वश्रुतिसमन्वयसाधनेन वीरशैव-मतं शक्तिविशिष्टाद्वैतदर्शनमभ्युपगम्य सर्वमतसाधारण्येन सर्वेषां च साध-कानां श्रेयोवहत्वेन सर्वाभिलषितं सत् विराजते । एतन्मतसम्मतस्समन्वयमार्गो भगवद्गीतायां सङ्गच्छत इति हि निर्विवादम् । त्रिमूर्त्यन्तर्गतस्य तु अमूर्तपरशिवे सामरस्यं वस्तुतो विद्यत एव । तद्बोधिका समन्वयदृष्टिरेव भगवद्गीताया-मनूद्यते । विष्णोरवतारभूतः कृष्णः शिवतादात्म्येनैव शिवतत्त्वमुपदिशति । एतत्पठनेन मूर्तोपासकास्सर्वेऽपि तत्तन्मूर्तिद्वारा अमूर्तपरमशिवानुग्रहं लब्ध्वा देहरूपे देवालये सर्वत्रावृतं मलदोषं दूरीकृत्य निर्मलास्सञ्जायन्त

इत्याश्वासनं भगवद्गीता सर्वेभ्यस्साधकेभ्यो ददाति । निर्मला एव साधकाः योगमार्गेण शिरसि हृदये भ्रूमध्ये च विराजमानेन भावप्राणेष्टलिङ्गरूपेण चिदात्मकेनेश्वरेण सम्यग्विलीय निर्लिप्ततया व्यवहरन्तः सर्वानपि जीवाना-त्मीयतया प्रीणयेयुः । एतादृशी आत्मौपम्यदृष्टिरेव भवरोगपरिहारकं भैषज्यम् । एतदुपयोगेन लब्धमनःप्रसादास्साधकाः नित्यतृप्ताश्शान्ताश्च भवन्ति । एवं भगवद्गीतायां विश्वजनीनमाशयमाविष्कुर्वदिदं वीरशैवभाष्यं न केवलं वीर-शैवानां किन्तु सर्वेषामाध्यात्मजीविनां स्वान्तर्गतमहादेवप्रकाशनाय प्रभवेत् ॥

जात्यन्धो धृतराष्ट्रः मनोनैर्मल्येनेश्वरानुग्रहं लब्ध्वा तत्प्रसादाच्च ज्ञान-नेत्रं यथाधिगच्छत् तथा अभिमानबद्धा अपि जीवाः अज्ञानान्धास्सन्तोऽपि भगवद्गीतावलोकनेन ज्ञानाग्निदग्धकर्माणस्समदर्शिनो भवन्त्येव । वस्तुतो विचार्यमाणे कुरुक्षेत्ररूपेऽस्मिन् संसारे ईश्वरावासभूतोऽयं देह एव धर्मक्षेत्रं संपद्यते । "हृदयं तद्विजानीयात् विश्वस्यायतनं महत्" इत्यत्र मानवदेहे हृदयं विश्वात्मनो दिव्यलीलाविनोदस्थानमिति निर्दिष्टम् । एतादृशं हृदयं यथा अकलुषितं भवेत्तथा यदि संशोध्येत तदा तत्र विराजमानं प्रकाशरूपं प्राण-वत्प्रियमिष्टलिङ्गाख्यं परशिवब्रह्म सम्यगनुभूयत एव सर्वैस्साधकैः । पाश-रूपैस्त्रिगुणैर्बद्धो जीवः त्रिगुणात्मकैर्विषयैः रूपरसगन्धस्पर्शशब्दैरवश्यं युद्ध्य-मान एव वर्तते । एतैः पञ्चभिर्भोग्यविषयैरावृतस्य मानवस्य द्वंद्वयुद्धं नित्यमेव प्रवर्तते । महाभारतं युद्धं सर्वेषामपि जीवितसमये सदभ्यस्तमेव । धर्मस्वरूपी जीवस्सच्चिदानन्दात्मकोऽधर्मरूपेण सत्त्वरजस्तमोगुणात्मकेन प्रकृत्यभिधेयेन चिच्छक्तिसंकोचरूपेण चित्तेन सह तुमुलयुद्धे नित्यं प्रसज्यैव वर्तते । इदानीं जीवः किं चिच्छक्तिमाश्रयेत् अथवा चित्तशक्तिमाश्रयेत् इति महद्धर्षणमुत्पद्यते । चिच्छक्तिस्तावत् परमात्मतेजस्स्वरूपिणी सच्चिदानन्दा-त्मिका प्राणशक्तिरेव । अत एवोपनिषदि परशिवब्रह्म प्राणाराममिति श्रूयते । एतादृशी परमात्मनिष्ठा प्राणशक्तिस्सङ्कुचिता सती देहेऽप्यत्र जीवेन सह वर्तते । एवं च जीवः किं चिच्छक्तिं शरणं गच्छेत् ? अथवा चित्तशक्तिपरि-

णामभूतान् मोहकारिणो भोग्यविषयान् किं समाश्रयेत् ? इत्येवं सन्दिग्धावस्थायां जीवो निवसति । एतत्सन्देहपरिहाराय बाह्यं तु चक्षुर्नहि शक्नोति । तच्चान्तःप्रवेशाय न प्रभवेत् ? अतो मनोनैर्मल्यमन्तश्चक्षुरेवेश्वरप्रसादसेवनयाधिगन्तव्यम् । इयं च मानसी प्रसन्नता पदार्थभोगेन न कदापि लभ्यते । भोग्यं वस्तुजालं सर्वमपि जीवः ईश्वरार्पणधिया यदि भुनक्ति तदा तत्सर्वं प्रसादरूपेण परिणमते । इदमेव प्रसादजीवनं सर्वेषां नित्यसुखसाधकमिति शिवः श्रीरामाय कृतयुग एव सम्यगुपदिष्टवानासीत् । "यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् । यत्तपस्यसि राम त्वं तत्कुरुष्व मदर्पणम् ॥ ततः परतरा नास्ति भक्तिर्मयि रघूत्तम ।" अत्रोपदिष्ट एव सर्वार्पणभावो भगवद्गीतायामप्यनूद्यते । अनेन प्रसादजीवनेन सर्वे वयं प्रसन्नचेतसो भवाम । अस्मदीया युवानो युवत्यश्चैवं प्रसन्ना निर्मलाश्च भूत्वा स्वीयमज्ञानान्धकारं परिहाय ज्ञानचक्षुषा शोभेरन् । यद्यपि पुराणेषु क्वचित्क्वचित् परमात्मनः मूर्तामूर्तोभयस्थितितारतम्यकथनादिकं यद्यपि दृश्यते । क्वचित् शिवस्य श्रैष्ठ्यं, क्वचित् विष्णोः श्रेष्ठत्वमित्यादि निर्दिश्यते । तथापि तत्सर्वं "न हि निन्दा निन्दितुं प्रवृत्ता अपि तु स्तुत्यं स्तोतुम्" इति न्यायेन प्रसक्तांशप्रशंसार्थमेवेति ब्रह्मविदो जानन्ति । निन्द्यमंशं निंदितुं तादृशी निन्दा न हि प्रवर्तते किंतु प्रकरणोचितं स्तोत्रार्हमंशं प्रशंसितुमेव सा तत्र प्रवर्तत इति विवेकिभिर्ज्ञेयम् । तत्रापाततो दृश्यमानां निंदामवलोक्य देवालयोऽयं देहो न कलुषीकर्तव्यः । अत मूर्तोपासनेनापि मानवोऽमूर्तशिवैक्यसुखमिहैवास्मिन् जन्मन्येव प्रसादकायेऽनुभवितुं पारयतीति दिव्यं सन्देशं गीता दुःखसागरमग्नाय मानवसमाजाय समनुगृह्णाति । अयं च संदेशः परमात्मन एव साक्षादागतस्सन् सर्वानपि साधकान् तत्तत्प्रकृत्यनुरोधेन सांत्वयन् विराजते । अधिकं पुरस्तात्प्रकरणानुरोधेन वक्ष्यते । अथ संदर्भोचितमनुबंधचतुष्टयं संसूच्य प्रकृतमनुसरामः ॥

हृदये विराजमानो जीवोऽपि निराकार एव सन् न केनापि स्वयमेव

अनुभूयते । परमात्मांशभूतस्सः अत्यल्पप्रमाणोऽपि परमात्मसङ्कल्पानुरोधेनैव देहेंद्रियैस्सह व्यवहरति । परमात्मा यथा चेतनस्सन् इच्छाज्ञानक्रियाशक्त्याश्रयः तथा जीवोऽपि तदाश्रय एव वर्तते । अथापि परमात्मशक्तिरन्यादृशी अपरिमिताऽनन्ता ; जीवशक्तिस्तावत्सर्वसाधारणा परिमिताऽन्तवती च । चेतनत्वेनैकजातीयो जीवः शक्तिविकासेन परमात्मनि सामरस्यमवश्यमधिगच्छत्येव । एतदर्थमेव स्वस्य परमात्मनश्च संयोगोऽस्मिन्नेव प्रसादकायेऽधिगन्तव्यः । अनेन च संयोगेन आत्मौपम्यरूपं समदर्शनं अत्रैवानुभवितुं शक्नोति मानवः । एतादृशयोगसाधनाय भगवद्गीता अस्माकं प्रधानं शरणं भवितुमर्हति । अयमेव शिवयोग इति शिवागमेषु निगद्यते । येन केनापि नाम्ना व्यवहृतमपि तत्त्वं सर्वेषामपि सुखपरिणाम्येव संपद्यते । एतादृशशिवयोगस्वरूपं भगवद्गीता लीलयैव विवृणोति ; एतदधिगमाय अनेकान् मार्गानुपदिशति च । अतोऽत्र अङ्गलिङ्गाभिधयोः जीवपरमयोस्संयोगरूपसामरस्यप्रतिपादनमेव विषयः । एतादृशेन संयोगेन जीवस्य स्वरूपविज्ञानं, तस्मिन्नन्तर्यामितया निवसतः इष्टप्राणभावात्मकस्य च शिवस्य अनुभवः, तादृशेन ज्ञानामृतेन तृप्तस्य जीवस्यात्मारामतयावस्थानमित्येतत्सर्वमत्र प्रयोजनम् । ग्रन्थस्यास्य प्रकृतेन विषयेन संबन्धः प्रतिपाद्यप्रतिपादकरूपः प्रसिद्ध एव । अधिकारिणश्चात्राधीततर्कव्याकरणालङ्कारशास्त्राः सम्यगनुभूतकाव्यनाटकरसाः समधिगतान्तःकरण—नैर्मल्याः देहात्मविवेचनपटव सद्बुद्धिसद्भावनायुक्ताः चित्रविचित्रप्रपञ्चस्वभावविज्ञाननिरताः स्त्रीपुरुषरूपास्सर्वे साधकाः । एवमनुबन्धचतुष्टयेषु निरूपितेषु अधिकारिदृष्ट्या कश्चन आक्षेप उद्भवेत् । ननु स्त्रीणां तत्त्वोपदेशस्यानर्हतायाः शास्त्रप्रतिपादितत्वात् कथं ता अपि गीताया अधिकारिण्यो भवेयुः ? अयं च विचारो यद्यपि गहनो गंभीरश्च वर्तते । तथापि निष्पक्षपातया दृष्ट्या विचार्यमाणे तासां तत्त्वशास्त्रविज्ञाने अवकाशः प्राक्तनकालादपि दृश्यत एव । उपनिषत्काले मैत्रेय्याद्याः स्त्रियो न केवलमात्मतत्वं स्वयमधिगतवत्यः ; किंतु तादृशमुपदेशं पुरुषेभ्योऽपि दत्तवत्य इति ज्ञायते । याज्ञवल्क्यः स्वभार्यायै

तदीयं दायं विभज्य प्रदातुमैच्छत् । तदा सा तमपृच्छत् ‘ यद्यमृतस्य त्वा– शास्ति वित्तेन ? ’ इति । सः प्रत्यवदत् ‘ अमृतस्य तु न आशास्ति वित्तेन ’ इति । तदानीं साऽब्रवीत् ‘ किमहं तेन कुर्यां यद्यहममृता न स्याम् ’ इति। अहो कीदृशं धीरं घनगंभीरं वचनमेतत् ! कीदृशं वीर्यं वर्चश्च तत्र द्योत्यते । यदेव श्रद्धया विद्ययोपनिषदा क्रियते उच्यते चिन्त्यते च तदेव वीर्यवत्तरं भवति । एतदृशं वचनं कार्यं च किमर्थं न शोभेतेदानींतनासु युवतिष्वपि ? स्त्रीषु पुरुषेषु च विद्यमानं ब्रह्मैकविधमेव । अयमंशो बसवार्येणापि सम्यगनूद्यते “ जले यथा गूढतमोऽस्ति वह्नी रसश्च सस्येषु यथा निबद्धः । गन्धश्च पुष्पेषु यथा निरूढस्तथैव जीवेषु परो निगूढः ॥ बालासु सौहार्दमिवास्ति गूढं महेश्वरस्सर्वगतोऽपि गुप्तः । ” एवं देहे परमात्मनोऽवस्थानमुपवर्णयितुं कन्या-स्नेहमेवोपमानतया निर्दिशति भगवान् बसवार्यः । एवं च स्त्रीषु पुरुषेषु परमात्मन एकरूपत्वात् तस्य परिचयमधिगन्तुं पुरुषाणामिव स्त्रीणामपि समान एवावकाशः सहजतया विलसति । अतस्ता अप्यधिकारिण्यः संपद्यन्ते । गीता-प्रास्थनमेव स्त्रीशूद्रादीनुद्दिश्य प्रवृत्तमिति भगवान् व्यासो महाभारते कथयति । “ स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा । इति भारतमाख्यानं कृपया मुनिना कृतम् ॥ ” एवं व्यासमहर्षिः स्त्रीशूद्रान् कर्मभ्रष्टान् ब्राह्मणांश्चोद्दिश्यैव महाभारतांतर्गतं गीताशास्त्रं रचयामास । “ स्त्रियो वैश्यास्तथा शूद्राः ” इत्युक्त्वा श्रीकृष्णोऽपि स्त्रीणां वैश्यानां शूद्राणामपि परमात्मस्वरूपविज्ञानाय अवकाशं परिकल्पयति । अतोऽत्र विनैव लिङ्गवयोभेदं जिज्ञासुसामान्यस्यापि अधिकारोऽस्तीति महान्विशेषः । ‘ अयोग्यः पुरुषो नास्ति योजकस्तत्र दुर्लभः ’ इत्यभियुक्तोक्त्या पुरुषाभिधेयानां पुंरूपाणां स्त्रीरूपाणां सर्वेषामपि गीतायां प्रवेशो विद्यत एव । मानवदेहे चेतनरूपो जीवः पुरुष उच्यते । स्त्रीष्वपि वर्तमानः स एव जीवः पुरुषपदवाच्यो भवति । अतः स्त्रीणामपि वस्तुतः पुरुषत्वात् गीताप्रस्थानेऽवकाशो युज्यत एवेति सर्वमवदातम् ॥

एवं मानवसामान्यमुद्धारयितुं प्रवृत्तं गीताप्रस्थानमारभमाणस्तदाविर्भावस्यावकाशं कल्पयति धृतराष्ट्रप्रश्नद्वारा धृतराष्ट्र उवाच इत्यादिना—

धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ।
मामकाः पाण्डवाश्चैव किमकुर्वत सञ्जय ॥ १ ॥

धर्मक्षेत्रे पुण्यक्षेत्रभूते कुरुक्षेत्रे समवेतास्सङ्गता युयुत्सवः युद्धं कर्तुमिच्छंतो मामकाः मत्पुत्रा दुर्योधनादयः पाण्डवाश्चैव पाण्डुपुत्रा युधिष्ठिरादयश्च किं अकुर्वत? अस्मत्पक्षीयं प्रबलमधिकं च सैन्यं वीक्ष्य तस्याधिक्यं बलिष्ठतां चावगत्य पाण्डवानां स्वविजयसन्देहात् युद्धादुपरतिरेव आसीद्वा? उत तैः सह युद्धमेव प्रवृत्तं वा? इति स्वपुत्राभिमानात् धृतराष्ट्रः कुतूहलेन सञ्जयं युद्धवार्तां पृच्छति ॥ १ ॥

दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तथा ।
आचार्यमुपसङ्गम्य राजा वचनमब्रवीत् ॥ २ ॥

सञ्जय उवाच—पाण्डवानां भयप्रसङ्गनिवृत्तिस्तुशब्देन उच्यते । तेषां भयं नासीदेव ; प्रत्युत दुर्योधनस्यैव भयं बभूवेति भावः । तदा उभयपक्षयोस्सङ्गमे राजा दुर्योधनः व्यूढं व्यूहरचनादिकं कृत्वा स्थितं पाण्डवानीकं पाण्डवसैन्यं दृष्ट्वा आचार्यं द्रोणमुपसङ्गम्य तस्यातिसमीपं गत्वा वचनं वक्ष्यमाणं वाक्यमब्रवीत् अकथयत् ॥ २ ॥

पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम् ।
व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥ ३ ॥

पूर्वोक्त एवाशयः प्रपञ्चयते—द्रुपदपुत्रेण द्रुपदस्य राज्ञः पुत्रेण तव च शिष्येण त्वत्सकाशादेव धनुर्विद्यां प्राप्तवता च धीमता मेधाविना धृष्टद्युम्नेन व्यूढां व्यूहरचनादिना व्यवस्थापितां पाण्डुपुत्राणां पाण्डवानामेतां पुरःस्थितां महतीं बृहदाकारां चमूं सैन्यं पश्य विलोकय पाण्डवसैन्यस्य

संख्यया न्यूयत्वेऽपि ‘महती चमूः’ इति कथनेन दुर्योधनस्य हृदये विद्यमानमविश्वासमूलं भयं सूच्यते ॥ ३ ॥

तस्य हृदये समुत्थितमेतदेव भयं विस्तरेण प्रकटयति—

अत्र शूरा महेष्वासा भीमार्जुनसमा युधि ।
युयुधानो विराटश्च द्रुपदश्च महारथः ॥ ४ ॥
धृष्टकेतुश्चेकितानः काशिराजश्च वीर्यवान् ।
पुरुजित्कुन्तिभोजश्च शैब्यश्च नरपुङ्गवः ॥ ५ ॥
युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान् ।
सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः ॥ ६ ॥

अत्र पाण्डवानां पक्षे शूराः शौर्यवन्तो महेश्वासाः महत्तरशास्त्रार्थ-संपन्ना युधि युद्धे भीमार्जुनसमाः । शरीरबले भीमः प्रसिद्धः । शस्त्रबलेऽर्जुनो विश्रुतः । एतदुभयतुल्या युयुधानाद्याः द्रौपदेयान्तास्सर्व एव सर्वेऽपि महारथाः “आत्मानं सारथिं चैव स्वसैन्यं चापि कृत्स्नशः । यो रक्षन्युध्यति नरः स महारथ उच्यते ॥” इत्युक्तपूर्णवीरलक्षणसंपन्नास्सन्ति । एवं तत्पक्षे विद्यमानाः सर्वेऽपि महारथा इत्यभिप्रायेण पूर्वं महती चमूः इत्युक्तम् ।

एवं परबलस्य संख्ययाऽल्पत्वेऽपि महत्त्वमुक्त्वा स्वपक्षस्य संख्यया आधिक्येऽपि बलदृष्ट्या न्यूनत्वमाह—

अस्माकं तु विशिष्टा ये तान्निबोध द्विजोत्तम ।
नायका मम सैन्यस्य संज्ञार्थं तान् ब्रवीमि ॥ ७ ॥

तुशब्देन प्रतिपक्षात् वैलक्षण्यं सूच्यते । तत्पक्षीयास्तु सर्व एव महारथाः ; अस्मदीयास्तु सर्वे युद्धविशारदाः ; सामान्यवीरापेक्षया किञ्चित् विशिष्टाः ; तावतैव न महारथाः । यद्यप्यत्र भीष्मद्रोणादयो महारथास्सन्ति । अथापि न सर्वे महारथाः ; तत्पक्षे तु सर्व एव महारथाः । तदिदं वैलक्षण्यं सूच्यते तुशब्देन । हे द्विजोत्तम, अस्माकं अस्मत्पक्षे तु ये विशिष्टाः

वीर्यादिगुणसंपन्नास्सन्ति तान्निवोध शृणु । यद्यपि भवानेतत्सर्वं जानाति तथापि तान् प्रधानभूतान् मम सैन्यस्य संज्ञार्थं परिगणनार्थं तेऽब्रवीमि ॥

**भवान् भीष्मश्च कर्णश्च कृपश्च समितिंजयः ।**
**अश्वत्थामा विकर्णश्च सौमदत्तिर्जयद्रथः ॥ ८ ॥**

**अन्ये च बहवश्शूरा मदर्थे त्यक्तजीविताः ।**
**नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः ॥ ९ ॥**

भवद्व्यतिरिक्ता अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः प्राणानर्पयितुं सन्नद्धाः नानाशस्त्रप्रहरणाः नानाविधानि शस्त्राणि प्रहरणसाधनानि गदामुसलादीनि च येषां तादृशाः । सर्वे युद्धनिपुणा एव वर्तन्ते ॥ ९ ॥

एवं परबलस्य स्वबलस्य च तोलनेन स्वीयं निर्णयमाह—

**अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् ।**
**पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम् ॥**

तत् स्वस्मात् स्वपक्षापेक्षया परपक्षे महारथाधिक्यात् भीष्माभिरक्षितमपि अस्माकं बलं अपर्याप्तं न परपक्षविजये पर्याप्तम् । एतेषां पाण्डवानां भीमाभिरक्षितमिदं तु बलं सैन्यं पर्याप्तं स्वकार्यसाधने समर्थं वर्तते । तमेव वैलक्षण्यं तुशब्देन सूच्यते । केचित्तु अपर्याप्तमपरिमितं परेषां परिभवसमर्थमत्यधिकम्, पर्याप्तं परिमितमल्पं अस्मज्जयासमर्थम् इति व्याकुर्वन्ति । परं तु पूर्वोक्तमेव स्वरसं दृश्यते ॥ १० ॥

एवं स्वपक्षस्य दौर्बल्यं जानन् दुर्योधनः वृद्धस्य पितामहस्य सेनापतेर्भीष्मस्य रक्षणे सर्वैरपि जागरूगतया वर्तितव्यमित्याह—

**अयनेषु च सर्वेषु यथाभागमवस्थिताः ।**
**भीष्ममेवाभिरक्षन्तु भवन्तस्सर्व एव हि ॥ ११ ॥**

अयनं नाम युद्धसंरंभे योधानां तत्तत्स्वरूपानुगुणं युद्धरङ्गे अवस्थितिस्थानम् । अतस्सर्वेषु च अयनेषु यथाभागं स्वस्वनियतभागमनतिक्रम्य

अवस्थितास्सर्वे एव हि भवन्तः अस्मत्सेनापतिं भीष्ममेवाभिरक्षन्तु सर्वप्रकारेणापि संरक्षन्तु । सेनापत्यधीनत्वात्सैन्यस्य तस्मिन् रक्षिते सति समग्रं सैन्यमेव रक्षितं भविष्यतीत्यर्थः ॥ ११ ॥

एवमधैर्येणाचार्यं द्रोणं प्रति वदन्तं राजानं दुर्योधनं प्रोत्साहयितुं सेनापतिः पितामहश्च भीष्मः प्रयतितवानित्याह—

**तस्य सञ्जनयन् हर्षं कुरुवृद्धः पीतामहः ।**
**सिंहनादं निनद्योच्चैः शंखं दध्मौ प्रतापवान् ॥ १२ ।**

तस्य राज्ञो दुर्योधनस्य हर्षं सन्तोषं सञ्जनयन्सम्यगुत्पादयन् प्रतापवान् महाबलपराक्रमशाली कुरुवृद्धः कुरुवंशवृद्धः पितामहो भीष्मस्तदीयभयापनोदाय सिंहनादं परकीयानां भयोत्पादनाय स्वीयानां धैर्योत्पादनाय च वीरैः क्रियमाणं सिंहगर्जनतुल्यं नादं निनद्य शब्दयित्वा । पाकं पचतीतिवत् प्रयोगः । सिंहनादं कृत्वेत्यर्थः । शंखं स्वीयशंखं दध्मौ पूरयामास ॥१२॥

एवं सेनापतिना कृतप्रोत्साहा इतरेऽपि सर्वे तथैवाकुर्वन्नित्याह—

**ततश्शंखाश्च भेर्यश्च प्रणवानकगोमुखाः ।**
**सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥ १३ ॥**

ततस्तदनन्तरं शंखाश्च प्रणवानकगोमुखा भेर्यश्च सहसैव झटिति अभ्यहन्यन्त ताडिताः । तैरुत्पन्नः स च शब्दः सर्वव्यापी परपक्षभयावहश्च अभवत् । एवं दुर्योधनं समाधातुं याथाशक्ति प्रयत्नः कृतः ॥ १३ ॥

एवं दुर्योधनपक्षीयप्रोत्साहं पश्यतां पाण्डवसैन्यानामधैर्यं यथा माभूत् तथा पाण्डवपक्षीया अपि स्वीयसैन्यप्रोत्साहाय प्रयतितवन्त इत्याह—

**ततः श्वेतहयैर्युक्ते महति स्यन्दने स्थितौ ।**
**माधवः पाण्डवश्चैव दिव्यौ शंखौ प्रदध्मतुः ॥ १४ ॥**

ततः परपक्षे भेर्यादिताडनानन्तरं श्वेतहयैः श्वेततुरगैर्युक्ते महति बृहदाकारे स्यन्दने रथे स्थितावुपविष्टौ माधवः श्रीकृष्णः पाण्डवश्चैवार्जुनश्चैव

दिव्यौ शंखौ स्वीयदिव्यशक्तिविशिष्टौ शंखौ प्रदध्मतुः पूरयामासतुः ॥१४॥

पाञ्चजन्यं हृषीकेशो देवदत्तं धनञ्जयः ।
पौण्ड्रं दध्मौ महाशंखं भीमकर्मा वृकोदरः ॥ १५ ॥

अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ।
नकुलस्सहदेवश्च सुघेणमणिपुष्पकौ ॥ १६ ॥

काश्यश्च परमेष्वासः शिखण्डी च महारथः ।
धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥ १७ ॥

द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते ।
सौभद्रश्च महाबाहुः शंखान् दध्मुः पृथक् पृथक् ॥ १८ ॥

पाञ्चजन्यमिति श्रीकृष्णशंखस्य नाम । देवदत्तमित्यर्जुनशंखस्य नाम । एवमुपरिष्टादपि । एवं प्रधानपुरुषैः शंखध्मानकरणात् प्रोत्साहिता इतरेऽपि योधाः काश्यः काशीराजः तत्प्रभृतयस्सर्वेऽपि स्वस्वशंखान् पृथक् पृथक् प्रत्येकं प्रत्येकं दध्मुः पूरयामासुः ॥ १५–१६ ॥

एवं श्रीकृष्णादिभिः दिव्यशंखध्वनिभिः पाण्डवसैन्ये प्रोत्साहिते दुर्योधनसैन्यस्यैतच्छ्रवणेन महद्भयमासीदित्याह—

स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत् ।
नभश्च पृथिवीं चैव तुमुलो व्यनुनादयत् ॥ १९ ॥

नभः पृथिवीं चैव व्यनुनादयन् विशेषेण प्रतिशब्दं उत्पादयन् तुमलः सर्वव्यापकस्सन् स घोषः शंखशब्दः धार्तराष्ट्राणां दुर्योधनपक्षीयानां भीष्मादिभिः प्रतिष्ठापितधैर्याणामपि अन्तःकरणानि व्यदारयद्भेदयामास ॥ १९ ॥

एवं बाह्यदृष्ट्या दुर्योधनादीनां हृदयकंपने जातेऽपि किञ्चिद्व्याजेनाध्यात्मशास्त्रं लोकायोपदिदिषुर्भगवान् श्रीकृष्णः अर्जुनहृदये विचित्रं परिणाममुत्पादयितुमवकाशं परिकल्पयति—

अथ व्यवस्थितान् दृष्ट्वा धार्तराष्ट्रान् कपिध्वजः ।

प्रवृत्ते शस्त्रसंपाते धनुरुद्यम्य पाण्डवः ॥ २० ॥
हृषीकेशं तदा वाक्यमिदमाह महीपते ।

हे महीपते इति सञ्जयेन धृतराष्ट्रसंबोधनम् । अथ व्यवस्थितान् सर्वेष्वयनेषु यथाभागमवस्थितान् सुसज्जितान् धार्तराष्ट्रान् दुर्योधनादीन् दृष्ट्वा तदा कपिध्वजः कपिर्ध्वजे यस्य सः पाण्डवोऽर्जुनः शस्त्रसंपाते शस्त्राणां संपातः परस्परं प्रयोगस्तस्मिन् प्रवृत्ते सति एवं पक्षद्वयशंखशब्दादिभिः प्रोत्साहनेन युद्धारम्भसूचनया च परस्परं बाणप्रयोगे आरब्धे सति धनुः स्वस्य धनुरुद्यम्य हस्ते धृत्वा बाणप्रयोगोन्मुखं कृत्वेत्यर्थः । हृषीकेशं श्रीकृष्णं इदं वक्ष्यमाणं वाक्यमाह । अत्र हृषीकेशपदप्रयोगादिदं वैचित्र्यं भगवतैव कृतमिति सूच्यते । हृषीकं नाम इन्द्रियम् । " हृषीकं विषयेंद्रियम् " इत्यमरः । तस्येशः प्रेरकः । स हि भगवान्सर्वेषामिन्द्रियाणां तद्वारक-ज्ञानस्य च प्रेरकः । " सर्वस्य चाहं हृदि सन्निविष्टः मत्तः स्मृतिर्ज्ञानम-पोहनं च " इति च बहु वदिष्यति स एव । अतोऽध्यात्मशास्त्रावतरणाय व्याजं प्रतीक्षमाणः स एव तत्साधितवानित्यर्थो हृषीकेशपदेन सूच्यते । ननु अध्यात्मशास्त्रस्य युद्धरङ्गे किमर्थमुपदेशः कृतः । यत्र क्वचनोपविश्यैकान्ते खलु तत्त्वशास्त्रमुपदेष्टव्यमिति चेत्सत्यम् । परंतु अध्यात्मशास्त्रं " केवल-शुष्कवैराग्यसाधकं, लोकव्यवहारानुपयोगि, प्रत्युत तद्विरोध्येव, न तेन लोकस्य कश्चनोपयोगः ; प्रत्युत विरोध एव " इत्यादिरीत्या जनास्सर्वे भ्रमे मग्नास्संति । अध्यात्मशास्त्राध्यायनाय सर्वोद्यमेभ्यो निवृत्तिरेव संपादनीयेत्यपि केचित् भ्राम्यंति । " ये तावद्गलितवयसो वृद्धास्त एवाध्यात्मशास्त्रस्याधिकारिणः । न तच्छास्त्रं तरुणतरुणीभिरवलोकनीयम् ॥ अवलोकितमपि तच्छास्त्रं न हि तैर्ज्ञायते " इत्यपि केचिद्वदंति । ये तावत् शक्ताः शरीरे मनसि बुद्धौ च त एव कालयापनाय अध्यात्मशास्त्रं पठेयुरिति च केचन मन्दाः भावयंति । राजकीयव्यवहारेषु व्यापृताः पुरुषाः स्त्रियश्च स्वीयकर्मनिवृत्त्यनन्तरमेव अध्यात्मशास्त्रमध्येतुं प्रभवेयुरिति केचन भावयंति । एतादृशभ्रमापनोदनाय

सैन्यमध्य एव वेदान्तोपदेशमारभते प्रभुः । अध्यात्मशास्त्रस्य धार्मिकलौकिक-प्रवृत्त्योर्द्वयोरप्युपयोगितां प्रदर्शयितुं युद्धरङ्ग एवोपदेश आरब्धः । प्रत्युत मदालसानां दुरभिमानिनां पण्डितंमन्यानां सद्वृत्तिरहितानामर्धवेदांतिनामप्याल-स्यं परिहृत्य स्वकर्तव्ये प्रवृत्त्युत्पादकतां च प्रदर्शयितुं कार्यक्षेत्र एवाध्यात्म-तत्त्वमुपादिशत् परमात्मा । आध्यात्मज्ञानमेव लोकव्यवहारनैपुण्यं संपादयितुं प्रभवेदित्याशयेन तच्छास्त्रस्य तादृशवीर्यवत्तां साक्षादेव क्रियया च निवेद-यितुं रणभूमावेव तदुपदेशावकाशं कल्पितवान् प्रभुः । अर्जुनो हि स्वपक्षीयान् परपक्षीयान् सर्वानपि पूर्वमेव अजानादेव । नूतनतयेव तस्य तेषां दिदृक्षा, तद्दर्शनेन च तस्य निर्वेदः, तेन च तस्य युद्धादुपरतिः, 'न योत्स्ये' इति तद्वचनं, अन्ते तस्यैव 'नष्टो मोहः' इत्युद्घोषः इत्यादिकं सर्वमपि भगवत्प्रेरणं विना नहि स्वत एव प्रवर्तेत । एतादृशं भगवतस्सर्वेंद्रियप्रेरकत्वं' इन्द्रियाणां तदधीनत्वं, अध्यात्मशास्त्रस्यानुष्ठानपर्यवसायित्वं इत्यादिकमर्थ-जातं स्पष्टं सूच्यते हृषीकेषपदेन । अतः शास्त्रस्यानुष्ठानपर्यवसायितां सर्वेभ्यः प्रत्यक्षतयैव प्रदर्शयितुमेव युद्धभूमावेव केनचिद्व्याजेनध्यात्मशास्त्रं श्रीकृष्णपरमात्मनोपदिष्टम् । एवमनुष्ठानोपयोगित्वमध्यात्मशास्त्रस्याप्यस्तीति प्रदर्शनस्येष्टत्वात् युद्धरङ्गे तच्छास्त्रोपदेशो न दोषाय भवेत् । अवशिष्टो विषयोऽन्यत्र यथावसरं निवेद्यते ॥ २० ॥

हृदि स्थितेन देवेन प्रेरितः अर्जुनस्तदा किमुवाच इत्याह—

**सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ॥ २१ ॥**
**यावदेतान्निरीक्षेऽहं योद्धुकामानुपस्थितान् ।**
**कैर्मया सह योद्धव्यमस्मिन् रणसमुद्यमे ॥ २२ ॥**
**योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः ।**
**धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥ २३ ॥**

हे अच्युत कृष्ण ! अच्युतपदप्रयोगात् कृष्णः मानवोऽपि नाशरहितः साक्षात्परमात्मैवेत्यर्थो गम्यते । एवमुत्पत्तिविनाशरहितः परंज्योतिस्स्वरूपो

भगवान् दिव्यमङ्गळविग्रहो महादेव एव कृष्णनाम्ना जिज्ञासोरर्जुनस्य पुरस्तस्थौ। अर्जुनश्शुद्धजीवः भाविकल्याणसाधकं स्वीयमाशयं साक्षात्परमात्मन्येव शुद्धहृदयेन प्रकटीचकार उभयोस्सेनयोर्मध्ये मे रथं स्तापय चालयित्वा तिष्ठ कतिपयनिमेषपर्यन्तमिति। किमर्थमित्यत आह—यावदित्यादि। अहं योद्धुकामानवस्थितान् युद्धं कर्तुकामास्सन्तो येऽवस्थितास्तान्यावन्निरीक्षे यथा पश्येयंस्तथा रथं स्थापय। मन्निरीक्षाणाय यथा सौकर्यं स्यात्तथा स्थापय। के ते निरीक्षणीया इत्यस्य विवरणं यैरित्यादि। कैः यैरिति यावत्। अस्मिन् रणसमुद्यमे युद्धप्रसङ्गे यैर्मया सह योद्धव्यमस्ति तान्निरीक्षे। वस्तुतस्तु नाहं योद्धुमाकांक्षे। न वाहं कस्यचित् द्रोहं कृतवानस्मि ; अथापि मां शत्रुं मत्वा मया सह विरोधेन युद्धं कर्तुं के वा इच्छेयुः। इति विषाद—सूचनाय यैरित्यनु कैरित्युक्तम्। एतदेव स्पष्टं विवृणोति योत्स्यमानानीत्यादि। दुर्बुद्धेर्द्रोहबुद्धेर्यथाकथंचित् पञ्चग्रामैर्वा संधिं वाञ्छतामप्यस्माकं पूर्णद्रोहं कर्तुमिच्छतो धार्तराष्ट्रस्य दुर्योधनस्य युद्धे तेन प्रवर्तमाने तदीये युद्धे। एतेनैतादृशसहोदरवधादेर्नाहं हेतुः किन्तु स एवेत्युक्तं भवति। प्रियचिकीर्षवस्तदीयं प्रियमस्मद्वधरूपं चिकीर्षवः कर्तुमिच्छवः य एतेऽत्र युद्धरङ्गे समागता मिळितास्तादृशान्योत्स्यमानान् अहमवेक्षे सम्यक्पश्यामि॥

एवमर्जुनेनोक्तः श्रीकृष्णः सर्वेश्वरोऽपि सन्नाश्रितवात्सल्यात् तदीय—सारथ्येऽवस्थितः तादात्विकस्वस्वामिनियोगं तथैव परिपालयामासेति सञ्जयो धृतराष्ट्रमुवाच—

**एवमुक्तो हृषीकेशो गुडाकेशेन भारत।**
**सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम्॥ २४॥**

**भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम्।**
**उवाच पार्थ पश्यैतान्समवेतान्कुरूनिति॥ २५॥**

हे भारतेति धृतराष्ट्रसंबोधनम्। हृषीकेशः अन्तर्बाह्यकरणानां प्रेरकः। एतेनार्जुनस्यैतादृशबुध्द्युदयस्तेनैव कृत इति सूच्यते। तादृशः

परमात्मावतारभूतः श्रीकृष्णः गुडाकेशेनार्जुनेनैवं एतत्प्रकारमुक्तोऽभिहितस्सन् रथोत्तमं श्रेष्ठं रथमुभयोस्सेनयोर्मध्ये भीष्मद्रोणयोः प्रमुखतः सर्वेषां महीक्षितां राज्ञां च पुरः। भीष्मद्रोणयोर्दर्शनेनैवार्जुनस्य शोकोत्पत्त्या तदुद्देशेन तयोः पुर एव रथं स्थापयित्वेत्यर्थः। हे पार्थ, समवेतान् युद्धार्थं समागताननेकान् कुरून् दुर्योधनपक्षीयान् पश्य इत्युवाच। अत्र गुडाकेशपदप्रयोगः अर्थगर्भि-तोऽन्वर्थतया युज्यते। गुडाका निद्रा तस्या ईशो जितनिद्र इत्यर्थः। निद्रा तावत्तमसो दुष्परिणामः। सा च जाग्रत्प्रकृतिकेनार्जुनेन जितवासीत्। पाशुपतप्राप्त्यर्थं तेनाद्भुतं तप आचरितं खलु। तदानीं निद्रालस्यादिकं तेन परित्यक्तमिति विश्रुतमेव। एवं च सः सात्विकस्वभाव एवासीत्। परंतु श्रीकृष्णप्रेरणेन तस्य मनसि बन्धुव्यामोह उत्पन्नः। लोककल्याणार्थं तत्त्वोपदे-शायैवमवकाशः परमात्मनैव परिकल्पितः। वस्तुतोऽर्जुनः शुद्धस्वभाव आसीत् अत एवोपदेशार्हस्सञ्जात इत्याशयं गुडाकेशपदं सूचयति। इदमत्र औचित्येन शोभते॥

ततः किमासीत्? अर्जुनः किमपश्यत्? इत्यत्राह—

**तत्रापश्यत्स्थितान्पार्थः पितॄनथ पितामहान्।**
**आचार्यान्मातुलान्भ्रातॄन्पुत्रान्पौत्रान्सखींस्तथा॥ २६॥**
**श्वशुरान्सुहृदश्चैव सेनयोरुभयोरपि।**

सेनयोरुभयोरपि स्थितान् पितृपितामहादीन् अपश्यदर्जुनः॥

**तान्समीक्ष्य स कौन्तेयः सर्वान्बन्धूनवस्थितान्॥ २७॥**
**कृपया परयाविष्टो विषीदन्निदमब्रवीत्।**

तान्समीक्ष्य सम्यगवलोक्य विषीदन् सः मम पितृपितामहादया एव वध्यास्संवृत्ता इति शोचन्निदं वक्ष्यमाणमब्रवीत्। यद्यपि पूर्वमेव तैस्सह स्वेन योद्धव्यमित्यर्जुनोऽजानादेव। अथापि बुद्ध्या जानन्नप्येकत्र समवेतांस्तान् पश्यतस्तस्य हृदये भगवत्प्रेरणयैव शोकस्सञ्जात इत्यर्थः॥ २७॥

एवं विषण्णस्सः किमब्रवीदित्याह—

**दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम् ॥ २८ ॥**
**सीदन्ति मम गात्राणि मुखं च परिशुष्यति ।**

हे कृष्ण, युयुत्सुं युद्धाय समुपस्थितमिमं स्वजनं दृष्ट्वा मम गात्राणि सीदन्ति खिद्यन्ते । मुखं च परिशुष्यति शोकात् कान्तिहीनं संपद्यते ॥

**वेपथुश्च शरीरे मे रोमहर्षश्च जायते ॥ २९ ॥**
**गाण्डीवं स्रंसते हस्तात्त्वक्चैव परिदह्यते ।**

वेपथुश्च मे शरीरे जायते । तथा रोमहर्षः भीतिजुगुप्सादिना जायते । हस्ताद्गाण्डीवं धनुरपि स्रंसते । त्वक्चर्मापि परिदह्यते ॥ २९ ॥

**न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ॥ ३० ॥**
**निमित्तानि च पश्यामि विपरीनानि केशव ।**

**न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे ॥ ३१ ॥**
**न कांक्षे विजयं कृष्ण न च राज्यं सुखानि च ।**

एतेषां निष्कारणवैरिणां पुरः स्थातुं नाहमभिलषामि । किमर्थमेतैः स्वार्थसाधकैस्सह मया योद्धव्यमित्यालोच्य मे मनसि भ्रमस्सञ्जातः । एतैस्सह योद्धुमागतस्य मे निमित्तान्यपि विरुद्धानि दृश्यन्ते । स्वबन्धूनामेतेषां युद्धे हननेन न किञ्चिदपि फलमधिगम्यते मया । एतस्मिन्युद्धे विजयोऽपि नाभिलषितो मया । एतेन पापकर्मणा लब्धव्यं राज्यमपि मे मास्तु ॥

कुतो युद्धे विजयादिकं नाकांक्ष्यत इत्यत्राह—

**किं नो राज्येन गोविन्द किं भोगैर्जीवितेन वा ॥ ३२ ॥**
**येषामर्थे कांक्षितं नो राज्यं भोगाः सुखानि च ।**
**त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च ॥ ३३ ॥**

नाहं केवलस्वार्थपरतया किन्तु बन्धुभिस्सह सुखी स्यामिति भावनयैव राज्यमिदं वाञ्छे । यदि बन्धव एवास्मिन्युद्धे म्रियेरन् तदा किमहं तेन

कुर्यामनेन राज्येन। यदर्थमहं योत्स्ये तादृशास्तु बन्धवः धनकनकादीनि वस्तूनि त्यक्त्वा अमोघान् तदीयप्राणानपि त्यक्तुं सन्नद्धा अत्रागतास्संति। अहं च तान् हनिष्याम्येव। परन्तु तान् हत्वा तादृशराज्यसंपादनेन न ममेष्टसिद्धिः। अतो नः अस्माकं किमेव राज्यादिना प्रयोजनं स्यात्?

कैस्सह राज्यसुखमनुभाव्यम्? के वा मया वध्या इत्यत्र।—

**आचार्याः पितरः पुत्रास्तथैव च पितामहाः।**
**मातुलाः श्वशुराः पौत्राः स्यालास्संबधिनस्तथा ॥ ३४ ॥**

पूंज्या आचार्याः रक्तसंबधिन एते न हन्तन्या एवेत्यर्जुनस्याशयः। तेषु भवन्तं हन्तुं सन्नद्धेषु आत्मरक्षार्थं तेऽपि भवता वध्या एव भवितुमर्हन्तीति चेत्तदपि नाहमिच्छामीत्यत्राह—

**एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन।**
**अपि त्रैलोक्यराज्यस्य हेतोः किन्नु महीकृते ॥ ३५ ॥**

एतान् हत्वा प्राप्य त्रैलोक्याधिपत्यमेव मम मास्तु। अयमेव ममाशयः। एतादृश्यां स्थितौ केवलमहीकृते ऐहिकराज्यार्थं किन्नु किमुत युद्धे प्रवर्ते? अहं तैर्हतो यदि भवेयमपि तदा सुष्टु स्यात्। अहं तावत् तानस्मिन्युद्धे हन्तुं सर्वथा नेच्छामि ॥ ३५ ॥

भवद्वधोद्यतानपि कुतो हन्तुं नेच्छसीत्यत्राह—

**निहत्य धार्तराष्ट्रान्नः का प्रीतिः स्यज्जनार्दन।**
**पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः ॥ ३६ ॥**

एवं त्रैलोक्यराज्यापेक्षाया अप्यभावात् एतान् धार्तराष्ट्रान् हत्वा नः का प्रीतिस्सन्तोषः स्यात्? न कोऽपीत्यर्थः। विना कारणमस्माभिस्सह द्वेषं कृत्वा अस्मान्हन्तुमप्युद्यता एते आततायिन एव। आततायिनश्च महापातकिनः। तादृशांस्तान् हनिष्यामि चेन्मम ततोऽप्यधिकं पापं संभवेत्। पापिभिः स्वकृतपापफलं स्वयं भुज्यैतैवेति हि विवेकिभिरस्माभिस्तूष्णीं

स्थातव्यम् । तादृशं मार्गं परित्यज्य वयमपि कामक्रोधादिभ्यस्तान् हन्मश्चे तेषामपि पापमस्मानेवाश्रयेत् । अतो न युक्तमेतेषां हननमस्माभिः ॥

तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान्सबान्धवान् ।
स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ॥ ३७ ॥

स्वबन्धून् हत्वा को वा सुखी संपद्येत ? तादृशस्तु मूर्ख एव स्यात् । स च न कदापि लोके सुखं विन्देत ॥

तर्हि त्वद्बान्धवास्ते त्वां हन्तुं कथं सन्नद्धा बभूवुरित्यत आह—

यद्यप्येते न पश्यन्ति लोभोपहतचेतसः ।
कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ॥ ३८ ॥

कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् ।
कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन ॥ ३९ ॥

एते दुर्योधनादयो राज्यलोभेन नष्टबुद्धयः कुलनाशादिकं न जानन्त्येव राज्यलोभात् । अहं तज्जानन्नेव कथमिदं पापं कुर्याम् ? कुलक्षयकृतं दोषं प्रपश्यद्भिः सम्यगनुभवद्भिरस्माभिः अस्मात्पापान्निवर्तितुं कथं न ज्ञेयम् । एतादृशपापनिवृत्तिः कथं न चिन्त्येत ? अतः कश्चन उपायश्चिन्तनीय एव पापनिवृत्तये ॥

कुलक्षये कोऽसौ महान्दोष इत्यत्र वर्णसांकर्यरूपो महान्दोषस्संभवेदेवेति तदीयं दृढनिश्चयमावेदयति—

कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः ।
धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत ॥ ४० ॥

अधर्माभिभवात्कृष्ण प्रदुष्यन्ति कुलस्त्रियः ।
स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसङ्करः ॥ ४१ ॥

वंशस्य क्षये संप्रदायपरंपरागताचारादीनामपि स्वयं नाशः अवर्जनीयो भवेत् । एवं सदाचारादिमर्यादाविनाशे स्वतो दुर्बलाः मानवाः स्वयं

परनिर्बन्धाद्वा परकीयैर्दूषिता भवेयुः। तेन च ब्राह्मणक्षत्रियवैश्यशूद्रादिरूपा व्यवस्था संकीर्णा भवेत्। अतः कुलक्षयो वर्णसांकर्ये पर्यवस्येत्॥

अस्तु वर्णसाङ्कर्यम्। अनेन का हानिरिति चेत्तस्य महादोषत्वमाह—

संङ्करो नरकायैव कुलघ्नानां कुलस्य च।
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः॥ ४२॥

सङ्करो वर्णसांकर्यं कुलघ्नानां वर्णसङ्करहेतूभूतकुलक्षयकारिणां, नष्टस्य कुलस्य च नरकाय नरकफलायैव भवेत्। एवं च येषां कुलं नष्टं तेषामेव धर्मलोपः संभवेदिति न, किन्तु य एतद्दोषहेतवः कुलक्षयकर्तारः तेऽपि तत्पापप्रभाववशात् क्रमशः क्षीणा भविष्यन्त्येवेत्युक्तम्। नरकायैवेति कथयित्वाह—पतन्तीति। हि यस्मात्कारणात् एषां कुलक्षयकारिणां क्षीणकुलानां च पितरः लुप्तपिण्डोदकक्रियाः नष्टपैतृकव्यापाराः पतन्ति पतेयुः। पुत्रस्योत्पत्तिरेव एतादृशऋणपरिहारायेति विश्रुता। युद्धे सर्वेषां मरणात् श्राद्धां निर्वहन्तः पुरुषा एव न स्युः। यदा पैतृकक्रियैव परित्यक्ता भवेत् तदा पितृदेवताः कुपिता भवेयुः। अतश्च पितृस्वरूपमहादेवोद्देश्यकमाहेश्वराराधनरूपसत्कर्मत्यागेन तत्फलं नरकादिदुःखं सर्वेषां संभवेदेव॥

ननु वर्णसांङ्कर्यमात्रेण न पुत्रोत्पत्त्यसंभवः; यो हि जायते कश्चित् स एव पितृदेवानुद्दिश्य भक्तमाहेश्वरसन्तर्पणं करिष्यतीत्युच्यते चेत् सोऽप्यसंभव इत्याह—

दोषैरेतैः कुलघ्नानां वर्णसङ्करकारकैः।
उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः॥ ४२॥

उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन।
नरके नियतं वासो भवतीत्यनुशुश्रुम॥ ४४॥

हे जनार्दन, कुलघ्नानां वर्णसाङ्कर्यहेतुभिरेतैर्दोषैः वंशक्षयादिभिः जातिधर्माः ब्रह्मणादिधर्माः कुलधर्मास्तत्तत्कुलक्रमागता धर्मा ये शाश्वताः

एतावता कालेन अनुवर्तमानास्सन्ति ते उत्साद्यन्ते नश्यंति । साङ्कर्येण जायमानः पुत्रो यः कोऽपि जातिकुलादिवर्जित एव जायेत ? अयं च कथं स्वजातिकुलक्रमागतान् धर्मान् जानातु ? अतस्साङ्कर्ये धर्मनाश अवर्जनीयः । अतश्चैवं उत्सन्नकुलधर्माणां नष्टजातिकुलधर्माणां मनुष्याणां नरके नियतं वासस्संभवतीत्यनुशश्रुम श्रुतिस्मृत्याचारादिभिर्जानीमः । श्रुतिस्मृत्याचारा एव धर्मनिर्णये प्रमाणानि वर्तन्ते । अतश्च सङ्करो नरकायैवेत्येतत् दुरपह्नवमेव ॥

एवं महापातकस्य वर्णसाङ्कर्यस्य अहमेव कारणं भवेयमिति स्मरण-मात्रेण कंपितमनाः अर्जुनः पापभीत्यैवमाह—

अहो बत महत्पापं कर्तुं व्यवसिता वयम् ।
यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ॥ ४५ ॥

'अहो बत' इत्यव्ययद्वयं स्वस्येदृशी बुद्धिर्वर्णसाङ्कर्यकारिका कथ-मुत्पन्ना इत्याश्चर्यं, सङ्कटं, लज्जादिकं च सूचयति । यद्यस्मात् वयं राज्यसुख-लोभेन राज्यप्राप्त्यधीनसुखे लोभात् दुराशया स्वजनं पितृभ्रात्रादिबन्धुजनमेव हन्तुमुद्यतास्सन्नद्धाः अतो महत्पापं कर्तुं व्यवसिता निश्चितवन्तः । एवं वर्णाश्रमधर्माणां श्रुत्याचारादिसिद्धत्वं, तेषां साङ्कर्यस्य नरकहेतुत्वं, तादृश-साङ्कर्यकर्तॄणामपि नरकादिप्राप्तिः इत्यादिकामनर्थपरंपरां सम्यक् प्रदर्शयितुं 'अहो बत' इत्याद्युपोद्घातो व्यासेन रचितः । भगवानप्युपरिष्टात् वक्ष्यति 'सङ्करस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः' इत्यत्र सङ्करस्य सर्वनाशकत्वं, 'चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः' इत्यत्र वर्णाश्रमधर्मस्य स्वसृष्टत्वं च । ननु 'गुणकर्मविभागशः' इत्यनेन गुणकर्माधीनमेव ब्राह्मणत्वादिकमिति ज्ञायत इति चेत्सर्वोऽपि गुणः सर्वं वा कर्म नहि सर्वेषामपि समानतया अन्वेतुमर्हति । नहि सर्वं सर्वस्य कर्तुं वा शक्यम् । यथा क्षमादानादयो ब्राह्मणगुणा वा वीर्यशौर्यादयः क्षत्रियगुणा वा रक्तस्संबद्धा अनुस्रियमाणाश्च नहि प्रयत्नमात्रसंपाद्याः भवेयुः । मूलतः स्थितानामेषां पोषणं परं प्रयत्न-साध्यम् । अतो बीजगता ब्राह्मणत्वादिजातयः अवश्यमङ्गीकार्या एव ।

अत एवात्रापि 'उत्साद्यन्ते जातिधर्माः' इति जातिपदं प्रयुक्तम् । अतो वर्णाश्रमधर्माः शास्त्रसिद्धाः नापलपितुं शक्याः । अपलापे च नरकः फलमिति सिद्धम् । किंच वर्णाश्रमधर्मानङ्गीकारे सर्वस्सर्वं कर्तुं शक्नुयात् । तत्र जातिविभागेन धर्मव्यवस्थाया अनङ्गीकारेऽपि आश्रमविभागेन तदङ्गीकार आवश्यक एव । नो चेत् गृहस्थस्यैव स्त्रीभोगो धर्मः, संन्यासिनस्तु सः महानधर्मः इत्याद्याश्रमव्यवस्थापि नाऽङ्गीकार्य स्यात् । अतश्च ब्रह्मचारिगृहस्थसंन्यासिवानप्रस्थरूपचतुराश्रमाणामपि साङ्कर्यं स्यात् । ब्रह्मचारिणोऽपि विषयोपभोग इत्यादिकं स्यात् । अतश्च नरा अपि पशुप्रायाः स्युः । यदि च आश्रमधर्मा अङ्गीक्रियन्ते तर्हि तत्सहपठिता वर्णधर्मा अप्यङ्गीकार्याः । अतो विवेकिनां सुसंस्कृतानां च वर्णाश्रमधर्माः नापलपितुं युक्ताः । ये पूर्णविरक्ताः ज्ञानानन्दमग्नाः शिवानुभविनस्ते तावदतिवर्णाश्रमिण उच्यन्ते । उल्लंघित–वर्णाश्रमधर्मा अपि ते लोककल्याणदृष्ट्या अत्युत्कृष्टं समदर्शनरूपं धर्ममाचरन्तो वर्तन्ते । ते तु केवलज्ञानमार्गावलंबिनः सर्वत्रानन्दमयं परमेश्वरमेव पश्यन्तो योगानन्दमनुभवन्तो यत्र कुत्रापि वसेयुः । मायासंबन्धं परित्यज्य मायापतौ समरसं विलीनस्तादृशाः पुरुषा अतिक्रान्तवर्णाश्रमा एव सन्ति । तेषां विचारः अन्यैर्न कदापि परीक्ष्यः । अयमंशः बसवार्येण सम्यगाविष्कृतः "शिवैकनिष्ठाः शरणास्तु लोके केनापि रूपेण वसन्तु नित्यम् । महानुभावाश्च शिवैकचित्ता यथाकथं वापि वसन्तु भूमौ ॥ साधुस्वभावा विनिवृत्तकामाः कयापि वृत्त्या निवसन्तु लोके । संशोधकोऽयं मणिरस्तु रूक्षस्तथापि संशोधयतीह लोहम् ॥ सज्ज्ञार्यभक्ता हि यथाभिलाषं वसन्तु लोके रसवार्धयस्ते ॥" एतादृशां ज्ञानिनां स्थितिरन्यादृशी विलक्षणा च वर्तते । तैस्तावद्वर्णाश्रमधर्मा त्यज्यन्ताम् । तावता न कापि हानिः । तथापि सर्वे तादृशीं स्थितिं नाधिगतवन्तः । तैस्तावद्वर्णाश्रमधर्मा ईश्वरकृतत्वादनिवार्यत्वाच्चावश्यं पालनीया एव । एवं कृते सत्येव तेऽपि क्रमशः शिवानुग्रहं लब्धुं प्रभवेयुः । भवसागरमग्नैः सर्वैरपि आश्रमधर्मादिकमनुष्ठेयमेव ।

अयमाशयः मदीयायां शरणगीतायामनूद्यते । ‘ खमेव सर्वं घनतामियाद्यदि स्वर्गादिलोकाः कथमाप्नुयुः स्थलम् । मेघोदकं सर्वमपीह मौक्तिकं स्याच्चेत्समुद्रः कथमावहेज्जलम् । भ्रष्टास्तु जीवाः पशुतुल्यवर्तनात् कथं लभेरन् परमात्मबोधनम् । सर्वैश्च तैस्तद्यदि लभ्यते भुवि तदा भवः कुत्र लभेत वर्धनम् ॥ अतश्च भक्ता विरळा हि जाता देवे यथा कूडलचन्नसङ्गे । तथैव साधुः पुनरेक एव लक्षेषु भक्तः शरणस्तु कोटौ ॥ ” इत्येवं सर्वे मानवाः भक्तस्थितिमेवाधिगन्तुं नाशक्नुयुः । तदा यदि ते अतिवर्णाश्रमिणो भवेयुः तदा तेषां वैकृतमवर्णनियमेव स्यात् । अतो वर्णाश्रमधर्मसाङ्कर्यं यथा न भवेत् तथैव वर्धिष्णुभिः स्थेयम् । अधिकमप्रसक्तमत्र ॥

ननु यदि भवान्युद्धं न कुर्यात् तर्हि तूष्णीमुपविष्टं भवन्तं शत्रवो हन्युरित्याशङ्कायां इष्टापत्तिमाह—

यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः ।
धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ॥ ४६ ॥

अशस्त्रं परित्यक्तशस्त्रं, अत एवाप्रतीकारं मद्वधे प्रवृत्तानपि दृष्ट्वा तूष्णीं स्थितं मां शस्त्रपाणयो धार्तराष्ट्राः दुर्योधनपक्षीयाः रणेऽस्मिन्यदि हन्युः तदेव मे क्षेमतरं नरकपातादिभ्यो मद्रक्षणात् हितावहं भवेत् ॥४६॥

एवमुक्त्वार्जुनः संख्ये रथोपस्थ उपाविशत् ।
विसृज्य सशरं चापं शोकसंविग्नमानसः ॥ ४७ ॥

अर्जुनविषादमेवं सूचयन् सञ्जय उवाच—एवमुक्तप्रकारेण शोकनिर्वेदादिकं प्रकटयित्वा संख्ये तद्युद्धरङ्ग एव शोकसंविग्नमानसः शोकेन संविग्नं खिन्नं मानसं यस्य सोऽर्जुनः सशरं चापं धनुर्विसृज्य दूरतस्त्यक्त्वा रथोपस्थे रथप्रान्ते रथमध्येऽप्युपवेष्टुं जुगुप्सया रथप्रान्त एवोपाविशदुपविष्टवान् एवमर्जुनः प्रकृतेर्वशङ्गतः स्वकर्तव्यं विस्मृत्य स्वीयं विषादं न्यवेदयत् । तथैव

सर्वे जीवाः व्यवहारकाले मुह्यन्ति। तन्मोहपरिहारायार्जुनविषादः दिव्यसञ्जीविनी संपद्यते। एवं विषण्णा एव जीवाःशुद्धास्सन्तः शिवानुग्रहं लभन्ते॥



## अथ द्वितीयोऽध्यायः

ततः किमासीदिति कुतूहलेन श्रोतुमिच्छन्तं धृतराष्ट्रं प्रति सञ्जयः भगवत्कृतमर्जुनविषादनिवारणोपक्रमं न्यवेदयत्——

**तं तथा कृपयाविष्टमश्रुपूर्णाकुलेक्षणम्।**
**विषीदन्तमिदं वाक्यमुवाच मधुसूदनः॥ १॥**

तथा तादृश्या कृपया दयया आविष्टं व्याप्तमत एव बन्धुजनहननचिन्तया अश्रुपूर्णाकुलेक्षणं रुदन्तं विषीदन्तं खिद्यमानं मधुसूदनः इदं वाक्यमुवाच। पाकं पचतीतिवत्प्रयोगः। इदमुवाचाकथयत्। मधुसूदनइत्यनेन मधुनामकराक्षसस्थानीयस्य प्रमादस्य निवारकः कृष्ण इति सूच्यते॥

**कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम्।**
**अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन॥ २॥**

श्रीभगवनुवाच—हे अर्जुन, त्वा त्वां अनार्यैः शास्त्रार्थमजानद्भिः मूढैर्जुष्टं केवलपामरैस्सेवितमत एव अस्वर्ग्यं परलोकानर्हं अकीर्तिकरमपयशस्करमिहलोकानर्हमिदं कश्मलं कालुष्यं विषमे विषमसमयेऽस्मिन् युक्तकार्याचरणकाले कुतः समुपस्थितं समागतम्? यदि युद्धमधर्मं जानीयास्त्वं तर्हि इदं पूर्वमेव परिहर्तव्यमासीत्। तत्परिहाराय प्रयत्ने कृतेऽपि अवर्जनीयतया आपतितेऽस्मिन्युद्धे क्षत्रियेण न कदापि पलायितव्यम्। युद्धरङ्गात्पलायनं न हि क्षत्रियधर्मः। वर्णसाङ्कर्यं महापापं वदता भवता स्ववर्णधर्मः अनिवार्यतया पालनीय एव स्वधर्मवर्जने सांकर्यं जायेतैव।

क्षत्रियस्य तावत् युद्धे शत्रुनिग्रह एव धर्मः। तत्रापि अवशादेवेदं युद्धं समागतम्। तदपि न क्रियत इति चेत्प्रथमं त्वमेव वर्णधर्मविहीनो वर्णसाङ्कर्य-कारी स्याः। "शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्। दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम्॥" इति युद्धेऽपलायनं क्षत्रियस्य भवतो विहितो धर्मः। वर्णाश्रमप्राशस्त्यं वदतस्तव एवं वर्णधर्मत्यागरूपं महान्तमधर्मं कर्तुमनर्हतया एतादृशं कश्मलं मनःकालुष्यं कथं त्वयि प्राप्तम्? यदि विरक्तस्त्वं, तर्हि उपक्रान्तं कर्म समाप्यैव वनं गन्तव्यम्। युद्धे चाप्यपलायनं हि त्वदीयो धर्मः। अत एवेहोच्यते विषमे समुपस्थितमित्यादिना॥ २॥

एवं क्षत्रियस्यावश्यप्राप्तयुद्धादुपरमो नपुंसकलक्षणमेव न तु वीरक्षत्रिय-लक्षणम्। अतो भवता रणरङ्गे उत्साहेनावश्यं स्थातव्यमित्याह—

**क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते।**
**क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परन्तप॥ ३॥**

हे पार्थ-अर्जुन, क्लैब्यं नपुंसकत्वं मा स्म गमः मा गाः। महेश्वरेणापि युद्धं कृतवति वीरक्षत्रिये निष्कळङ्कशक्तिमति त्वयि एतदेवमक्लीबत्वं नहि उपपद्यते नैव युज्यते। महावंशजातस्य तवेदं वचनं न युक्तम्। अतः एतादृशं क्षुद्रमतिनीचं हृदयदौर्बल्यम्। नेदं वैराग्यं किन्तु मनोदौर्बल्यमेव। आस्थाने दयादिकमपि हि मनोदौर्बल्यमात्रजन्यमिति भावः। इदं त्यक्त्वा उत्तिष्ठ युद्धायोपक्रमं कुरु। रणभूमौ दयाविष्करणं न शोभते तव॥ ३॥

एवं भगवता अर्जुनाय क्लीबत्वे मनोदौर्बल्ये चापादिते सति अर्जुनः 'न मे मनोदौर्बल्यं, न वा नपुंसकोऽहं, किंत्विदं अस्माभिः क्रियमाणं युद्धं न हि धर्मयुद्धम् अपि तु अधर्मयुद्धमित्यभिप्रायेणार्जुन उवाच—

**कथं भीष्ममहं संख्ये द्रोणं च मधुसूदन।**
**इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन॥ ४॥**

हे मधुसूदन, पूजार्हौ मम परमपुज्यौ भीष्मं पितामहं द्रोणमाचार्यं च संयुगे समरे कथमिषुभिर्बाणैः प्रतियोत्स्यामि ताभ्यां प्रतियुद्धं करिष्यामि। तैस्ताडितेनापि मया तेषां विषये गौरवेण वर्तितव्यम्। अतस्तूष्णीं स्थातव्यमिति मे निश्चयः। ते हि मम पूज्याः। अतो भीत्या नाहं युद्धादुपरमामीत्यर्थः॥ ४॥

एतादृशाधर्मादपि मम भैक्ष्याचरणमेव वरमित्याह—

**गुरुनहत्वा हि महानुभावान् श्रेयो भोक्तुं भैक्ष्यमपीह लोके।**
**हत्वार्थकामांस्तु गुरुनिहैव भुञ्जीय भोगान् रुधिरप्रदिग्धान्॥ ५॥**

महानुभावान् परमपूज्यान् गुरून् अहत्वा वधमकृत्वा इह लोकेऽस्मिन्जगति भैक्ष्यं भिक्षाचरणप्राप्तं भोगमपि भोक्तुमनुभवितुं श्रेयो हि उत्तमं खलु। गुरुहननाद्भिक्षाचरणमेव हितावहम्। गुरून् हत्वा तु रुधिरप्रदिग्धान् लोहितलिप्तान् अत्यन्तगर्हितान् अर्थकामरूपान् भोगान् इहैवास्मिन्नेव जगति लोके भुञ्जीय अनुभवेयम्। एवं च अस्यार्थकामभोगस्यात्यन्तपापरूपत्वात् परलोके मम नरकमेव संभवेत्। एतदपेक्षया एतल्लोके भिक्षाचरणमेव सर्वथा श्रेयोवहमित्यर्जुनस्याशयः॥ ५॥

क्षत्रियस्य खलु स्वधर्मत्वात् युद्धमेव हि श्रेयस्करम्, न तु भिक्षाचरणमिति धर्मशास्त्रमुपदिशतीति शङ्कायमाह—

**न चैतद्विद्मः कतरन्नो गरीयो यद्वा जयेम यदि वा नो जयेयुः।**
**यानेव हत्वा न जिजीविषामस्तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः॥ ६॥**

नः असाकं कतरत् गरीयः श्रेष्ठमित्येतन्न च विद्मः नैव जानीमः। यद्वा वयं जयेम धार्तराष्ट्रान् यदि वा नः अस्मान् धार्तराष्ट्राः जयेयुः इत्येतदपि न विद्मः। प्रत्युत, यान् दुर्योधनादीन् भ्रातून् हत्वा वयं न जिजीविषामः जीवितुमिच्छामः ते धार्तराष्ट्रा एव आवयोः प्रमुखे संमुखे

अवस्थिताः। तथा च भ्रात्रादीन् हत्वा प्राप्यं राज्यं नाहमिच्छेयमिति स्वीयमभिप्रायं निवेदयामासार्जुनः। बन्धुव्यामोहेन सः स्वकर्तव्यमेव व्यस्मरत्। दुर्योधनादयो यद्यपि दुर्भावनया महान्तं क्लेशं बाल्यादरभ्य कृतवन्तः। ते दयां नार्हन्त्येव। तथाप्यर्जुनः तेषु दयामाचरितुमिच्छति, दुष्टहननरूपं स्वीयं कर्म परित्यजति। एवमेव लौकिकास्सर्वेऽपात्रेषु दयामाचरन्तः स्वीयं दौर्बल्यं स्वयं जानन्तोऽपि स्वकर्तव्यनिर्वाहाय समुचितां योग्यतां संपादयितुं न प्रयतन्ते। य एवं योग्यतां संपादयन्ति तत्रैवेश्वरानुग्रहरूपो योगस्संभवति। एतादृशं योगयोग्यतयोस्सामरस्यमेव मानवकल्याणद्वारा लोककल्याणमपि साधयति। योगस्तावद्योग्यतामेवावलम्बते। योग्यतापि व्यवस्थितं जीवनमवलंबते। व्यवस्थितं जीवनमपि परमात्मविश्वासमवलंबते। यस्य विश्वासः तस्यैव मनोरथास्सर्वेऽपि संपत्स्यन्ते। नो चेत् सः विनश्येदेव। अतो विश्वास एव सर्वसौख्यमूलमित्यभियुक्ता वदन्ति। महात्मा बसवार्यः मानवकल्याणाय विश्वासस्यावश्यकतां सम्यग्विशदयति। "न विश्वसन्त्येव जनास्तु देवं तथापि तं नित्यमुपाह्वयन्ति। कर्तुं च विश्वासमपारयन्तस्तथापि मोहाद्विचरन्ति मन्दाः॥ विश्वासपूर्वं यदि वाह्वयेत तदा कुतोनोत्तरयेच्च देवः। विश्वासहीनो यदि देवमाह्वयेत् सद्यः पतेत्तत्कृतनिग्रहाङ्कुशः।" एषा सदा स्मर्येत चेत्तदा पापे मतिरेव नोत्पद्येत। एवमात्मविश्वासदारिद्र्यात् अर्जुनः मोहेन कर्तव्यं व्यस्मरत्॥

एवं युद्धं न कुर्यामिति रणरङ्गे वदन्नर्जुनः सद्वंशप्रसूतत्वात् मौर्ख्यमवलंब्य स्वनिर्णयो युक्तो वा नवा इति संशयमापन्नः अन्तर्हृदये विद्यमानेन तेनैव हृषीकेशेन प्रेरितः स्वकर्तव्यनिर्णयार्थं भगवन्तमेव शरणं गच्छति। तदानीं यत्कर्तव्यं तदुपदेष्टुं च सः पृच्छति—

**कार्पण्यदोषोपहतस्वभावः पृच्छामि त्वां धर्मसंमूढचेताः।**
**यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्॥**

यः अल्पामपि स्वक्षतिं क्षन्तुं न शक्नोति सः कुपणः । तस्य भावः कार्पण्यं दैन्यम् । तेन दोषेणोपहतः दूषितः स्वभावः स्वीयं चित्तं यस्य तादृशोऽहं, अत एव धर्मसंमूढचेताः धर्मे संमूढं मोहविशिष्टं चेतः मनः यस्य तादृशः । को धर्मः ? को वा अधर्मः ? इति विवेचनरहितोऽहं त्वा त्वामेव पृच्छामि । मे यत् श्रेयः युद्धकरणाकरणयोर्मध्ये उपादेयः श्रेष्ठो मार्गः कः स्यात् तत् निश्चितं यथा तथा ब्रूहि वद । अहं ते शिष्यो भवामि । त्वां प्रपन्नं शरणागतं मां शाधि शिक्षय । शास् अनुशिष्टौ इति धातुः । शिष्याय मह्यं धर्ममुपदिशेत्यर्थः ॥ २ ॥

एवं धर्मजिज्ञासया भगवच्छरणागतेर्मूलभूतं सकलविषयवैराग्यं स्वस्याप्यस्तीति अर्जुनो विज्ञापयति—

**न हि प्रपश्यामि ममापनुद्याद्यच्छोकमुच्छोषणमिन्द्रियाणाम् ।**
**अवाप्य भूमावसपत्नमृद्धं राज्यं सुराणामपि चाधिपत्यम् ॥ ८ ॥**

भूमावस्मिन्लोके असपत्नं शत्रुरहितं ऋद्धं समृद्धं राज्यं वा सुराणामाधिपत्यं वा यत् यत्किञ्चित् अवाप्य मम इन्द्रियाणां मनःप्रभृतीनां उच्छोषणं शोषणकरं शोकं यदपनुद्यात् नाशयेत् तत् न हि प्रपश्यामि । ऐहिकराज्यसंपादनेन वा स्वर्गराज्यसंपादनेन वा मदीयः शोको निवर्तेत इति न मे निश्चयोऽस्ति । अतो मम शोकनिवृत्त्युपायमुपदिशतु भवान् । अनेन स्वस्याध्यात्मशास्त्रोपदेशग्रहणाय इहामुत्रफलभोगवैराग्यादिकमस्तीति सूचितं भवति । एवमेव सर्वेषामपि जीवानां स्वीयस्वरूपं ज्ञातुमिच्छा व्यवहारसमये कदाचिदुत्पद्यत एव ; यतस्सर्वेऽपि आत्मान एव वर्तन्ते । परंतु तेषां शक्तिः स्सङ्कोचस्थितौ वर्तते । शक्तिविकासमधिगन्तुमेव तैर्व्यवहर्तव्यम् । व्यवहारास्सर्वेऽपि शक्तिविकासायैव निरूढा इत्यध्यात्मशास्त्रं निवेदयति । अयं च शक्तिविकासः मानवैस्तदाधिगम्येत यदा सर्वोऽपि व्यवहारः कायकरूपेण निरूढेत । कायकस्य च महत्त्वं शरणगीता सम्यगाविष्करोति । तत्र बसवार्यः

स्वदृष्टान्तेन तन्महत्त्वं प्रकटयति । “ कृषिं हि कुर्यां गुरुपूजनार्थं लिङ्गार्चनार्थं व्यवहारमेव । कुर्यां च सेवां चरतोपणार्थं शिवप्रियं स्यान्मम जीवनं तदा ॥ यावच्च कर्म क्रियतेऽद्य तत्फलं त्वय्यैव संपत्स्यत इत्यवैमि । त्वद्दत्तमर्थं गुरु-सङ्गमार्य समर्पये तुभ्यमनन्यभक्त्या । त्वामन्तरा नैव ददामि कस्मैचिदित्यवेत्यात्र वसामि तुष्टः ॥ ” इति । एवं गुरुलिङ्गजङ्गमात्मकस्य परमेश्वरस्य प्रीत्यर्थमेव व्यवहरन् मानवः नित्यसुखी संपद्यते । मानवजन्मसाफल्यं च इदमेव । एतां स्थितिमधिगतास्तु पुरुषाः स्त्रियो वा प्रकृतेर्वशं न गच्छन्ति ; किन्तु शिवमयमिमं प्रपञ्चमध्यात्मदृष्ट्या प्रीणयन्ति ; सर्वेषां हितं साधयन्ति च । तदीयं वर्तनं शरणगीतायां आदर्शतया निरूप्यते । भक्ताग्रगण्यो बसवार्यः एवं वदति । “ नैवाभिकांक्षे कमलोद्भवस्य स्थानं न विष्णोः पदवीमपीह । तथैव शंभोः पदवीमथान्यां न कामये सङ्गमदेव नित्यम् ॥ त्वद्भक्तपादार्चन-सक्तभृत्यस्थानं तु काङ्क्षे नियमेन देहि॥” इति । एतादृशं याचनमेव स्त्रीपुरुषाणां श्रेयस्करम् ; किन्त्वेतदपरिज्ञानात् लौकिकं फलमपेक्ष्यते । “ यस्मै यादृशं फलं देयन्, येन यत्कार्यं साधनीयम् ” इत्ययमंशः परमात्मनैव निर्णेतव्यः । एवं निर्णयमतिवर्तितुं न शक्यते यस्य कस्यापि । एतादृश्या अशक्ततया मुह्यमानोऽर्जुनः यथा परमात्मानं शरणमगच्छत् तथा स्त्रियः पुरुषाश्च स्वान्तर्गतं तमेव परमात्मानं यदि शरणं गच्छेयुस्तदा जगदिदं योगानन्दस्य विश्रान्तिस्थळं भवेत् । एवं च परमात्मनि शरणागतिरवश्यमनुष्ठेयेत्यादर्शं अर्जुनद्वारा व्यासमहर्षिः लोकाय प्रकटयति । “ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः । लिप्यते न स पापेन पद्मपत्रमिवांभसा ” इत्येवंरूपः भगवदुपदेशः मानवानां गहनतमं रहस्यं सार्वत्रिकतया विवेचयति । एतादृश्याः विवेचनाया अभावात् अर्जुनः भ्रान्तो बभूव । तथापि सत्सङ्गे स्थितः सः विवेकं प्राप्तुमैच्छत् । एवमेव सर्वे जीवा स्वीयं मोहं परित्यज्य विवेकमधिगन्तुं प्रयतेरन्निति भगवानपेक्षते ॥ ८ ॥

अन्ते किमासीदिति पृच्छन्तं धृतराष्ट्रं प्रति संजय उवाच—

एवमुक्त्वा हृषीकेशं गुडाकेशः परन्तपः ।
न योत्स्य इति गोविन्दं उक्त्वा तूष्णीं बभूव ह ॥ ९ ॥

परंतपः पराक्रमशाली गुडाकेशः अर्जुनः हृषीकेशं श्रीकृष्णमेवं उक्तप्रकारेण उक्त्वा कथयित्वा न योत्स्ये नाहं युद्धं करिष्ये इति गोविन्दं श्रीकृष्णं उक्त्वा तूष्णीं निर्व्यापारो बभूव ह बभूव किलेत्यर्थः ॥ ९ ॥

तमुवाच हृषीकेशः प्रहसन्निव भारत ।
सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः ॥ १० ॥

हे भारत हे धृतराष्ट्र, हृषीकेशः प्रहसन्निव श्रीकृष्णः अर्जुनमुपहसन्निव न तु कोपमाविष्कुर्वन्नित्यर्थः । अत्र श्लोकद्वयेऽपि हृषीकेशपदप्रयोगात् प्रहसन्निवेति च कथनात् इदं सर्वं भगवतः स्वस्य चेष्टितमिति सूचितम् । उभयोस्सेनयोर्मध्ये विषीदन्तं विषादं कुर्वन्तं तमर्जुनं इदं वक्ष्यमाणं वचः वाक्यं उवाच अकथयत् ॥ १० ॥

अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥ ११ ॥

अशोच्यान् शोचितुमनर्हान् भीष्मद्रोणादीन् प्रति त्वं अन्वशोचः शोकं कृतवानसि । एवं तदानीमेव त्वं प्रज्ञावादांश्च प्रज्ञावतां मेधाविनां वादांश्च भाषसे कथयसि । तदेतदुभयं च परस्परमत्यन्तविरुद्धमित्यर्थः । अशोच्यत्वमेव दर्शयति गतासूनिति । पण्डिताः पण्डा नाम आत्मज्ञानं तदेषां संजातं ते पण्डिताः आत्मज्ञानिनस्ते गतासून् गतप्राणान् मृतानित्यर्थः । अगतासूंश्च अगतप्राणान् जीवतो वा नानुशोचन्ति तत्र शोकं न कुर्वन्त्येव । त्वं तु आत्मज्ञानीव धर्माधर्मादिकमधिकृत्य सुदीर्घं भाषणमेव कृतवानसि । परंतु भीष्मादयः युद्धे देहं परित्यजन्तोऽपि वस्तुतो न म्रियन्त इत्यमुमंशं त्वं न जानासीति विषादस्थानमेतत् । मरणरहितात् भीष्मादीन् प्रति शोचसि चेति किमयमुन्मत्तप्रलापः ? इत्याशयोऽत्र ध्वन्यते ॥ ११ ॥

कुतस्तेषामशोच्यत्वमित्यत्र वस्तुतस्तेषां नित्यत्वमेवेत्याह—

न त्वेवाहं जातु नासं न त्वं नेमे नराधिपाः ।
न चैव न भविष्यामस्सर्वे वयमतः परम् ॥ १२ ॥

अहं अमूर्तपरमात्मनो दिव्यमूर्तात्मकः जातु कदाचिदपि न त्वेव नासं सर्वदा आसमेव । यथा अहमद्यास्मिन्देहे वर्ते तथान्यस्मिन् देहे प्रागध्यासं तथैवागामिनि कालेऽपि वर्तिष्ये । तथैव त्वमपि न नासीरिति विपरिणामः ; किंत्वासीरेव । तथैव इमे जनाधिपाः न केवलं भीष्मद्रोणादयः किन्तु सर्वेऽप्यत्रावस्थिता राजानश्च न नासन्निति विपरिणामः ; किं त्वासन्नेव । सर्वे वयं अतः परं एतद्देहनाशानन्तरमपि न चैव न भविष्यामः—अपि तु भविष्याम एव । एवं त्रिष्वपि कालेषु वयं सर्वेऽपि स्वरूपतो नित्यास्सनातना एव । कथमस्माकं नाशः ? कुतो वा शोकः ? अतः अशोच्याननुशोचंस्त्वं यथार्थतस्त्वत्स्वरूपं न जानासि ॥

ननु देहविनाशमधिकृत्यैवाहमधुना शोचामीति चेत्तदपि न युक्तमित्याह—

देहिनोऽस्मिन्यथा देहे कौमारं यौवनं जरा ।
तथा देहान्तरप्राप्तिः धीरस्तत्र न मुह्यति ॥ १२ ॥

देहिनः प्राणिनः अस्मिन्नेव देहे यथा कौमारं बाल्यावस्था, यौवनं युवावस्था, एवं जरा जीर्णावस्था च सहजतया भवन्ति, न तत्र कश्चित् शोचति शोचितुमर्हति वा । तथैव मरणमपि काचिदवस्था देहान्तरप्राप्तिरूपा । अतः एतच्च ज्ञात्वैव धीरः स्वाधीनबुद्धिमान् तत्र मरणविषयेऽपि न मुह्यति न शोकमोहादिकं प्राप्नोति । ज्ञानी न कदापि शोचति, बिभीते, मुह्यति वा । यः भयशोयमोहाननुभवति सः ज्ञान्येव न संपद्यते । त्वं तावत् ज्ञानं वदसि शोकं अनुभवसि च । ज्ञानशोकयोरेकत्रावस्थानं न शोभते । तेजस्त-मसोरिव तयोस्संमिळनं न कदापि युज्यते । त्वं यावत्पर्यन्तं भीष्मादीन्प्रति शोचसि तावत्पर्यन्तं तेषां नैजं रूपं न जानासि । यः अपाने शोचति सः

पात्रं न जानात्येव । य एव सत्पात्रे शोचति स एव तत्स्वरूपं यथार्थतो जानाति । एवमत्र देहावस्था वर्णिताः ॥ १२ ॥

ननु जानाम्येवाहं 'आत्मा नित्यः शरीरमेवानित्यम्' इति । तथापि तादृशशरीरसंबन्धवियोगादिप्रयुक्तः सुखदुःखादिर्लोकेऽनुभूयमानः नापलपितुं शक्यः । अतस्तादृशदुःखं, दुःखहेतुत्वं च पश्यतो मम शोकः कुतो न स्यादित्याशङ्कायामाह—

**मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ।**
**आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत ॥ १४ ॥**

मात्रास्पशास्तु मात्राः मायन्ते आभिः शब्दादय इति मात्राः श्रोत्रादीनि इन्द्रियाणि । तेषां स्पर्शाः शब्दादिभिः स्वविषयैः संबंधाः । शब्दस्पर्शरूपरसगन्धाः श्रोत्रचक्षुर्जिह्वाघ्राणेन्द्रियाणां विषयाः । तेषामिन्द्रियैः संयोगाः शीतोष्णसुखदुःखदाः शीतं कदाचित्, कदाचित् तद्विरुद्धतया उष्णं च । एवं कदाचित्सुखं कदाचित् दुःखं च ददत्येव ते विषयेन्द्रियसंयोगाः । तेषां स्वभावो हि तादृश एव वर्तते । स च दुरतिक्रम एव । अतस्ते संयोगाः दुस्त्यजास्सन्तः सर्वदा संभवन्त्येव । तर्हि तत्र किं कर्तव्यमित्यत्राह आत्मेति । ते हि आगमापायशीलाः आगच्छन्ति स्वयमेव गच्छंति च ; न तु स्थिरतया यत्र कुत्रापि तिष्ठन्ति । एवं स्वयमेव ते यावन्नश्यन्ति तावत्पर्यन्तं तान् तितिक्षस्व सहस्व । तेषामवर्जनीयत्वात् सहनैवात्र कर्तव्या । यः सुखं दुःखं वा तात्कालिकमिति ज्ञात्वा सहते सः स्वरूपज्ञानं लब्ध्वा नित्यसुखी भवति । यदेव शोकं परिहरेत् तादृशं ज्ञानमेव मानवैरधिगन्तव्यमिति भावः । हे भारत इति अर्जुनसंबोधनम् ॥ १४ ॥

एवं शीतोष्णादीन् सुखदुःखादींश्च द्वन्द्वान् सहतः महत्फलं संभवेत्, तदसहतस्तद्वशीभूतस्य तु संसारक्लेशः नित्यमेव स्यादित्याह—

**यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ ।**

समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥ १५ ॥

हे पुरुषर्षभ पुरुषश्रेष्ठ अर्जुन, समदुःखसुखं सुखदुःखप्राप्तावपि हर्षविषादादिकमकुर्वन्तं निर्विकारं अत एव धीरं सदा धीमन्तम्। हर्ष-विषादादिपरवशाः खलु पुरुषाः स्त्रियश्च मोहादिकं प्राप्नुवन्ति। मोहश्च बुद्धि-शक्तेर्विनाशकः। अतः समदुःखसुखस्य जीवस्य बुद्धिः सदा प्रसन्नैव वर्तते। तादृशं यं पुरुषं एते सुखदुःखादयो न व्यथयन्ति न पीडयन्ति न चालयन्ति। सः तादृशनिर्विकारचित्त एव जीवः अमृतत्वाय मोक्षाय शाश्वतद्वन्द्वादिनिवृत्ति-पूर्वकमहानन्दरूपमोक्षप्राप्तये कल्पते समर्थो भवति। यस्तु सुखदुःखपरवशो भवति स तु नष्टबुद्धिरेव स्यात्। अतस्तस्य पुनःपुनः शोकादिप्राप्तिर्भवेदेव। स सर्वदा संसरन्नेव वर्तेत। कदापि सः स्थिरतयैकत्र न तिष्ठेत्। अतश्च तस्य पाशरूपान्मोहान्मुक्तिः न संभवेदित्यर्थः ॥ १५ ॥

शोकमोहाकरणाय कारणान्तरमप्युपदिशति परमात्मा जीवहितेच्छया—

नासतो विद्यते भावः नाभावो विद्यते सतः।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥ १६ ॥

असतोऽविद्यमानस्य वस्तुनः भावः सत्ता न विद्यते। एवं सतश्च वस्तुनः अभावः असत्त्वापि न विद्यते। एवं सदसतोः उभयोरप्येतयोः अन्तः निष्कर्षः तत्त्वदर्शिभिः तत्त्वसाक्षात्कारिभिश्च साक्षात्कृतः। तथा च मनुष्यप्रयत्नेन न कस्यापि व्यत्यासः कर्तुं शक्येत। अयं च व्यवस्थितो मार्गः न केनाप्यतिक्रमणीयः। किमर्थं वृथा चिन्ता, शोकमोहादिर्वा ; यतः वस्तुनां स्वभावो यादृशः तादृश एव सर्वत्रापि तेषां स्थितिः। स्वभावमनुसृत्यैव विवेकिभिर्व्यवहर्तव्यमिति भावः ॥ १६ ॥

सदसतोः स्वरूपं किम् ? सदा वर्तमानः सन् कः ? इत्यत्राह—

अविनाशि तु तद्विद्धि येन सर्वमिदं ततम्।
विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति ॥ १७ ॥

येन सर्वमिदं जगत् ततं व्याप्तं तत् तदेव तु अविनाशि अविनाश-स्वभावं विद्धि जानीहि । जगद्व्यापकं ब्रह्मैव सर्वदा वर्तमानं त्रिकालाबाधितं सदित्यभिधीयते । व्याप्यं जगच्च तद्भिन्नत्वात् जडरूपतया असदित्युच्यते । चेतनात्मकं परब्रह्म स्वीयाद्भुतशक्तिमहिम्ना सर्वमपि जगत् स्वयमेव धृत्वा सर्वाधारं सन्तिष्ठते । पञ्चभूतात्मकं जगत् जडत्वात् अनेकाकारेण विपरिणमत् असदिति परिगण्यते । अयं च विपरिणामः सतः परमात्मनः सान्निध्येनैव प्रवर्तते । अत एतन्मूलकारणस्य अव्ययस्य नाशरहितस्य अस्य परशिव-ब्रह्मणः विनाशं ध्वसं कश्चित् कोऽपि कर्तुं नार्हति, न शक्नोति च । "नाभावो विद्यते सतः" इत्युक्तत्वात् सतो ब्रह्मणः सर्वाधारस्य सर्वकारणस्य सर्व-प्रेरकस्य सर्वव्यापकाखण्डलिङ्गस्य नाशः कथं कर्तुं शक्यः स्यात् ?

एवं सन् कः ? इत्यस्योत्तरमुक्त्वा असन् कः ? इत्यस्योत्तरमाह—

**अन्तवन्त इमे देहाः नित्यस्योक्ताः शरीरिणः ।**
**अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत ॥ १८ ॥**

नित्यस्य सदातनस्य अत एवाविनाशिनः नाशरहितस्य अप्रमेयस्य प्रत्यक्षादिप्रमाणैरवगन्तुमशक्यस्य सूक्ष्मस्य शरीरिणः अतिसूक्ष्मपरिमितस्य शरीरिणः शरीरस्वामिनः आत्मनः ये इमे देहा पञ्चभूतसमूहात्मकाः वर्तन्ते ते खलु अन्तवन्तः विनाशवन्तः । शरीरेऽस्मिन् व्यवहरन् चेतनः यद्यपि तत्प्रभुरेव । शरीरसंपर्कात् सः संस्पृष्टशरीरधर्मा दुःखी संवृत्तः शोचति । अयं च शोकः मोहाज्ञानमूल एव । चेतनः स्वीयमात्मवैशाल्यमधिगन्तुमेव देहं लब्धवान् । तथापि देहोऽहंभावनया चेतनो जीवः देहात्मविवेक-मजानन् आत्मानमपि नश्वरं मनुते । एवं च सतः आत्मनः अभावो नास्ति । तस्य न कदापि विनाशः संभवेत् । तथा च असतो देहस्य भावो नास्तीत्युक्तं भवति । अत्र देहस्यापि सूक्ष्मरूपतया प्रळये परमात्मन्येव स्थित्वा सृष्टिकाले तदिच्छानुरोधेन बहिरागत्य तस्यैव विनोदनायोपयुक्तत्वात् देहेऽप्य-

नित्यतामारोपयितुं न शक्यते । तथापि देहस्य पञ्चत्वप्राप्त्या अन्तवद्भावः अत्र निर्दिश्यते कृष्णपरमात्मना । अयमेव देहो यदि सम्यगुपज्यते तदा तत्सहकारेणैव देहिनो याथार्थ्यं विज्ञायते । देहस्थो दोषः यदि निर्मूलं निष्कास्येत तदा स एव आत्मकल्याणसाधकः संपद्यते । शरणगीताया-मयमंशः सम्यक् निरूप्यते । "उत्पाट्यते यद्यहिदन्तपंक्तिः तदा च तेनैव रमेत मानवः । तथैव देहे विषपाप्मनश्च निष्कासने तत्र वरं हि वासः ॥ मातैव चेद्राक्षसभावयुक्ता शिशुर्न रक्ष्येत तथैव लोके । तथैव काये विकृतिस्तु जाता जीवं न रक्षिष्यति सत्यमेतत् ॥ य एव देहे गुरुमल्लिकार्जुन त्वयानुगृह्येत स एव धन्यः ॥" एवं शरीरव्यामोहरूप-दोषनिवृत्त्या आत्मा केवलः शुद्धो भवतीति भावः । अत एव शिवयोगिन-श्शरणाः सार्वजनिकहितदृष्ट्या एवमुपदिशन्ति । "यूयं किमर्थं जनवक्रदृष्टेर्नि-वृत्तये सम्मिळिता यतध्वे । स्वं स्वं शरीरं प्रथमं विशोध्य मनस्समाधित्सत मा परस्य । दुःखाय शोचिष्यथ सत्यमेतत् देवो न विश्वासमियात्तु तेन ॥" इति । एवं देहशोधनेनात्मसंस्कारं प्राप्तुं न केवलं शिवशरणाः किन्तु महर्षयोऽपि मानवमुत्तेजयन्ति । एवं शरीरात्मनोः स्वभावस्य स्वरूपस्य च व्यवस्थितत्वात् हे भारत अर्जुन, त्वया नूतनतया यत्किञ्चित्कर्तुं न शक्यते । धर्मसाधनार्थमेवेश्वरानुग्रहात्समागतस्यास्य देहस्य सहकारेणैव शत्रुहननरूपो धर्मः अवश्यं कर्तव्य एव । अतः त्वं युध्यस्व युद्धं कुरु । युद्धकरणे न दोषः । यदर्थमयं देह आगतः तत्कार्यमवश्यं करणीयमेव । नो चेत् महती विनष्टिः संभवेत् । देहे स्वांतर्लीनस्येश्वरस्याग्रहेण त्वं विनश्यसि । आत्म-कल्याणाभिलाषिभिः सर्वैरपि देहो न कदापि निन्द्यो भवितुमर्हति । परंतु देहात्मविवेकस्तावदधिगम्यः । एतादृशविवेकाभावादेव त्वं दुःखी संवृत्तः इति अर्जुनव्याजेन जागतिकान् सर्वानपि बोधयति परमात्मा ॥ १८ ॥

विषयस्वरूपे एवं स्थिते यः कश्चित् देहात्मविवेकरहितः 'अहं कंचित् हन्मि' 'अहं तेन हतः' इति वा जानीयाच्चेत्सः भ्रान्त एवेत्याह—

**य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।**
**उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ १९ ॥**

यः कश्चिदविवेकी एनं प्रकृतं नित्यं शरीरिणं शरीरे विद्यमानं जीवं हन्तारं हननक्रियायाः कर्तारं वेत्ति जानाति, यश्च यो वाऽविवेकी एनं नित्यं शरीरिणं जीवं हतं हननक्रियायाः कर्मभूतं वेत्तीत्यनुकर्षः । तावुभौ न विजानीतः आत्मतत्त्वं न ज्ञातवन्तौ अविवेकिनावित्यर्थः । कुत इत्यत्राह नायमिति । अयं शरीरी न हन्ति नहि हननकर्ता भवति । तथैव न हन्यते न च हननकर्मापि भवति । एतदुभयमपि आत्मनो जीवस्य न कदापि संभवेत् । ननु नित्यत्वात् जीवस्य हननकर्मत्वनिषेधो युज्यते । कथं वा हननकर्तृत्वस्यापि निषेधः संभवेत् ? नित्यत्वकर्तृत्वयोर्नहि विरोधः । सनातनोऽपि चेतनः यद्यपि वध्यो न भवेत्; तथापि हननकर्ता भवितुमर्हत्येव इति चेत् नात्रात्मनः कर्तृत्वसामान्यं निषिध्यते । किन्तु हननकर्तृत्वं, तत्राप्यात्मकर्मकहननकर्तृत्वम् । आत्मनः नित्यत्वात् तत्कर्मकहननं अप्रसिद्धमेव । यदा चात्मकर्मकहननमेवाप्रसिद्धं तदा तादृशंहननकर्तृत्वं वा कस्य स्यात् ? शशशृङ्गस्यैव अप्रसिद्धत्वे शशशृङ्गकर्तृत्वं नहि कस्यचिद्भवितुमर्हति । अतः आत्मकर्मकहननकर्तृत्वनिषेधे न कोऽपि दोषः संभवेत् ॥ १९ ॥

आत्मनः हननकर्मत्वाभावमेव सुविशदमुपपादयति—

**न जायते म्रियते वा कदाचिन्नायं भूत्वाऽभविता वा न भूयः ।**
**अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥ २० ॥**

अयमात्मा देहाधिपो जीवः न जायते नोत्पद्यते । अत एव कदाचिदपि सः न म्रियते । "जातस्य हि ध्रुवो मृत्युः" इत्यभियुक्ता वदन्ति । यः उत्पद्यते स एव विनश्यति । उत्पत्त्यभावादेव जीवस्य विनाशो न संभवति । अत एव भूत्वा भवनक्रियावान् स्थित्वा भूयः कदाचित् न वाऽभविता भवनक्रियाशून्यो भवेत्; यतः सदैव भवति सः । 'कदाचिन्न भवति

कदाचिद्भवति' इति व्यवहारे हि तस्य उत्पत्तिः सिद्ध्येत । यः सदा वर्तते तस्य उत्पत्तिः कथं संभवेत् ? यः सर्वदा भवति सः न कदापि अभविता भवेत् किन्तु सः सदा भवत्येव । एवं च किं तत्स्वरूपमित्यत आह—अजः न जायत इत्यजः उत्पत्तिरहितः, अत एव नित्यः विनाशरहितः। एवमुत्पत्तिविनाश-रहितत्वादेव शाश्वतः सदा विद्यमानः सः । सदा विद्यमानत्वादेव पुराणः अनादिः । अयमात्मा शरीरे हन्यमानेऽपि न हन्यत एव । अत्र प्रोक्तः शरीरनाशोऽपि तद्घटितानां पञ्चतत्वानां परस्परविश्लेषणमेव । चेतनरूपे जीवे एवं संघटनाभावात् विभजनमपि न संघटते । तथा च शरीरस्यैव हननकर्मत्वं, न त्वात्मन इत्युक्तं भवति ॥ २० ॥

एवं शरीरात्मनोः स्वभावस्य विविक्तत्वात् 'नायं हन्ति न हन्यते ' इत्येतत्समर्थितं भवतीत्याह——

वेदाविनाशिनं नित्यं य एनमजमव्ययम् ।
कथं स पुरुषः पार्थ कं घातयति हन्ति कम् ॥ २१ ॥

हे पार्थ, शरीरात्मविवेकी एनमात्मानं अजमुत्पत्तिरहितं, अत एवावि-नाशिनं विनाशरहितं, अत एव नित्यं सदा वर्तमानं, ततश्चाव्ययं विकार-रहितं यः वेद ज्ञातवान् सः पुरुषः कं कञ्चित्पुरुषं कथं घातयति ? कः कं वा पुरुषं कथं हन्ति । तादृशविवेकी 'अहमस्य हन्ता' इति वा 'अयं मया हतः' इति वा कथमात्मानं जानीयात् ? यस्तु देहात्मभ्रमादिभिः अहङ्कारादिविमूढः स एव "अहं हन्ता, अयं हतः" इति जानीयात् । अत एव वक्ष्यति "यस्य नाहंकृतो भावः बुद्धिर्यस्य न लिप्यते । हत्वापि स इमान् लोकान् न हन्ति न निबध्यते ॥" इति । देहे विद्यमानस्येश्वरस्य सेवनार्थं यः देहेन्द्रियादिकमुपयुङ्क्ते सो नित्यसुखी भवत्येव । देहदृष्ट्या यो व्यवहरति स एव दुःखं समश्नुते । महात्मा बसवार्यः स्वदृष्टान्तेन देहोपयोगविधानं निर्दिशति । "देहस्य दुःखं प्रसमीक्ष्य भीतः रक्षेति देवं न कदापि याचे ।

शरीररक्षार्थमुपायमेकं अन्वेषयन्भीत इहैव भृत्यः ॥ देहीति देवं न कदापि याचे यद्भाव्यमेवेह तदस्तु नित्यम् । निन्दा तु स्तोत्रं ह्यनुयातु भृत्यं तस्योभयं साधु भवेद्धि सत्यम् ॥ सुखं च दुःखं च न चैव याचे नवा निराकर्तुमपि प्रवृत्तः । तथा भवन्तं गुरुसङ्गमेश तथैव चान्यान् न कदापि याचे ॥ इति एवं च शरणाः देहदुःखं सन्तोषेण सहमानाः सत्कार्यसाधनार्थैव देहं युक्तया रीत्या उपयुञ्जते । एवमेव महर्षयः देहमात्मकल्याणायैव रक्षन्तः देहविषयकं भ्रमं परित्यज्य नित्यसुखिन आसन्नेव । ते तावत् देहविषये सद्भावना एव आसन् । "भद्रं कर्णेभिः शृणुयाम देवाः भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ॥" इति दृढकायेन दीर्घायुष्मन्तस्ते देवहितं साधयन्त आसन्निति सम्यक् विज्ञायते । तथैव महर्षयोऽन्येष्वपि देहारोग्यं हृत्पूर्वकं प्रशसन्ते । "पश्येम शरदश्शतम् । जीवेम शरदश्शतम् । नन्दाम शरदश्शतम् । मोदाम शरदश्शतम् । अजीतास्स्याम शरदश्शतम् ॥" इत्यादिना देहमहत्त्वं सम्यक् प्रतिपादयन्ति ते । एवं च देहेन निर्वर्त्यमानं सर्वमपि कार्यं विवेकी निस्स्वार्थतया कुर्वन् निर्लिप्त एव वर्तेत । तादृशो विवेकः देहवतोऽर्जुनस्य आवश्यक आसीत् । तदेव सर्वेषामपि व्यवहारसमयेऽपेक्ष्यत इति भगवानुवाच ॥ २१ ॥

ननु आत्मनां नित्यत्वेऽपि 'शरीरसंबन्ध एवोत्पत्तिः शरीरवियोग एव मरणम्' इति शरीरत्यागादिकं दुःखहेतुतया लोके दृश्यत एवेति तादृशानिष्टाचरणरूपं हननं कथं कर्तुं युक्तम् ? इत्यत्र शरीरवियोगस्य वस्तुतः सन्तोषहेतुत्वमेव । अतो नित्यानन्ददायकस्य तस्य मरणस्य दुःखहेतुत्वमपि भ्रान्तिकृतमेवेत्याह परमात्मा—

**वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि ।**
**तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥ २२ ॥**

नरो मनुष्यः जीर्णानि दुर्बलतां गतानि प्राचीनानि वासांसि वस्त्राणि

विहाय त्यक्त्वा अपराण्यन्यानि नवानि नूतनानि दृढानि वासांसि इत्यस्यात्राप्यावृत्त्या अन्वयः। यथा गृह्णाति स्वीकरोति तथा देही देहस्वामी जीर्णानि जरया पीडितानि दुर्बलानि शरीराणि। शीर्यन्त इति शरीराणि। स्वयमेव नश्वराणि तादृशि विहाय त्यक्त्वा अन्यानि नवानि नूतनानि सुदृढानि शरीराणि इत्यस्याप्यावृत्तिः। संयाति प्राप्नोति। तथा च प्राचीनवस्त्रत्यागपूर्वकनूतनवस्त्रपरिग्रहे यथा सर्वेऽपि सन्तुष्यन्ति तथैव देहात्मविवेकिना एकशरीरत्यागपूर्वकशरीरान्तरपरिग्रहे सन्तोष्टव्यमेव, न दुःखितव्यमित्यर्थः। एतादृशस्य नश्वरस्य देहस्य संरक्षणाय अविवेकिनः महत्पापमाचरन्ति। मृत्युमुखसन्निहितोऽपि मानवः देहदुःखमगणयन्नेव भोगार्थं प्रयतते। देहदृष्ट्या व्यवहरतो मानवस्य मौर्ख्यं सम्यगाविष्करोति शरणगीता। "यथा च भेकः पवनाशनस्य मुखे विलग्नः सरघां समाक्षिपेत्। तथैव मृत्योर्मुखसक्त एषो जीवस्समासज्जति भोगलेशे॥ शूलं समारोहति यश्च चोरः सर्पिः पयः प्राश्य बुभुक्षयैव। जीवेत्कियन्तं समयं स भूयः आचक्ष्व मह्यं शरणार्थिने त्वम्॥ विनश्वरं देहमिहावलंब्य मिथ्याप्रयोगं विनियुज्य देही। पुष्णाति चेत्स्वोदरमेव नित्यं तं सज्जनार्यो नहि विश्वसेद्ध्रुवम्॥" इति। एवं देहरक्षणार्थं यः असत्यं पन्थानमनुवर्तते सः ईश्वरानुग्रहं न लभत एव। परं तु शिवयोगिवर्याः नश्वरमपि देहं देवालयं बुध्वा तत्रैव स्वीयं शिवानन्दमनुभवन्ति। अल्लमार्यः स्वदेहसहकारेणैव परमात्मसस्यं श्रद्धया अवधानेन च संवर्ध्य तदीयं फलमानन्दरूपं गुरोः प्रसादात् यथा अन्वभवत् तथान्येऽपि साधकाः देहं नश्वरभावनया न दूषयेयुरिति तान् स्वदृष्टान्तेन बोधयति। "स्वदेहमेवोपवनं विधाय मनःखनित्रेण च तं खनित्वा। भ्रान्तिं समूलां परिहाय चित्ते संसारलोष्टं विनिभिद्य युक्त्या। स्वान्ते निखन्यां परमात्मबीजं वाप्यास्सहस्रारसमाह्वयायाः। प्राणाख्ययन्त्रादुदकं सुषुम्नया निषिच्य सम्यक् परिपोषितं मया॥ पञ्चैव गावो न हि कुर्युरत्र विनाशमित्येव विचिन्त्य भक्त्या। क्षमासमत्वाख्यवृतिं विधाय तत्रावधानेन तदेव सस्यम्॥ गुहेश्वर त्वत्कृपाया व्यवर्धयंस्ततो

हि सर्वो भवतो विलासः ॥" इति। एवं भगवत्प्रसादलब्धोऽयं देहः तदन्तर्विराजमानस्य परमेश्वरस्य समर्चनद्वारा तत्सन्दर्शनाय परमं साधनमिति विवेकिभिर्भाव्यम्। एतादृशयोगप्राप्तये समागतोऽयं देहं यदि भोगाय केवलमुपयुज्येत तदैव महती हानिरुत्पद्येत। अतो देहः यावत्पर्यन्तं बलिष्ठो वर्तेत तावदवधावेव तत्रत्यं सत्यवस्तु ज्ञातुमनुभवितुं च मानवाः यतेरन्निति भगवान्निरीक्षते। यः तादृशमनुभवं लब्धवान् तस्य देहवियोगः न कदापि दुस्सहो भवेत्। अज्ञानिनोऽपि जीवस्य मरणं तावत् नूतनदेहस्वीकार एव। ज्ञानिनस्तु मरणं नित्यसुखात्मकस्य गृहस्योद्घाटनमेव। स्वदेहे अनुभूतः आनन्दः मरणानन्तरमपि नित्यतया अनुभूयते। एवं च मानवैराध्यात्मनिष्ठैर्मरणभीतिर्न कदाप्यादर्तव्येति भावः ॥ २२ ॥

एवं शरीराणामेवोत्पत्तिः क्षयश्च ; न त्वात्मन इत्याह—

**नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः।**
**न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥ २६ ॥**

देहे विद्यमानोऽपि जीवात्मा "आत्मायं केवलः शुद्धः शिवस्यांशः सदामलः। नित्यो निरञ्जनः शान्तस्तस्मादात्मा स्वयं शिवः ॥" इत्यनुभवसूत्रे मग्गेमायिदेवः जीवात्मस्वरूपमभिधत्ते। शिवांशो जीवः स्वयं शुद्धो निर्लिप्तः शान्तश्च वर्तते। मलावृतस्सन् जननमरणचक्रे संसरन्नपि जीवः वस्तुतः शिवत्वात् शिवोपासनेन शिवो भवितुमर्हति। यथा शिवः निराकारस्तथा तदंशभूतो जीवः देहे स्थित्वापि स्वयं निर्लिप्त एव वर्तते। तस्य भयशोकमोहादिकं वस्तुतो नास्ति। तं च देहिनं शस्त्राणि आयुधानि नहि छिन्दन्ति नहि छेदनं कुर्वन्ति ; किन्तु देहमेव तानि छिन्दन्ति। एवं देहिनं पावकः अग्निरपि न दहति न भस्मीकरोति, किन्तु देहमेव अग्निर्भस्मीकरोति। एवं एनं देहिनमात्मानं आपो जलानि न च क्लेदयन्ति नैवार्द्रीकुर्वन्ति। किन्तु जलानि शरीरमेवार्द्रीकुर्युः। एवं मारुतो वायुः एनमात्मनं न शोषयति न

शुष्कं करोति। तथा च लोके छेदनदहनार्द्रीभावशोषणहेतवः शस्त्राग्निजल-वायवः आत्मनि न कञ्चिदपि विकारं कर्तुं शक्नुवन्ति। एतादृशं निर्मलात्म-स्वरूपमजानानः पुरुष आत्मानं देहं मन्वानः देहदुःखेन लिप्यते। अयं च स्वयंकृतापराधः स्वेनैवानुभवितव्य इत्यर्थः ॥ २३ ॥

कुतः अयमात्मा देहस्थोऽपि विकारं न प्राप्नोतीत्यत्राह—

**अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।**
**नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥ २४ ॥**

यतः अयमात्मा अच्छेद्यः शस्त्रादिना न हि च्छेत्तुमर्हः। अदाह्यः न वह्निना दग्धुमर्हः। अक्लेद्यः न जलेनार्द्रीकर्तुमर्हः। अशोष्य एव च न वायुना शुष्कीकर्तुमर्हश्च। अतो नैनं छिन्दन्ति शस्त्राणि इत्याद्युक्तम्। अच्छेद्यत्वादिक-मेव कथमात्मनः? तत्सिद्धौ खलु नैनं छिन्दन्ति शस्त्राणि इत्यादि सङ्गच्छेतेत्य-त्राह नित्य इत्यादि। यतः आत्मा नित्यः उत्पत्तिविनाशरहितः अत एव सर्वगतः विभुः आकाश इव सर्वव्यापकः। नहि विभोराकाशस्य छेदनादिकं केनचित्कर्तुं शक्यम्। अत एव स्थाणुः स्थिरः। अत एव अचलः न केनापि चालयितुमपि शक्यः। एवं नित्यत्वादिहेतुभ्यः सनातनः सदैव विद्यमानः। शरीराणि तु नश्वराणि प्रत्यक्षत एव दृष्टानि। अतः छेदनादिकं शरीरस्यैव, न त्वात्मन इत्यर्थः। शरीराभिमानेन प्रवर्तमानो जीवात्मैव छेदनादिकं यद्यपि अनुभवति। स एव शरीरदृष्ट्या प्रवर्तमानं व्यवहारं आध्यात्मदृष्ट्या यदि विवेकतः परिवर्तयेत् तदा तस्य शरीरेण न कोऽपि बाधः सञ्जायेत। एवं देहात्मविवेकिनि देहस्यैव शिवभावनया परिणमनात् तदीयो विकारस्तेन नानु-भूयते। अयमेव विशेषो विवेकिनस्तु मूढात्। देहविकारान् मूढः पश्यति ; विवेकी नु न गणयति। तथापि रोगादिविकारास्तत्र वर्तन्त एव। "सरोगानि शरीराणि" इत्यभियुक्ता वदन्ति। रोगाश्रयत्वं शरीरस्य लक्षणम्। रोगरा-हित्यमात्मनो लक्षणम्। आरोग्यमेव तस्य लांछनम्। शरीरसंपर्कादविवेकेन सः

सहजतया रोगी संवृत्तः। स्वान्तर्विद्यमानं शिवं ज्ञात्वा तदुपासनं च कुर्वन् जीवः स्वयं शिवो भूत्वा निर्मलः अरोगश्च सञ्जायते। एवं शरीरस्य विकारं स्वस्य नित्यत्वं च सदा स्मरन्मानवः नित्येन परमशिवेन योगरूपाय नित्यसंपर्काय देहं समुपयुञ्जीत। देहे ईश्वरस्यैव सारवत्त्वात् अयं संसारः देहिन एव सार्थकस्संपद्येत। तथाच देहवन्तस्सर्वेऽपि यद्यात्मज्ञानिनो भवेयुस्तदैव तेषां नित्यसुखं संभवेत्। तदभावे, मानवानां परस्परसंबन्धः न कदापि शोभेत; किन्तु अनर्थश्च उत्पद्येत। सर्वेष्वपि शरीरिषु जीवान्तर्यामी गुहेश्वर एव विश्वासयोग्यः। अयमंशः बसवार्येण सम्यगभिहितः। "चन्द्रोदयादुच्चयमेति वार्धिस्तस्यास्तकाले परिहीयते सः। मुनिर्यदापः पिबति स्म वार्धेः क्रिमागतोऽब्धेः सहकर्तुमिन्दुः॥ यदा तु राहुर्ग्रसते हि चन्द्रं तदा समुद्रः किमु याति मध्ये। न कोऽपि देव प्रददाति रक्षां त्वमेव दाता जगदेकबन्धुः" इति। एवं शरीरिषु नित्यो निरञ्जनः परमशिव एव सर्वेषामपि विश्वसनीय आदरणीयश्च। तदपरिज्ञानादेव अर्जुनः भ्रान्त्या स्वकर्तव्यं व्यस्मरत्। "अरिदोडे शरण, मरेतरे मानव" इति शरणनामुक्तिः सर्वानपि साधकान् सदाचारे प्रेरयन्ती परिशोभते। अतः शरीरात्मविवेकेन यः प्रवर्तते स एव शरीरविकारासंस्पृष्टः सर्वमपि कर्म कर्तव्यदृष्ट्या भगवदाराधनभावनया च निर्वहति। एतादृशः ज्ञानयुक्त एव आचारः न केवलमर्जुनस्य किन्तु सर्वेषामप्यावश्यक एवेति भगवानुपदिशति॥ २४॥

**अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते।**
**तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि॥ २५॥**

न नित्यत्वादिकमेव केवलमात्मनो लक्षणं किन्तु अव्यक्तत्वादिकमविवर्तत इत्यत आह अव्यक्त इति। अयमात्मा अव्यक्तः न कस्यापि कदापि घटादिवत् व्यक्तः। अतस्तादृशस्य छेदनादिकं केन कर्तुं शक्यम्? यतस्सः न कस्यापि व्यक्तः अत एव अचिन्त्यः एवमिदमिति चिन्तयितुमशक्यः।

यस्तु घटादिः व्यक्ततया इन्द्रियग्राह्यः स तावत् 'एवमयम्' इति चिन्तयितुं शक्यः। आत्मा तु न व्यक्तः, अत एव न चिन्त्यः। एतादृशस्यामूर्तस्य शरीरिणः शस्त्रादिना छेदनं वा कथं संभवेत्? प्राकृतमूर्तरूपवदेव वस्तु शस्त्रेण च्छेत्तुं शक्यते। अमूर्तः आत्मा कथमेव केन वा छिद्येत? अत एवायमविकार्यः न विकारार्हः विकारयितुं न शक्य इत्युच्यतेऽनुभविभिः। तस्मादेव एनमात्मानं एवमुक्तप्रकारेण देहविलक्षणत्वादिना विदित्वा ज्ञात्वा अनुशोचितुं 'कथमेते मया हन्तव्या' इति दुःखितुं नार्हसि। आत्मज्ञान्येव भयशोकमोहविदूरो भवति। तं विहाय इतरे सर्वेऽपि सर्वदा शोचन्त एव कालं यापयन्ति। अतो भवता युद्धेऽस्मिन् शोको न कर्तव्यः॥ २५॥

एवमात्मनो नित्यत्वं जानतस्तव न तेषां वधप्रयुक्तः शोकः प्रसज्येत। यदि च मोहात्तथा न जानासि; परन्तु आत्मानं नश्वरमेव जानासि तदापि न शोकस्य प्रसक्तिरित्याह—

**अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम्।**
**तथापि त्वं महाबाहो नैवं शोचितुमर्हसि॥ २६॥**

अथ च अथवा एनं प्रकृतमात्मानं नित्यजातं नित्यं जातमेव। जननमेवास्य स्वभाव इति मन्यसे, अथवानित्यं मृतं वा सदा म्रियमाणमेव वा मन्यसे यदि उत्पत्तिविनाशस्वभाव एवायमात्मेति त्वं मनुषे चेत् तदा भवतस्तादृशी बुद्धिरियं तात्कालिकी न तु वास्तविकी इति बोद्धव्यम्। तथापि एवं यदि त्वमङ्गीकरोषि, हे महाबाहो पराक्रमशालिन् अर्जुन, त्वमेवमुक्त-प्रकारेण शोचितुं शोकं कर्तुं नार्हसि न युक्तोऽसि। यतोऽयमात्मा जनन-स्वभावो मरणस्वभावश्चेति जानासि, तर्हि जननमरणयोः स्वभावत्वेन, "स्वभावो दुरतिक्रमः" इति न्यायेन तयोरवर्जनीयत्वात् कुतः शोकस्संभवेदित्यर्थः॥

**जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च।**
**तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि॥ २७॥**

जननमरणयोः शरीरस्वभावत्वमेव प्रतिपादयति । जातस्य उत्पन्नस्य हि शरीरस्य मृत्युर्मरणं ध्रुवः स्थिरः । एवं मृतस्य पुनरपि जन्म उत्पत्तिश्च ध्रुवो निश्चितः । एवमुत्पत्तिविनाशावस्य स्वभावाविति हि मन्यसे त्वम् । तस्मात्कारणात् अपरिहार्ये केनापि परिहर्तुमशक्येऽर्थे विषयेऽस्मिन् त्वं शोचितुं शोकं कर्तुं नार्हस्येव ॥ गन्तुमेवागतोऽयं देहः कथं वाऽत्र तिष्ठेत् ? "जीविते को हि विश्रंभः मृत्यौ प्रत्यर्थिनि स्थिते" इति ह्यश्वघोषो वदति बुद्धचरिते । अत एव काळिदासोक्तिरपि सङ्गच्छते । "क्षणमप्यवतिष्ठते श्वसन् यदि जन्तुर्ननु लाभवानसौ" इति सः शरीरस्य क्षणकालिकमवस्थानमेव महालाभं मनुते । "शरीरमाद्यं खलु धर्मसाधनम्" इति तदीयोक्तिस्सर्वदा सर्वेषां स्मरणीय एव । 'शारीरकं कर्म यथा मानवं पावयति ? तस्यैव किमर्थं प्राधान्यं देयम् ?' इत्ययमंशः बसवार्यवचने सम्यक् शोभते । "सत्योक्तिमेव त्रिदिवं वदन्ति मिथ्योक्तिमेव प्रवदन्ति मर्त्यम् । आचार एव त्रिदशालयः स्यादाचारलोपः खलु दुर्गतिर्हि ॥ मद्वर्तने त्वं गुरुसङ्गमार्य प्रमाणमित्यात्मविनिश्चयोऽसौ ।" इति स्वानुभवप्रामाण्येन शीलशुद्धेर्महत्त्वं, तदर्थमुपयुज्यमानस्य देहस्य पावित्र्यं च बसवार्यो निरूपयति । य एव देहस्य सदुपयोगेन लोककल्याणं साधयति, सर्वदा सर्वेषां हितमेव चिंतयति च स एव शरीरी सत्कुलप्रसूतः इति भाव्यते । स्वार्थं विस्मृत्य परार्थमेव यो जीवति तस्यैव शरीरं सफलीभवति । स्वार्थसाधनपूर्वकं परार्थमपि यः संपादयति तस्यापि शरीरं न कदापि प्रमादमाचरेत; किंतु स्वार्थसाधनार्थं परेभ्यो यः क्लेशं उत्पादयति तस्य तावत् शरीरं सदैव बन्धकं भवेत् । तादृशं शरीरिणमनुभविनो निन्दन्ति । "य एव जीवान्विनिहन्ति नित्यं स एव भाव्योऽन्त्यज इत्यजस्रम् ॥ तथैव योऽश्नाति परान्नमेव स एव भाव्योऽन्त्यज इत्यजस्रम् ॥ यैरेव सर्वत्र हितं विचिंत्यते तेषां कुलं नैव विचारणीयम् । सर्वेषु जीवेषु हिताभिशांसकाः सङ्गार्यभक्ताः कुलजाः प्रकीर्तिताः" इति देहिभिर्देहसहकारेण सार्वजनिकं हितं सम्यक् साधनीयम् । नो चेत् पवित्रं तदीयं

जीवनं निरर्थकं संपद्येत । अतो नश्वरमपि शरीमात्मकल्माणाय विवेकिभिः सम्यगुपयोज्यमित्याशयोऽत्र निवेद्यते ॥

**अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।**
**अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ २८ ॥**

ननु आत्मानमुद्दिश्य शोकं कर्तुमयुक्तत्वेऽपि जननमरणपरवशान् शरीरस्थान् जीवानुद्दिश्य शोको युज्यत एवेत्याशङ्कायां समाधानमाह—

अव्यक्तादीनि अव्यक्तः अनुपलब्धः आदिः पूर्वकालः येषां तानि भूतानि । पुत्रकळत्रादिरूपाणां हि भूतानां जीवानां उत्पत्तेः प्राक्कालिकी अवस्था न केनापि ज्ञायत एव । जननात् कञ्चिदवधिकं कालमेव तेषामुपलंभः । अतस्तानि व्यक्तमध्यानि व्यक्तः दृष्टः मध्यः मध्यकालः येषां तानि भूतानि । पुनरन्ते अव्यक्तनिधनानि अव्यक्तमदृष्टं निधनं मरणं तदनन्तरकालिकी अवस्था च येषां तानि । मरणानन्तरमपि तेषां गतिर्न ज्ञायत एव । एवं च पुत्र-मित्रादीनां पूर्वस्थितिरनन्तरस्थितिर्वा न ज्ञायत एव । मध्यकाले परं किञ्चिदेव परस्परं सन्दर्शनम् । तत्रापि ये पुत्रमित्रादयोऽद्य ते पूर्वस्थितावपि तथैवा-सन्नित्यत्र विश्वासोऽपि नास्ति । प्राक्तने काले यः शत्रुरासीत् सः अधुना व्यक्तदशायां स्वकीयकार्यानुकूल्येन तात्कालिकं मित्रं भूत्वा स्वकार्यप्राति-कूल्येन अहितश्च भवेत् । एवं जीवानामवस्थाः अव्यवस्थिता वर्तन्ते । अतस्तत्र विषये का परिदेवता प्रलापः क्लेश इति यावत् । पूर्वमपि न दृष्टानि भूतानि अन्तेऽपि न दृश्यन्ते । तेषां विषये न कदापि शोकः कर्तव्यः । शोकोऽत्र न सर्वथा युज्यत एव ॥

परन्तु देहस्थस्य आत्मनः स्वरूपमत्यन्तदुर्ज्ञेयमित्याह—

**आश्चर्यवत्पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैव चान्यः ।**
**आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाप्येनं वेद न चैव कश्चित् ॥ २९ ॥**

शरीरे निवसन् जीवात्मा न कदापि प्रत्यक्षतो द्रष्टुं शक्यः । कश्चित्पुरुषः

एनमात्मानं आश्चर्यवत् अत्यद्भुतवत् पश्यति। तथैव चान्यः कश्चित्पुरुषः आश्चर्यवदेव अत्यद्भुतवदेव वदति। एवमन्यश्च कश्चित्पुरुषः एनमात्मानं आश्चर्यवदत्यद्भुतवस्तुवत् शृणोति। कश्चित्तु पुरुषः श्रुत्वापि 'आत्मा एवं वर्तते' इत्यनुभविनां सकाशात् श्रुत्वापि न चैव वेद नैव ज्ञातवानात्मस्वरूपम्। एवमात्मज्ञानमतीव दुस्संपादमित्यर्थ ॥ २९ ॥

एवमात्मस्वरूपमुपदिश्य अथ प्रकृतोपदेश आरभ्यते—

**देही नित्यमवध्योऽयं देहे सर्वस्य भारत।**
**तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥ ३० ॥**

सर्वस्यापि निखिलस्यापि प्राणिजातस्य देहे शरीर एव विद्यमानोऽयं देही आत्मा नित्यं सर्वदा अवध्यः हन्तुमशक्यः। तस्मात्कारणात् सर्वाणि भूतानि भीष्मादिसर्वजीववर्गात् समुद्दिश्य त्वं शोचितुं नार्हसि। जननमरणविदूरान् तानुद्दिश्य शोकं कर्तुं सर्वथा न युज्यत एव। तथापि यः शोचति सः मूढ एव। त्वया तथा न भवितव्यम्। दुष्टनिग्रहद्वारा जगद्रक्षणाय क्षत्रियवंशे अवतीर्णेन भवता अशोच्येषु भीष्मादिषु शोचनं न युक्तमेव ॥ ३० ॥

एवं परमार्थदृष्ट्या शोको मोहश्च कर्तुं न युज्यत एवेत्युक्त्वा अथ न केवलं परमार्थदृष्ट्यैव किन्तु धर्मदृष्ट्यापि शोककरणं तव न युज्यत एवेत्याह—

**स्वधर्ममपि चावेक्ष्य न विकंपितुमर्हसि।**
**धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते ॥ ३१ ॥**

अपि च स्वधर्मं स्वस्य क्षत्रियस्य धर्मं तत्स्वरूपमवेक्ष्यालोच्यापि विकंपितुं युद्धात्पलयितुं नार्हसि। हि यस्मात् धर्मात् क्षत्रियस्य स्ववर्णधर्मादनपेतात् वर्णधर्मानुगुणादिति यावत्। 'शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्' इति क्षत्रियधर्मः प्रसिद्धः। अतः धर्मप्राप्तात् युद्धादन्यत् श्रेयः पुण्यं क्षत्रियस्य न विद्यते। अतो युद्धाच्चलितुं नार्हसि त्वम्। प्रत्युत युद्धाकरणे स्वधर्मभ्रष्टत्वात् महत्पापमपि संभवेदित्याशयः। पुण्यसञ्चयं विना पाप-

मेव यदि संगृह्येत तदा मानवजन्मापि न पुनर्लभ्येत ; अपि तु कस्यचित् चतुष्पात्प्राणिनो जन्म संभवेत्। अस्यां स्थितौ लोककल्याणस्य उत पुनः-त्पत्तद्यथावरूपस्य मोक्षस्य गन्धोऽपि न स्यादेव। अतोऽवश्यं न केवलं त्वयैवास्मिन्रणरङ्गे किन्तु सर्वैरपि मानवैः कार्यक्षेत्रभूतेऽस्मिन् जगति स्वीयं कर्मावश्यङ्करणीयमेव। न तत्र पुण्यपापविचारस्यावकाशोऽस्ति। पुण्यं प पमित्युभयमपि परमात्मा यथा समदृष्ट्या पश्यति तथा तदीया अपि मनुष्याः उभयमपि समानमिति भावयन्तः स्वकर्तव्यं यदि कुर्युस्तदा तदनुग्रहं लभेरन्। एवं च वर्धिष्णुभिस्सर्वैरपि कर्तव्यदृष्टिः सर्वथा आदरणीया। अनयापिदिशा-त्वयावश्यं युद्धव्याचारणीयमेवेति भगवनर्जुनायोपदिशति ॥ ३१ ॥

प्रत्युत सन्तोष्टव्ये विषये त्वं शोचसीतिविचित्रमेतदित्याह—

यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम्।
सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ॥ ३२ ॥

हे पार्थ, यदृच्छया अप्रार्थिततयैव उपपन्नं प्राप्तं अपावृतमुद्घाटितं स्वर्गद्वारमिव स्थितमीदृशं युद्धं धर्मयुद्धं सुखिनः पुण्यशालिन एव क्षत्रियाः लभन्ते। एवं स्वयमनायासेन प्राप्तं निश्चितस्वर्गसाधनं ईदृशं युद्धं को वा क्षत्रियस्त्यजेदित्यर्थः ॥ ३२ ॥

एवमनेकप्रकारैः अवश्यकर्तव्यतां युद्धस्योपदिश्य अथ तदकरणे अनिष्टमप्यापतेदित्याह—

अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि।
ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥ ३३ ॥

अथ च नवं युद्धस्यावश्यकर्तव्यत्वे ज्ञातेऽपि त्वमिमं धर्म्यं धर्मप्राप्तं संग्रामं युद्धं न करिष्यसितर्हि स्ववर्ण धर्मं हित्वा त्यक्त्वा तन्मूलतया कीर्तियशश्च हित्वा पापं स्वधर्मभ्रष्टत्व रूपं पाप च अवाप्स्यसि प्राप्स्यसि।

एवं यः कर्तव्यं यर्म परित्यज ति तस्य न केवलं धर्मलोपः किन्तु पापमपि संभवेत् । एवं विदित्वापि मानवैः कर्मयोगिभिर्भाव्यमिति मरमात्मा अपेक्षते । आकृतकर्माणस्तु पुरुषाः भूभारा एव जायन्त इत्याशयः । कर्मत्यागिनां दुरवस्थां शरणगीता सम्यक् वर्णयति । "सत्येन शुद्धेन च कायकेन यावद्धिवित्तं लभते मनुष्यः । चित्तं तु तावत्यनुषक्तमेव विच्छेदमेयान्न च वित्तलोभात् ॥ न कायकादभ्यधिकं त्वभीप्सेत् लभेत लभ्यं ननु कायकेन । व्यवस्थितात्कायकजाद्धनाच्च भिन्नं सुवर्णं यदि कांक्षतेऽज्ञः । तदा विनश्येत्तु तदीयसेवा प्रत्याशया विन्दति पाशमेव" ॥ इति । एवं स्वकर्तव्यनिर्वाहरूपात्कायकादेव न केवलं क्षत्रियः अपि तु सर्वेऽपि मानवाः धन्या भूत्वा ईश्वरप्रसादं लभेरन् ॥

न कीर्तिहानिमात्रं, प्रत्युत अपकीर्तिरपि महती ते स्यादित्याह—

**अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।**
**संभावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥ ३४ ॥**

भूतानि प्राणिजातानि सर्वाण्यपि ते अव्ययां स्थिरां न तु कालान्तरेऽपि नश्वरामित्यर्थः । तादृशीं अकीर्तिं चापि अपयशोऽपि कथयिष्यति । एवं त्वद्विषये शाश्वतीमकीर्तिं सर्वत्र प्रचारयन्ति सर्वे मानवाः । परित्यक्तधर्मा पापी तु सर्वेषां लघुर्भूत्वा बहुधा निन्द्यते । अस्तु ! तेन मम का हानिरित्यत्राह संभावितस्येत्यादि । संभावितस्य 'अर्जुनः महाशूरः धर्मिष्ठः' इत्यादिरीत्या जनैस्सर्वैर्बहुधा गौरवितस्य च ते अकीर्तिरेवं धर्मभ्रष्टत्वादिमूला मरणान्मरणापेक्षयापि अतिरिच्यते । एतादृशापकीर्त्यपेक्षया ते मरणमेव वरमित्यर्थः ॥

इदानीं वा मम शौर्यस्य का हानिः ? अस्त्येव मम सहजं शौर्यम् । तथापि कृपया युद्धं न करिष्यामि इति चेत्तत्राह—

**भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः ।**
**येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥ ३५ ॥**

भवतः शूरत्वेऽपि युद्धरङ्गे आगत्य युद्धान्निवृत्तौ महारथाः पुरो विद्यमानास्सर्वे वीराः दुर्योधनप्रभृतयस्त्वां भयात् भीत्यैव रणात् युद्धात् उपरतं निवृत्तं मंस्यन्ते लाघवेन निन्दिष्यन्ति। कृपया युद्धादुपरमस्तु रणरङ्गप्राप्तेः पूर्वमेव कर्तव्यमासीत्। रणरङ्गे आगत्य सर्वान् वीक्ष्यानन्तरं यद्युपरतिः क्रियते तदा भयादुपरतमेव मन्येयुरित्यर्थः। महारथा इत्युक्ते के ते इत्यत्राह येषामिति। येषां दुर्योधनादीनां त्वं बहुमतः शूरत्वेन संभावितो भूत्वा इदानीं लाघवं गौरवहानिं यास्यसि प्राप्स्यसि ॥ ३५ ॥

अन्तः गौरवहानिमात्रं न, लोकेऽपि बहिर्निन्दापि भविष्यतीत्याह—

**अवाच्यवादांश्च बहून् वदिष्यन्ति तवाहिताः ॥**
**निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥ ३६ ॥**

तव ते अहिताः शत्रवः दुर्योधनादयः तव सामर्थ्यं वस्तुतो विद्यमानं तव पौरुषादिकं निन्दन्तः कुत्सयन्तः बहूननेकप्रकारान् अवाच्यवादान् वक्तुमप्यनर्हनिन्दावाक्यानि "अर्जुनोऽयं नपुंसक एव" इत्येवमादीनि वदिष्यन्ति कथयिष्यन्ति। अतः एतदपेक्षया दुःखतरं किं नु? ततोपि कष्टतरं दुःखमेव नास्ति। सर्वस्याप्यनर्थस्य त्वमेव मूलं स्याः ॥ ३६ ॥

अतो भवतात्र इदमेव कर्तव्यमिति निष्कर्षमाह भगवान्—

**हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्।**
**तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥ ३७ ॥**

हतः शत्रुभिस्ताडितस्सन् त्वं स्वर्गं वा प्राप्स्यसि गमिष्यसि। 'स्वर्गद्वारमपावृतम्' इति ह्युक्तम्। जित्वा वा शत्रून् हत्वापि त्वं महीं राज्यं भोक्ष्यसे अनुभविष्यसि। अतः क्षत्रियस्य युद्धमुभयथापि लाभप्रदमेव। हे कौन्तेय अर्जुन, तस्मात्कारणात् कृतनिश्चयः जेष्यामि शत्रून् मरिष्यामि वेति भगवत्प्रेरणेन कृतनिर्णयो युद्धाय युद्धं कर्तुं उत्तिष्ठ स्वधर्मप्राप्तं युद्धं

करिष्ये इति प्रागुक्त्वा अधुना भयात्पलायनं न सर्वथा बहुमन्यते भवदन्तर्यामिणेश्वरेण । " यद्यैकरूप्यं वचने कृतौ च तदान्तरे तिष्ठति सङ्गमार्य " इति शरणवचनप्रामाण्येन हृदये भवद्वर्तनं निरीक्षमाणः परमेश्वरो भवते कुप्यति ; अपि तु भवान् न केवलमिहैव किन्तु परत्रापि परित्यक्तो भविष्यति । परमेश्वरलीलाविनोदस्थानेऽस्मिन् प्रपञ्चे दैन्येन यथाकथञ्चिज्जीवंस्त्वं गौरवं न लभसे । तथैवान्ते अनायासेन मरणमपि न प्राप्स्यसि । एतस्मिन्सदर्भे भक्तावतंसस्य महात्मनो बसवार्यस्योक्तिस्सैवैरपि स्मरणीया विराजते । 'मर्त्यो हि लोकः परमेश्वरस्य लीलाविनोदाय विनिर्मितं गृहम् । अत्रैव योग्या य इहाद्य दृष्टाः तेऽमुत्र योग्याः खलु सङ्गमार्य ॥ ये त्वत्र नार्हास्त्वभवन्मनुष्याः ते तत्र नार्हा भवितुं समर्थाः ॥ ' इति । एवं कर्तव्यनिष्ठा एव पुरुषाः स्त्रियश्च इहामुत्र च श्लाघ्या भवन्ति । अतस्त्वयावश्यं धर्म्यमिदं युद्धं करणीयमेवेति भगवानर्जुनायोपदिशत्यव्याजप्रेम्णा ॥ ३२ ॥

ननु बन्धुवधजन्यं पापं मम न भवेद्वेत्यत्र समाधानमाह—

**सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।**
**ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥ ३८ ॥**

क्षत्रियस्य तावद्युद्धस्य स्वधर्मत्वात् केवलतद्बुद्ध्यै क्षत्रियेण युद्धमाचरणीयम् । अतः सुखदुःखे सुखं वा दुःखं वा, लाभालाभौ लाभं वा नष्टं वा, जयाजयौ जयं वा पराजयं वा समे कृत्वा समतया भावयित्वा ततः अनन्तरं युद्धाय युज्यस्व प्रवर्तयेत्यर्थः । एवं स्वधर्मतयैव युद्धं कुर्वन् पापं नावाप्स्यसि न प्राप्स्यसि । एवं सर्वैरपि मानवैः स्वधर्माचरणेन पापं परिहर्तव्यमित्याशयोऽत्र ध्वन्यते ॥ ३८ ॥

मध्ये प्रसङ्गात् लोभदृष्ट्या, स्वधर्मत्वबुद्ध्या च युद्धस्य कर्तव्यत्वमुपदिष्टम् । परमार्थतत्त्वं तु ' नत्वेवाहंजातु नासं ' इत्यादिनोपदिष्टमित्युपसंहरन् उपरिष्टाद्वक्ष्यमाणस्य पीठिकामपि रचयति—

एष तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु ।
बुध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥ ३९ ॥

सांख्ये-संख्या नाम ज्ञानम् । तत्संबन्धिनि परमार्थवस्तुविवेकविषये एष । इयता कालेनोपदिष्टा बुद्धिरेत तुभ्यं अव्याजप्रेम्णा अभिहिता । योगे तु तादृशपरमार्थतत्त्वज्ञानोपायभूते कर्मयोगे इमामनन्तरमुच्यमानां बुद्धिं शृणु । यया बुद्ध्या कर्मयोगविषयज्ञानेन युक्तः सन्, हे पार्थ अर्जुन, कर्मबन्धं कर्मरूपं बन्धं प्रहास्यसि वक्ष्यमाणकर्मज्ञानपूर्वकं कर्मानुष्ठानेन संसारपाशनिवृत्तिर्भवितुमर्हतीति कर्मयोगप्रशंसात्र क्रियते । अध्यात्मज्ञानसहकारेण यः कर्म आचरते स एव कर्मयोगीत्युच्यते । सर्वमपि कर्म भगवदाराधनरूपमिति ज्ञात्वा यदाचर्यते तदा तादृशमनुष्ठानं कर्मयोग उच्यते । स एव कायकनाम्ना शरणैः प्रशस्यते । कायकरूममेव कर्म मानवान् न बध्नाति ; नो चेत् लोकोऽयं कर्मबन्धनः स्यादेव । अज्ञात्वा कर्मानुष्ठानं, ज्ञात्वा कर्माननुष्ठानमेतदुभयमपि असाधु भवेत् । अतो मानवैः स्वीयं राष्ट्रहितावहं कर्म सर्वान्तर्गतस्य परमेश्वरस्य प्रीत्यर्थं ससन्तोषमाचरणीयमित्यमुमंशमुपदिशति परमात्मास्मिन्प्रकरणे ॥

कर्मयोगस्यैव प्राशस्त्यमन्यदप्याह—

नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥ ४० ॥

इह मोक्षसाधनभूते कर्मयोगे अभिक्रमनाशोऽभिक्रमस्य नाशो न विद्यते । यदारभ्यते तत्र कदापि नश्येत् । तदवश्यं फलं प्रदास्यत्येव । तत्रापि यत्कर्म लोकहितेच्छयारभ्यते तन्नियतमेवेश्वरानुग्रहेण संपत्स्यते । न केवलं तदेव किन्तु स्वार्थदृष्ट्या यत् क्रियते तदपि निर्दिष्टं फलं प्रदास्यात्येव तथापि तत् मानवान् बध्नाति । तादृशः पुरुषाः कर्मिण उच्यन्ते । "अर्जुनः स्वधर्माचरणेन कर्मयोगी भवेत् न तु कर्मी" इत्येव भगवत आशयः । एवं कर्मानुष्ठाने प्रत्यवायः पापं वा न विद्यते न संघटेत । अस्य धर्मस्य स्वल्पमपि

अनुष्ठितं सत् महतो भयात् संसाररूपमहाभयात् भवन्तं त्रायते रक्षति। कृष्यादिकं तु कर्म पूर्णं कृतमेव फलप्रदं भवेत्। कर्मयोगरूपे कायके यत्किञ्चिद्यथाशक्ति कृतमपि न व्यर्थं भविष्यतीत्यर्थः ॥ ४० ॥

व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन।
बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥ ४१ ॥

हे कुरुनन्दन, व्यवसायात्मिका बुद्धिः व्यवसायो निश्चयः। निश्चयरूपा बुद्धिर्हि व्यवस्थिता एकैव इह लोके विराजते। नहि निर्णयेद्वैविध्यं भवितुमर्हतीत्यर्थः। यत्र द्वैविध्यं तत्र निर्णयो नाविगत इति ज्ञातव्यम्। अतो व्यवस्थितो मार्गः निश्चयात्मकः एक एव। या पुनस्तद्व्यतिरिक्ता अव्यवसायात्मिका बुद्धिरस्ति तादृशबुद्धिमतां बुद्धयो बहुशाखाः बहुविधप्रभेदविशिष्टाः अनन्ताश्च वर्तन्ते। तासामनन्तप्रकारत्वात् तादृशप्रभेदेषु अन्त एव नास्ति। येषां तु परमार्थतत्त्वज्ञानं नास्ति तेषामेव बुद्धयो अव्यवस्थिता अनन्ताश्च भवन्ति। एकस्य पशुपुत्रादिः परमः पुरुषार्थः। सः तदर्थमेव जीवति। अन्यस्य तु अर्थ एव परमः पुरुषार्थः। अपरस्य तु लोकविख्यातिरेव परमपुरुषार्थः। अतः अविवेकिनां मूढानां बुद्धयो बहुशाखाः बहुविधा इत्युच्यन्ते। ये तु व्यवसायिनः निश्चितज्ञानवन्तः मनुष्यजन्मपरमोद्देशादिकं सम्यक् जानन्ति तेषामुद्देशस्यैकत्वात् तदीया बुद्धिरेकैवेत्युक्तम्। एवं व्यवस्थितचित्तानां व्यवहारं प्रशंसन्तः शरणाः अव्यवस्थितानां दुरभिमानपूर्वकं कर्म सत्यदूरमिति निर्दिशन्ति। तत्सर्वदा सर्वैः स्मरणीयम्। "कृत्वा कृत्वा व्याहता दौर्मनस्यात् दत्वा दत्वा व्याहताः सत्यहानात्। कुर्युर्दद्युर्यद्धि सत्यस्य योगात्संसृज्येयुस्सङ्गमेश त्वयैव"॥ इति। एवं व्यवस्थित्ताः निर्मलेन मनसा लोकेश्वरप्रीत्यर्थं लोककल्याणदृष्ट्या सर्वदा कर्मव्यापुता अपि तेन कर्मणा न बध्यन्त इति भावः ॥ ५१ ॥

व्यवसायात्मिका बुद्धिर्येषां नास्ति तान् निन्दति श्लोकत्रयेण—

**यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।**
**वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥ ४२ ॥**
**कामात्मानः स्वर्गपराः जन्मकर्मफलप्रदाम् ।**
**क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥ ४४ ॥**
**भोगैश्वर्यप्रसक्तानां तयापहृतचेतसाम् ।**
**व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥ ४४ ॥**

हे पार्थ, अविपश्चितः अविद्वांसः अविवेकिनः कामात्मानः । काम्यन्त इति कामाः ख्यातिलाभपूजादयः । तत्स्वभावाः सततततत्प्रवणचित्ताः तल्लौकिकं किञ्चित्फलमतीत्य स्वर्गासक्ताः स्वर्गसुखप्रवणचित्ताः। एवं चैतेषामैहिकमामुष्मिकं चेति फलद्वयमपि हेयमेवेत्युक्तम् । वेदवादरताः न तु वेदान्ततत्त्वपराः । वेदवादः कर्मकाण्डवाची प्रसिद्धः । कर्मकाण्डे च अल्पमतीनां तृप्त्यर्थं पशुपुत्रस्वर्गख्यात्यादिफलकानि कर्माण्युपदिश्यन्ते । वक्ष्यति च इहैव "त्रैगुण्यविषया वेदाः" इति । एवं च केवलैहिकामुष्मिकफलबोधकेषु वेदवादेषु रताः आसक्ताः, नान्यदस्त्यत्रेति वादिनः 'एतपेक्षयान्यत् मोक्षादिकं नास्त्येव'इत्यभिमानाद्वदन्तः, जन्मकर्मफलप्रदां जन्मप्रदां पुनः पुनः जन्मप्रदां 'ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति' इति स्वर्गार्थं कर्म कुर्वतामेव पुनर्जन्म विद्यते चेत् ख्यातिलाभादिरूपैहिकपुरुषार्थ-संपादनायैव कर्म कुर्वतां किं वक्तव्यम् ? अत एव पुनः पुनः कर्मफलप्रदां नतु कर्मणो विमुक्तिप्रदाम् । एवमव्यवसायिनां बुद्धेर्बहुशाखात्वात् अनेक-प्रकारत्वात् क्रियाविशेषबहुलां बहुविधकर्ममयीं पुष्पितां पुष्पितवृक्ष इव सर्वत्र परिशोभमानां न तु फलितवृक्ष इव आपातरमणीयामिति भावः । यामिमां उक्तरूपां वाचं भोगैश्वर्यगतिं प्रति स्वर्गपशुपुत्राद्यल्पपुरुषार्थप्राप्तिं प्रति वदन्त्यविपश्चितः तेषां भोगैश्वर्येष्वेव प्रकर्षेण सक्तानां तया भोगैश्वर्येष्व-त्यन्तासक्त्या अपहृतचेतसां अपहृतमनस्कानां नष्टबुद्धीनामिति यावत् ।

व्यवसायात्मिका बुद्धिः समाधौ चित्तवृत्तिनिरोधरूपे योगे न विधीयते न प्रवर्तते। समाधिर्नाम मनस्समाधानम्। तद्धेतुर्व्यवसायात्मिका बुद्धिः। तस्याः अभावात् तेषु चित्तसमाधानं कदापि न भवतीत्यर्थः। तत्तदल्पपुरुषार्थप्रवणानां कदापि न चित्तसमाधानं शान्तिर्वा भवतीत्यर्थः। 'स शान्तिमाप्नोति न कामकामी' इति च वक्ष्यति ॥ ४२–४३–४४ ॥

त्वमेतादृशाल्पपुरुषार्थपरो मा भव इत्यर्जुनं प्रत्याह भगवान्—

**त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन।**
**निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥ ४५ ॥**

त्रैगुण्यं त्रिगुणात्मकः प्राकृतः संसारः। तद्विषयास्तत्प्रवृत्त्युत्पादकाः वेदाः कर्मकाण्डाः संसारिचेतनविषयाः। हे अर्जुन, त्वं निस्त्रैगुण्यः एतादृशसंसारिचेतनविलक्षणः परमपुरुषार्थमात्रप्रवणो भव। अस्यैव विवरणं निर्द्वन्द्व इत्यादि। द्वन्द्वं सुखदुःखजयापजयादिकम्। तद्रहितो भव द्वन्द्वातीतः समचित्तवृत्तिर्भव। संसारिण एव सुखदुःखादिपरवशा भवेयुर्न तु तद्विलक्षणा मुमुक्षवः। अत एव नित्यसत्त्वस्थो सदा सत्त्वगुणमात्राश्रितो भव। तथैव निर्योगक्षेमः। अप्राप्तस्य प्राप्तिर्योगः। प्राप्तस्य परिरक्षणं क्षेमः। उभयरहितो भवेत्यर्थः। 'मयैव लोके सर्वं क्रियते' इति कर्मिणं एवं भावयन्ति। ज्ञानिनस्तु निमित्तमात्रं व्यवहरन्तस्तेषां 'योगः क्षेमश्च परमात्मनैव निरुह्यते' इति ज्ञात्वा तूष्णीं स्वीयकर्तव्ये दृष्टिं निदधति। कर्मिभिरधिकतयापेक्षितोऽपि लाभः ईश्वरसङ्कल्पानुरोधेनैव आयाति। यल्लभ्यं तदेव प्राप्नुवन्ति मनुजाः। शरणाः खलु अमुं विषयं स्वानुभवेन वर्णयन्ति। "यस्मै यदा दास्यति वित्तमीशः तदैव धावेत्त्वरितं हि तद्धनम्। कुल्यास्तटाकं परिपूरयेयुर्यथा प्रधाव्यैव तथा प्रसादात्। अलभ्यलाभो भवतीति जानन् निधेहि चित्तं गुरुपादपद्मे। सर्वाणि सौख्यानि तदा त्वदन्तिकं समापतेयुश्शिवसंप्रसादात्। घटोऽश्मपातादिव हन्यसे निरञ्जनोऽयं यदि विस्मरेत्त्वाम् ॥" इति। एवमीश्वरेच्छयैव

अस्मत्प्रयत्नः सफलीभवेदिति निश्चिन्वन्ति शिवयोगिनः । एवं च ऐहिकफलार्थप्रवृत्तिर्वा तद्रक्षणार्थप्रवृत्तिर्वा मास्तु । यथालाभसन्तुष्टो भव । एवं सत्येवात्मवान् भवेस्त्वम् । अन्यथा आत्मनाश एव संभवेदित्यर्थः ॥ ४५ ॥

ननु पशुपुत्रादिफलानां कर्मणापि वेदविहितत्वात् तत्करणे को दोष इति चेत् वेदोक्तं सर्वं कर्म सर्वैरनुष्ठेयमिति न निर्बन्ध इत्याह—

**यावानर्थ उदपाने सर्वतः संप्लुतोदके ।**
**तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ ४६ ॥**

विजानतः ज्ञानिनः मुमुक्षोर्ब्राह्मणस्य ब्रह्मज्ञानिनः सर्वतः संप्लुतोदके जलपरिपूर्णे उदपाने कूपतटाकादौ यावानर्थः यावत्प्रयोजनमस्ति तावानेव सर्वेष्वपि वेदेषु प्रयोजनमस्तीति शेषः । जलपूर्णतटाकात् ब्राह्मणः स्नानपानमात्रफलं लभते, न तु तत्रत्यपङ्कादिकं मत्स्यादिकं वा सः गृह्णाति । तद्वदेव वेदोक्तत्वमात्रात् ब्राह्मणस्य ऐहिकामुष्मिककर्माणि नोपादेयान्येव । ज्ञानिनस्तु सर्वत्र समदृष्ट्या व्यवहरन्तः समस्वरूपं परशिवमेव यतः पश्यन्ति ततस्ते ज्ञानानन्दस्वरूपा वेदादिशास्त्रमवलंब्यैव न तिष्ठन्ति । न हि परमात्मा ज्ञानैकप्रियः न वा क्रियामात्रप्रियश्च वर्तते ; अपि तु ज्ञानयुक्ता क्रियैव तस्मै रोचते । "ज्ञानेनाचारयुक्तेन प्रसीदति महेश्वरः" इति सिद्धान्तशिखामणिर्वदति । अयमेव ज्ञानक्रियासमन्वयो मार्गः भक्तिरित्यभिधीयते । ज्ञानिनस्तावत् परमशिवं भक्तिप्रियमिति जानन्ति । अतस्ते केवलशास्त्रज्ञान एव न हि निरता भवेयुः । शरणगीता अमुं विषयं सम्यगभिधत्ते । "नादप्रियः शंभुरितीर्यते जनैः न नादमात्रेण हि तुष्यते शिवः । वेदप्रियः शंभुरितीर्यते जनैः न वेदमात्रेण हि तुष्यते शिवः ॥ अधीयुरासीन्ननु नादकारी लङ्काधिराजो बत भक्तिहीनः । अभ्यस्य वेदं ननु पङ्कजासनः शिरोविहीनस्समजायतैव ॥ तस्माच्छिवो नादपरोऽपि नैव न वेदमात्रप्रियता च तस्मिन् । भक्तिप्रियत्वं हि समेति देवे भक्तो भवेयं खलु सङ्गमार्थ ॥" इति । एवं भक्तिमहत्त्वं सम्यक्

विज्ञाय ज्ञानिनस्सदाचारनिष्ठाः केवलं शास्त्रज्ञानमवलंब्यैव न वर्तन्ते। अतस्तेभ्यो वेदादिशास्त्रान्महाफलं न जायते॥

ज्ञानिनः कर्मणामनुपादेयत्वे, "कथमहं कर्म कुर्याम्" इति पुच्छन्तं अर्जुनं प्रति तावदपरिपक्वबुद्धेस्तु तव चित्तशुद्ध्यर्थं फलसङ्गकर्तृत्वत्यागपूर्वकं कर्म अनुष्ठेयमेव। एवं निष्कामनयाऽनुष्ठितं तु कर्म मोक्षायैव भवेदित्याह—

**कर्मण्येवाधिकारस्ते मा फलेषु कदाचन।**
**मा कर्मफलहेतुर्भूः मा ते सङ्गोऽस्त्वकर्मणि॥ ४२॥**

ते तव अपरिपक्वत्वात् परिपाकमधिगन्तुमर्हत्वाच्च कर्मण्येव युद्धादि-वर्णाश्रमधर्मेष्वेव अधिकारः। परं तु फलेषु परिणामचिन्तायां तेऽधिकारः संपर्कः मास्तु। यदा च कर्मफले तृष्णा भवति तदा तादृशकर्मफलप्राप्तेः त्वमेव हेतुः स्याः। अतः कर्मफलहेतुरपि त्वं मा भूः कर्तृत्वबुद्धिं त्यज। अत एव अकर्मणि कर्माकरणेऽपि ते सङ्गः संबन्धो मास्तु। कर्मण उपरतिरपि न ते युक्ता; किन्तु कर्मण्यभिरतिरेवावश्यं त्वयि स्थेया। कर्म च तत्तत्फलोद्देशेन कृतं चेत् तत्तत्फलसाधनं भवेत्। यस्य च व्यवसायात्मिका बुद्धिर्वर्तते स तु मोक्षोद्देशेनैव ख्यातिलाभादिकं लेशतोऽप्यनपेक्ष्य केवलकर्तव्यत्यादिबुद्ध्यैव कर्म करोति। "एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च" इत्यग्रे वक्ष्यति परमात्मैव। एवं कर्तव्यदृष्ट्या कर्मा-चरणेन मानवस्य चित्तशुद्धिरुत्पद्यते। तदा चित्तं त्रिगुणात्मकं चिद्रूपतया परिणमति। अयमेव परिणामः सार्वत्रिकः शक्तिविकास इति परिगणितः। एतदर्थमेव मानवाः देहादिसाधनानि प्राप्तवन्तः। अतोऽवश्यं देहिभिरात्म-कल्याणाय स्वीयं कर्म आचरणीयमेव। नो चेन्महती हानिस्सञ्जायेत। "कुर्वन्नेवेह कर्माणि जिजीविषेत् शतं समाः" इति श्रुतिरेव मानवान् कर्म-निरतान् कर्तुं सम्यक् प्रेरयति। तथा चोक्तमभियुक्तैः "कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते" इति। अतस्तव युद्धाख्यः स्वधर्मः अवश्यं कर्तव्य

एवेति भगवानर्जुनमुपदिशति। एवं कर्म यदि नाचर्येत तदा मानवाः भगवदाग्रहपात्राणि भवेयुः। अनया रीत्या कर्म परित्यक्तुमपि मानवाः न पारयन्ति। यतस्तदानीं "प्रकृतिस्त्वां नियोक्ष्यति" इति भगवानेवोपदिशति। अतो भवता अवश्यं युद्धमनुष्ठेयमेवेति भावः ॥ ४२ ॥

यदि फले अपेक्षा न कर्तव्या तर्हि कथमिदं युद्धं कर्तव्यमित्यत्राह—

**योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय।**
**सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥ ४८ ॥**

हे धनञ्जय अर्जुन, योगस्थः योगे विद्यमानः सन् सङ्गं कर्मफलसंबन्धं त्यक्त्वा, सिध्यसिध्योः समो भूत्वा फलप्राप्तौ अप्राप्तौ च समो भूत्वा अविकारेण स्थित्वा कर्माणि युद्धादीनि कुरु। ननु 'योगस्थः कुरु' इत्यस्य कोऽर्थः? कथं वा तत्सिद्ध्यति? योगे विद्यमानः कथं कर्म तदानीं कर्तुं शक्नुयात्? इत्याशङ्कायां योगशब्दो न "समाध्यादिपरः किन्तु समत्वपरः। सिध्यसिध्योः समत्वं यत् तदेवात्र योगः" इत्युच्यते। फलाफलयोः समभावनया स्वीकारोऽत्र योगः। संपदि न हर्षः विपदि न शोकश्च यस्य वर्तते स एवात्र योगीत्यभिधियते। सुखदुःखयोर्निर्विकारतया वर्तनमेवात्र योग उच्यते। तथाच 'योगस्थः' इत्यस्य एतादृशसमत्वभावनाविशिष्ट इत्यर्थः। युद्धे यद्यपजयः संभवेत्तदा भवदीयं कर्तव्यं निरूढमिति बुद्ध्या सन्तोषेण तूष्णीं स्थेयम्। यदि जयस्स्यात् तदापि कर्तव्यनिर्वाहभावनया सन्तोषेणैव स्थातव्यम्। एतादृशी निर्विकारस्थितिरेव योगः। कर्तव्यनिष्ठा, फलसङ्गपरित्यागः एतद्द्वयमवलंब्य तिष्ठत्ययं योगः। एतद्योगनिष्ठः नित्यसुखी भूत्वा सदा सन्तोषेण वर्तते। "यत्ने कृते यदि न सिध्यति कोऽत्र दोषः" इत्यभियुक्तोक्त्यापि नः प्रयत्नो विफलीभवेत्। तदा स्वयंकृतोऽयमपराधः स्वेनैवानुभवितव्यः। अतस्सर्वथा स्वकर्तव्यं न परित्याज्यमेव ॥ ४८ ॥

फलसङ्गत्यागपूर्वकं क्रियमाणनिस्स्वार्थकर्मापेक्षया फलापेक्षया क्रियमाणं स्वार्थं कर्म अत्यन्तं हेयमित्याह—

**दुरेण ह्यवरं कर्म बुद्धियोगाद्धनञ्जय ।**
**बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥ ४९ ॥**

हे धनञ्जय पार्थ, फलापेक्षया क्रियमाणं कर्म बुद्धियोगात् समत्व-भावनारूपात् बुद्धियोगयुक्तात् कर्मणो दुरेण ह्यवरं अत्यन्तं निकृष्टमेव । यतः फलहेतवः फलं फलोद्देशेन क्रियाचरणमेव येषां हेतुः प्रवृत्तिस्ते पुरुषाः कृपणाः अतिसङ्कुचितप्रकृतयो भाव्यन्ते । अथवा फलप्राप्तिरेव यासु साधनतामा-पन्नाः ताः क्रियाः कृपणा अत्यल्पा इति परिगण्यन्ते । एवं च फलापेक्षया कुर्वन्तश्चेतनाः कियमाणाः क्रियाश्च महत्त्वरहिता एव भवेयुः । अतः बुद्धौ उक्तसमत्वबुद्धौ शरणमाश्रयमन्विच्छ प्रार्थयस्व । स्वसंरक्षणाय तादृशीं समत्व-बुद्धिमेव शरणं गच्छ । अनेनैव बुद्धियोगेन त्वदीयमज्ञानं विनश्यति । एतत्सं-सर्गस्य महत्त्वं शरणास्सम्यक् प्रशंसन्ते । "ज्ञानप्रभावाद्धिनिहन्यतेऽज्ञता ज्योतिर्बलादेव तमो विहन्यते । ऋतप्रभावादनृतं विहन्यते तथैव लोहः परुषप्रभावात् ॥ भवो मदीयो हत एव देव महानुभावैः शरणैश्च सङ्गात् ॥" इति । एवं सद्बुद्धिसङ्गादेव मानवः स्वास्थ्यं लभते । अत एवात्र सम्यगभिहितं बुद्धौ शरणमन्विच्छेति । बुद्धियोगादेव मानवः स्वीयजन्मसाफल्यं साधयति । एतादृश्या समबुद्ध्या युद्धं कर्तुं भगवाना-ज्ञापयत्यर्जुनम् ॥ ४९ ॥

एवं प्रापञ्चिकं कर्म कुर्वतः पुरुषस्य महाफलं स्यादित्याह—

**बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।**
**तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥ ५० ॥**

बुद्धियुक्तः उक्तसमत्वबुद्धियोगनिष्ठः सुसंस्कृतः शिवदीक्षासंपन्नो जीवः गुरुमुखाधिगतशिवलीलामहत्त्वः "देहे परशिवः भावप्राणेष्टरूपेण शिरसि हृदये

भ्रूमध्ये सन्तिष्ठते" इति ज्ञात्वा इहास्मिन् लोके स्वेन क्रियमाणे सुकृतदुष्कृते उभे अपि जहाति स्वेन सहैव निवसते परमात्मने तदानीमेव भक्त्या समर्पयति। ख्यातिलाभस्वर्गाद्यपेक्षामन्तरा कर्तव्यत्वेनावश्यप्राप्तं कर्म कुर्वतो जीवस्य तादृशकर्मप्रयुक्तपुण्यपापादिकं न भविष्यत्येव। अतस्त्वया स्वधर्मत्वेनावश्यप्राप्ते युद्धे करणीये सति भ्रात्रादिवधे संभवत्यपि नहि पापं संभवेत्। तस्मादेवं पुण्यपापयोरत्राप्रसक्त्या त्वमपि योगाय समत्वभावनायै युज्यस्व प्रयत्नं कुरु। यतः कर्मसु क्रियमाणेषु योगः उक्तसमत्वभावना कौशलं क्षेमावहा आत्मकल्याणसाधिका भवेत्। अतो योगाय युज्यस्व। "तस्मात्सर्वदा योगयुक्तो भवार्जुन" इति पुरस्ताद्वक्ष्यति च। भावप्राणेष्टलिङ्गरूपे परमात्मनि समरसतया योक्तुं जीवेन सर्वथा प्रयतितव्यमित्याशयः। इष्टरूपिणे परमात्मने सर्वकर्मफलत्यागात् जीवस्त्यागाङ्गमित्यभिधीयते। प्राणरूपिणा परमात्मना सह हृदये सर्वफलभोगानुभवात् जीवो भोगाङ्गमिति कथ्यते। एवं जीवात्मा समर्पणानन्तरं शिवेन सहैव तच्च भुनक्ति। एवं प्रसादसेवनात् जीवः शिरसि विराजमानेन सद्रूपेण भावलिङ्गेन सह संयुक्तस्सन् योगाङ्गमिति व्यवह्रियते। "बीजे यथाङ्कुरः सिद्धस्तथात्मनि शिवः स्थितः।" इति सिद्धान्तशिखामण्युक्तदिशा जीवे अन्तर्यामितया शिवो निवसत्येव। स च भ्रूमध्ये इष्टरूपेण (आनन्दरूपेण), हृदये प्राणरूपेण, शिरसि भावरूपेण (सद्रूपेण) विराजते। एवं परमात्मनो लीलाविनोदाय आश्रयत्वात् जीवः अङ्गमित्युच्यते। अयमङ्गनामको जीवः सर्वकर्मफलत्यागात् त्यागाङ्गमिति, प्राणलिङ्गेनानुभूय परित्यक्तस्य शेषप्रसादस्य भोगात् भोगाङ्गमिति, एतत्प्रसादभोगमहिम्ना शिरसि सहस्रारकमलविराजमानेन भावलिङ्गेन संयुज्य योगाङ्गमिति च व्यवहारयोग्यः संपद्यते। फलत्यागादेव त्यागाङ्गं भवितुमर्हति जीवः। तथैव प्रसादभोगादेव सः भोगाङ्गं भवितुमर्हति। यः त्यागी भोगी च भवेत् स एव योगाङ्गं च (योगी) भवेत्। एतादृशं योगमधिगन्तुं सर्वदा प्रयत्नः कर्तव्यो विवेकिना। अयमेवाशयः 'योगाय युज्यस्व' इत्यनेनाविष्क्रियतेऽत्र ॥ ५० ॥

एवं कुर्वतो न केवलं फलप्राप्तिः प्रत्युत मोक्षावाप्तिरित्याह—

**कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।**
**जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥ ५१ ॥**

बुद्धियुक्ताः उक्तसमत्वभावनायुक्ताः मनीषिणो विवेकिनः कर्मजं फलं पशुपुत्रस्वर्गादिरूपं विहाय न तु कर्म त्यक्त्वा, तेन जन्मबन्धविनिर्मुक्ताः । जन्मरूपपाशात् विनिर्मुक्तास्सन्तः अनामयं सर्वोपद्रवरहितं पदं मोक्षं गच्छन्ति प्राप्नुवन्ति । एवं शिवज्ञानिनां शिवयोगिनां सङ्गात् जीवस्य मलपाशहान्या इहैवास्मिन्प्रसादकाये विभिन्नदेहे आत्यन्तिकदुःखनिवृत्तिरूपः नित्यानन्दमयो मोक्षः अनुभूयते । अयं तु शिवयोगस्यैव महिमातिशयः विवेकिभिरेव अनुभवितव्यः । योगस्य महत्त्वं सम्वर्णवन्ति शरणाः । " गङ्गादिसङ्गट्टितपर्वतास्तु सर्वे च निर्मूलतया विनष्टाः । अग्नेश्च संसर्गवशाद्धि काष्ठं समूलतो नश्यति पश्य जीव ॥ सुज्ञानिनस्सङ्गवशाद्धि जन्तुस्त्वज्ञाननाशेन शिवे प्रलीयते । तथैव शंभो गुरुमल्लिकार्जुन तवैव योगात्सुखमेति लोकः ॥" इति शिवयोगादेव नित्यसुखरूपं मोक्षं प्राप्तुं प्रभवति साधको जीवः ॥ ५१ ॥

साधकस्य तादृशी समत्वरूपा बुद्धिः कदा भवेदित्यत्राह—

**यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।**
**तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥ ५२ ॥**

ते तव बुद्धिः यदा यस्मिन्काले मोहकलिलं मोहोऽविवेकस्तद्रूपं कालुष्यं व्यतितरिष्यति परित्यजतीत्यर्थः । तदा तस्मिन्काले श्रोतव्यस्य श्रोतव्यत्वेन भवता निर्णीतस्य ऐहिकामुष्मिकफलविषयस्य, एवमेतावता श्रुतस्यैहिकामुष्मिकफलविषयस्य च निर्वेदं वैराग्यं गन्तासि प्राप्स्यसि । हिताहितविवेकरहितस्यैव आत्मनः अल्पफलेषु प्रवृत्तिः स्यात् । तादृशविवेकवतस्तु जीवस्य तादृशाल्पफलकार्यादिषु वैराग्यं स्वयमेव संभवेत् । अतः सुदृढं विवेकं प्रथमं संपाद्य स्वकर्तव्यनिरतो भवेदित्यर्थः ॥ ५२ ॥

एवं विवेकवतो योगनिष्ठस्य उत्तरफलमप्याह—

**श्रुतिविप्रतिपन्ना ते तदा स्थास्यति निश्चला ।**
**समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥ ५३ ॥**

ते बुद्धिरेतावता कालेन श्रुतिविप्रतिपन्ना बहुविधवाक्यैश्च 'इदमेव जन्मनः फलं' इत्यज्ञानिभिः संसारप्रवणैरुच्यमानानां ख्यातिलाभादिपराणां वाक्यानां श्रुत्या श्रवणेन विप्रतिपन्ना विप्रतिपत्तिं विपरीतप्रतिपत्तिं आपन्ना प्राप्ता हेये उपादेयत्वमतिं उपादेये हेयत्वमतिं च प्राप्तेत्यर्थः । एतादृशी बुद्धिः विवेकवशाद्यदा निश्चला व्यवसायात्मिका सुदृढा स्थास्यति "मज्जन्मनः नहि ख्यातिलाभादिकमत्यल्पं फलं किन्तु संसारबन्धान्मोचनमेव" इति निश्चयः यदा भवति तदाल्पफलेषु बुद्धेरप्रवृत्त्या सा न कलुषिता बहुप्रकारेण दूषिता भवेत् । तदा एवं चाञ्चल्यनिवृत्तौ सा बुद्धिर्निश्चयात्मिका । समाधौ समाधीयते चित्तमत्रेति समाधिः । यस्मिन् स्थितस्य जीवस्य बुद्धेस्समाधानं कालुष्याभावः शांतिश्च भविष्यति तादृशसमचित्ततारूपसमाधौ अचला सुप्रतिष्ठिता भविष्यति । तेन च योगं सर्वत्र समचित्तत्वरूपं त्वमवाप्स्यसि । बुद्धिस्समाहिता चेत् समत्वभावना स्वयमेव संभवेत् । बुद्धौ असमाहितायां तदा तस्याः कलुषितत्वात् न समत्वभावना स्यादित्यर्थः ॥ ५३ ॥

एवं संपूर्णतया फलसङ्गत्यागात् मनुष्यस्य बुद्धिरचला व्यवस्थिता च भवतीत्युक्ते तादृशः निश्चितमतेर्लक्षणं किमित्यर्जुनः पृच्छति—

**स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।**
**स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥ ५४ ॥**

अर्जुन उवाच—हे केशव कृष्ण, समाधिस्थस्य उक्तसमाधिनिष्ठस्य स्थितप्रज्ञस्य स्थिता उक्तरीत्या प्रतिष्ठिता प्रज्ञा यस्य तस्य का भाषा ? किं भाषणं वचनं हि कीदृशम् ? स च स्थितधीः पैररितरैः सह किं प्रभाषेत कीदृशं

वचनं ब्रूयात् ? किं कीदृशरीत्या स आसीत ? किं कीदृशरीत्या व्रजेत गच्छेत् ? तस्य गतिस्थित्यादिकं किंरूपं स्यात् ? इति अर्जुनोऽपृच्छत् ॥५४॥

एवं पृष्टमर्जुनं प्रति भगवात् प्रत्युत्तरमाह—

**प्रजहाति यदा कामान्सर्वान् पार्थ मनोगतान् ।**
**आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥ ५५ ॥**

श्रीभगवानुवाच—हे पार्थ अर्जुन, मनोगतान् मनसि विद्यमानान् सर्वान् सर्वविधानप्यैहिकामुष्मिकरूपान् ख्यातिलाभस्वर्गादिरूपान् कामान् अल्पपुरुषार्थविषयकान् कामान् यदा प्रजहाति त्यजति । किन्तु आत्मन्येवात्मना तुष्टः स्वात्मन्येव स्वयं तुष्टः न तु तदतिरिक्तेषु सुखसाधनत्वादिबुद्धिमान् भवति । एवं बाह्यसुखसाधनेषु आसक्तिरहितः स्वयमन्तरेव योगवशादात्मानुभवमात्रेण तुष्यन् यदा वर्तते तदा सः स्थितप्रज्ञ इत्युच्यते । ऐन्द्रियिकसुखादीनि अत्यल्पं मन्वानः आत्मसुखमात्रतृप्तो मानवः स्थितप्रज्ञः संपद्यते । बाह्यपुरुषार्थासक्तस्य तु चित्तससाधानाद्यसंभवेन प्रज्ञा तावत् सुव्यवस्थिता न कदापि स्यादेव ॥ ५५ ॥

**दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।**
**वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥ ५६ ॥**

दुःखेषु प्राप्तेषु अनुद्विग्नमनाः न उद्विग्नं प्रक्षुभितं मनः यस्य सः अविकृतचित्तः । एवं सुखेषु च विगतस्पृहः तदर्थापेक्षाशून्यः । अग्निरिव इन्धनेन विषयाभिलाषो न भोगेन शाम्यति । " न जातु कामः कामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ " इत्यभियुक्ता वदन्ति । एवमेव दुःखेऽपि अविकारात् सुखेऽप्यपेक्षाभावाच्च वीतरागभयक्रोधः वीता गता राग इच्छा, भयं भीतिः, क्रोधः कोपः यस्य सः वीतरागभयक्रोधः यस्तादृशः स मुनिर्योगी स्थितधीः स्थितप्रज्ञ इत्युच्यते । जीवितकाले तदातदा समागतानि दुःखानि भगवत्प्रसादलब्धानीति सन्तोषेण स्वीकरोत्ययं

स्थितप्रज्ञः । अस्य जीवनप्रकारं शरणाः हृदयङ्गमया रीत्या वर्णयन्ति । "देहस्य दुःखं प्रसमीक्ष्य भीतः रक्षेति देवं न कदापि याचे । शरीररक्षार्थमुपायमेकमन्वेषयन् भीत इहैव चाहम् ॥ देहीति देवं न कदापि याचे यद्भाव्यमेवेह तदस्तु नित्यम् । निन्दा च स्तोत्रं ह्यनुयातु भृत्ये तस्योभयं साधु भवेद्धि सत्यम् ।" इति । एतादृशीं निष्ठां स्थितप्रज्ञे पश्यामः । अत एव तस्य सुखदुःखादिकं सर्वमपि भगवत्प्रसादरूपतया परिणमति । तादृशेऽनुभविनि कामादयोऽपि स्वीयां वक्रतां विहाय भगवति विनियुक्ताः तत्प्रिया भूत्वा अनुभविनमलङ्कुर्वन्ति । "कामेन किं स्यादिह लिङ्गमिच्छतः क्रोधेन किं स्याच्छरणाभिकांक्षिणः । लोभेन किं स्याद्गुरुभक्तिकांक्षिण मोहेन किं स्याच्च प्रसादकांक्षिणः ॥" इति बसवार्यः कामक्रोधादीन् गुरुजङ्गमात्मरूपस्य शिवस्य सेवायां विनियोक्तव्यत्वेन निर्दिशति । एवं कामक्रोधादयश्च विद्यमाना अपि शिवसेवार्थं विनियुक्ताश्चेन्न कामपि हानिमुत्पादयन्ति । परन्तु मदमत्सरयोरवकाशो न देय इति शरणाः साधकान् वारयन्ति ; यतस्ताभ्यां चैतन्यशुद्धिरेव परिहीयेत । "चैतन्यशुद्धिर्मदमत्सरात्मसु निरीक्षितुं नार्हति संगमेश । सद्वर्तनेषु प्रयतेषु देवो ह्यातिष्ठतीति प्रथिता प्रतीतिः ॥" इति निर्मत्सराणां सद्वर्तनं प्रशंसते भगवान् बसवार्यः । एतादृश एव योगी स्थितप्रज्ञ इति व्यवह्रियते । अर्जुनस्तादृग्योगी भवेदिति कृष्णो निरीक्षते ॥

यस्सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम् ।
नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥ ५७ ॥

यः योगी सर्वत्र लौकिकविषयेषु सर्वेष्वपि अनभिस्नेहः अभिस्नेह आसक्तिस्तद्वर्जितः । अत एव तत्तत् शुभाशुभं शुभं वा अशुभं वा कर्मवश प्राप्तं सर्वं प्राप्य नाभिनन्दति न द्वेष्टि च । शुभं प्राप्य न प्रहर्षमनुभवति तथैवाशुभं प्राप्य न द्वेष्टि च । "अनेनेदमापतितं, अयमेवास्याशुभस्य हेतुः" इत्यालोच्य न कमपि निन्दति । तस्य तादृशस्य मुनेस्साधकस्य प्रज्ञा प्रतिष्ठिता

सुव्यवस्थिता वर्तते । सःस्थितप्रज्ञ उच्यते । शरीररक्षणार्थं तद्दुःखनिवारणार्थं वा सः परमात्मानं अन्यान् मनुष्यान्वा न कदापि याचते । "साधुस्वभावः पुरुषस्तु लोके शिवप्रियो ह्येकदिनं वसेन्नु" इति शरणोक्त्यनुसारेण शिवप्रियं धन्यं जीवनं यो निर्वहति स एव स्थितप्रज्ञो भवितुमर्हति ॥ ५८ ॥

**यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः ॥**
**इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ५८ ॥**

यदा अयं योगी कूर्मः अंगानीव इन्द्रियाणि मनःप्रभृतीनि स्वेन्द्रियाणि इन्द्रियार्थेभ्यस्तत्तद्विषयेभ्यः सर्वशः संपूर्णतया संहरते सम्यगुपसंहरति । लौकिकख्यातिलाभपशुपुत्रस्वर्गादिषु लेशतोऽप्यात्मसाक्षिकतया अपेक्षारहितो वर्तते । तदा तस्य मुनेः प्रज्ञा प्रतिष्ठिता । स एव स्थितप्रज्ञ उच्यते । एवं च यदृच्छया कर्मवशप्राप्तं सुखं दुःख वा समं जानन् आत्मन्येवात्मना तुष्टः स्थितप्रज्ञ इति भाव्यते ॥ ५८ ॥

इन्द्रियाणां विषयेभ्य उपसंहारः कथं कर्तव्य इत्यत्राह--

**विषया विनिवर्तन्ते निराहारस्य देहिनः ।**
**रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥ ५९ ॥**

निराहारस्य अनुपभुज्यमानविषयस्य देहिनो नरस्य विषया रूपरसगन्धस्पर्शशब्दाख्या भोज्यांशा रसवर्जं रसो रागो विषयानुभवेच्छा मूलभूतं बीजं तद्वर्जं निवर्तन्ते । इन्द्रियाणां विषयग्रहणस्वभावत्वेन स्वभावस्य दुस्त्यजत्वात् तेषु तादृशः स्वभावः बीजरूपतया तिष्ठेदेव । परंतु उपर्युपरि विषयान् अभुञ्जतस्तु पुरुषस्य इन्द्रियाणि "अस्य समीपे न मम प्रभावः प्रचलति" इति विज्ञायेव तूष्णीं निष्ठेयुः। अतो विषयभोगेच्छा प्रथमतस्त्याज्या । विषयाश्च शब्दादयो बाह्येन्द्रियाणाम् । ख्यातिलाभाद्यर्थसङ्कल्पास्तु मनस इत्येतत्प्रसिद्धमेव । अतस्सर्वे एवैते विवेकिना दूरतस्त्याज्याः । इन्द्रियेषु बीजतया वर्तमानो रसोऽपि परं इन्द्रियविषयसुखापेक्षयाऽतिशयितसुखस्वरूपं

परतत्त्वरूपं वस्तु दृष्ट्वाऽनुभूय स्वयं निवर्तते। परमात्मानुभवादेव विषयाभिलाषो निवर्तते। अतो मानवः परमात्मदर्शनाय यथामति प्रययेत। तदर्थं प्रत्येकः प्रयत्नश्च नापेक्ष्यते। व्यवहारान् सर्वानपि शिवचिन्तनेन यदा निर्वहन् वर्तते मानवस्तदैव तस्य भावना परिवर्तते। ततः प्रभृति सः ब्राह्मीं स्थितिमधिगच्छति। एवं स्थित्वा भगवत्सङ्कल्पानुरोधेन प्रसक्तं युद्धं समाचरेति भगवानर्जुनायोपदिशति ॥ ५९ ॥

परन्तु इन्द्रियाणां जयो न सुलभ इत्याह—

**यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः।**
**इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥ ६० ॥**

हे कौन्तेय, यततो ह्यपि प्रयत्नं कुर्वतोऽपि विपश्चितः सर्वमेतज्ज्ञानतोऽपि पुरुषस्य प्रमाथीनि प्रमथनशीलानि चित्तचांचल्यकारीणि इन्द्रियाणि मनः प्रसभं हठादेव हरन्ति बहिर्मुखानि कुर्युः। एवं च प्रथमं बाह्येन्द्रियाणां जयः कर्तव्यः। नो चेत् मनोऽपि कलुषितं स्यात्। "बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति" इति व्यासमहर्षिरिन्द्रियाणां चित्ताकर्षणसामर्थ्यं प्रवक्ति। अत इन्द्रियाणां व्यवस्थितया रीत्या सदुपयोगाय मानवैर्बुद्धिबलेन प्रयतितव्यम् ॥

**तानि सर्वाणि संयम्य युक्त आसीत मत्परः।**
**वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥ ६१ ॥**

अतस्तानि तादृशानि प्रमाथीनि अनर्थकारीणि इन्द्रियाणि सर्वाणि संयम्य सम्यक् नियम्य व्यवस्थयोपयुज्य युक्तस्सर्वत्र समभावनया समाहितो मत्परो मदेकप्रवणचित्तस्त्वम्। "त्वया परमात्मैक एव प्राप्यः" इति निर्णयवान् भव। तदेकध्यान एव आसीः। एवमासीनस्य यस्य पुरुषस्य वशे इन्द्रियाणि वर्तेयुस्तस्यैव प्रज्ञा प्रतिष्ठिता निश्चला भवेत्। इन्द्रियाणां संयमनप्रकारोऽत्रोपदिष्टस्तेषां सत्कार्ये विनियोग एवेति। बुद्धियुक्तेन जीवेन धर्माचरणाय यदीन्द्रियाण्युपयुज्येरन् तदा तानि बन्धकानि न भवेयुः।

एवमिन्द्रियाणां सहकारेणैव कर्तव्यं निर्वहन्मानवः आत्मकल्याणं साधयेदिति भगवानपेक्षते । शरणास्तु अमुं विषयं स्वानुभवपूर्वकं सोदाहरणं प्रतिपादयन्ति । बसवार्यवचनमत्र निदर्शनार्हं विराजते । "यदीन्द्रियं रुद्ध्यत एव एव मर्त्यैस्तदा भवेद्दोषविदूषितत्वम् । भोगैकस्सक्तस्सिरियाळभक्तस्तत्याज किं भोगसुखं विरक्तः ॥ बल्लाळ एवः किमु भोगभाग्यं तत्याज स्वामिन् गुरुकूडलार्य । भवन्तमाश्रित्य परस्त्रियं तथा परस्वमिच्छन्हि विसृज्यते सदा ॥" इति । एवमिन्द्रियाणि भगवत्सेवार्थं विनियुज्यैवात्महितमाचरणीयमिति बसवार्यो यद्वदति तत्सर्वेषां सर्वदा उपादेयमेव । इन्द्रियाणां विनियोगमार्गोऽपि सम्यगुपदिश्यते तेन महात्मना । "वीक्षस्व भृशं गुरुसङ्गमार्य संप्रार्थये त्वां दृढभक्तियोगात् । यथा न पश्येयमिहैव किञ्चित्तथा कुरु त्वं कृपयान्धकं माम् ॥ यथा न गच्छेयमितस्ततोऽपि तथा कुरु त्वं कृपयैव पंगुम् । यथा च नान्यच्छृणुयामिहैव तथा कुरु त्वं कृपयैव मूकम् ॥ तथाद्य मां पश्य यथा भवत्पदं विहाय नान्यत्परिचिन्त्यते मया ॥" इति । एवं सर्वदा भगवद्ध्यानशुश्रूषार्थमेवेन्द्रियाणां विनियोग एव तानि दुर्मार्गप्रवर्तनात् निवारयति । ततश्च मनोनिग्रहः सुगमो भवेत् ॥ ६१ ॥

इन्द्रियाणां संयमप्रकारं, तदसंयमनेऽनर्थं चाह द्वाभ्याम्—

**ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते ।**
**सङ्गात्सञ्जायते कामः कामात्क्रोधोऽभिजायते ॥ ६२ ॥**
**क्रोधाद्भवति संमोहस्संमोहात्स्मृतिविभ्रमः ।**
**स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥ ६३ ॥**

विषयान् रूपस्पर्शादीन् बाह्यान्, ख्यातिलाभादिकान् आन्तरांश्च ध्यायतश्चिन्तयतस्तेषु सङ्गात्कामस्तदर्थाभिलापस्संजायते । तादृशकामे जाते तत्प्रतिरोधादिना क्रोधो जायते । क्रोधे च जाते संमोह अविवेक उत्पद्यते । "क्रुद्धो हन्यात् गुरूनपि" इति हि न्यायः प्रसिद्धः । एवमविवेकात्

स्मृतिविभ्रमः कोऽहं, किं कर्तव्यं इत्यादिकृत्याकृत्यविवेकनाशो भवेत् । तेन च बुद्धिनाशः । तस्माच्च प्रणश्यति संपूर्णतया नष्टो भवति मानवः । समीचीना हि बुद्धिः सकलश्रेयसः कारणं संपद्यते । तस्या विनाशे पुरुषस्य नाशः अवश्यं भवेदेवेत्यर्थः । कोपस्य दुष्परिणामं हृदयङ्गमतया चित्रयन्ति शरणाः । योऽविवेकेन कोपमादत्ते तस्य न केवलं स्थानमानहानिः किन्तु सर्वस्वनाशस्संभवतीति ते अभिप्रयन्ति । " किं कुप्यसि त्वं कुपितेऽपि मानवे किं तत्फलं स्यात्तव किं परेषाम् ॥ तनोश्च कोपः प्रविहन्ति मानं मनःप्रकोपः प्रविहन्ति शेमुषीम् ॥ दहेद्गृहस्थो गृहमेव दावो नान्यद्गृहं संदहतीव देव ॥ " इति शरणो बसवार्यः कोपेन निर्वर्त्यमानं विषमं परिणामं सम्यगुपपादयति । एवं विषयसंगात् कामक्रोधाद्युत्पत्तिश्रवणेन साधकाः सर्वदा सतां संगे, स्थित्वा कामक्रोधादीन् महाविषये परमात्मनि विनियुज्य तदनुग्रहेणैव जन्मसाफल्यं लभेरन्निति निरीक्ष्यते । एवंविधं मनःपरिपाकं लब्ध्वैव साधकाः कर्तव्यनिष्ठाः स्युः । तादृश एव ते नित्यसुन्दराश्च भवेयुः ॥

ननु यावत्पर्यन्तं लोके वसति मानवः तावत्पर्यन्तं रूपस्पर्शादिविषयप्राप्तेः, अन्ततः कर्माधीनताया वा अवर्जनीयत्वात् कर्मफलस्यावश्यानुभाव्यत्वाच्च विषयान् संपूर्णं परित्यजेदित्यत्राह—

**रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।**
**आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥ ६४ ॥**

रागद्वेषवियुक्तैः पूर्वोक्तरीत्या शुभेषु रागं व्यामोहं, अशुभेषु द्वेषं वा त्यजद्भिः, अत एव आत्मवश्यैः विषयान् तत्तत्कालं कर्मवशप्राप्तान् स्पर्शादिविषयान् चरन् अनुभवन् स्वान्तर्गतायेष्टप्राणभावात्मकाय परमेश्वराय तदानीमेव भक्त्या समर्प्य तद्भुक्तशेषान् तानेव विषयान् भुञ्जानो विधेयात्मा व्यवस्थितचित्तः शिवदीक्षया सुसंस्कृतो निर्मलो जीवः प्रसादमन्तःकरणनैर्मल्यमधिगच्छति प्राप्नोति । स्पर्शादिषु भोज्यविषयेषु एकैकस्मिन्नपि रूपं रुचिस्तृप्ति-

रिति त्रयः पदार्था वर्तन्ते। भक्त्या यदि ते सपर्य्यन्ते तदा तान् परमेश्वरोऽवश्यं स्वीकरोति। देहे तु भ्रूमध्ये इष्टलिङ्गरूपेण, हृदये प्राणलिंगरूपेण, शिरसि भावलिंगरूपेण एक एव परमात्मा भक्तानुग्रहाय विलसति। गुरूणा एतत्सर्वं ज्ञात्वा साधको जीवः एकैकमपि भोज्यवस्तु यदि भक्त्या परमात्मने समर्पयेत्तदा रूपमिष्टलिंगाय भ्रूमध्यस्थाय, रसः प्राणलिंगाय हृदयस्थाय, तृप्तिर्भावलिंगाय शिरोविराजमानाय समर्पिता भवन्ति। एवं समर्पणेन पदार्थगतौ रजस्तमोगुणौ परिहीयेते; परंतु सत्त्वगुण एक एवावशिष्यते। एवं सत्त्वप्रवृद्ध्या साधके सात्त्विकवर्तनेन मनःप्रसादो जायते। प्रसादस्तु प्रसन्नतेत्यनुभविनो वदन्ति। पदार्थभोगात्प्राक् यस्मैकस्मैचित् सत्पात्राय सन्तोषेण प्रदानमेव त्याग उच्यते। अनेन त्यागेनैव परमात्मा प्रीयते न तु प्राग्भोगेन। "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः" इति भगवती श्रुतिरेव त्यागस्य महत्त्वं वर्णयति। त्यागेनैव मानवः शिवप्रियो भूत्वा शक्तिविकासेन शिव एव संपद्यते। इयमेवामृतस्थितिः। भोगेन पाशवी वृत्तिर्वर्धते। परन्तु त्यागादनन्तरं तदेव भोज्यं वस्तु यदि भुज्येत तदा प्रसादरूपेण परिणतं सत् साधकं पावयति। मानवैर्न कदापि पदार्थभोगिभिर्भाव्यं किन्तु प्रसादभोगिभिर्भवितव्यमिति भगवत आशयः। "तेन त्यक्तेन भुञ्जीथाः मा गृधः कस्यस्विद्धनम्" इतीशावास्ये श्रूयते। इष्टप्राणभावात्मकाय महादेवाय वस्तुगतरूपरुचितृप्तीनां पदार्थानां समर्पणेन त एव परमात्मना अदृश्यतयैवोपभुज्य त्यक्ताः भक्ताननुग्रहीतुं वात्सल्यपूर्वकं प्रतिनिवर्त्यन्ते। एतदेव भुक्तावशिष्टं वस्तु शेषः इति वैष्णवसंप्रदाये, त्यक्त इति वीरशैवसंप्रदाये च भाव्यते। परमात्मने तत्तत्काल एव भक्त्या समर्पितं सुखदुःखादिकं सर्वमपि वस्तु तेन त्यक्तमिति संभाव्य यः स्वीकरोति सः नित्यसुखी संपद्यते। तादृशं नित्यसुखं दुःखमध्ये योऽनुभवति स एव ब्राह्मणः। सुखदुःखयोः समीकरणं त्विदमेव। यः समदर्शनः स सर्वोऽपि ब्राह्मण एव। य एवं स्वान्ते स्वहिताय निवसन्तं परमात्मानं प्राणवत्प्रियमिष्ट-

देवमिति भावयित्वा सर्वमपि स्वीयं भोज्यं वस्तु तस्मै भक्त्या समर्पयितुं वीरव्रतमेकं स्वीकरोति स एव वीरशैवः। जगद्रूपतया सर्वव्यापकं ब्रह्मचैतन्यं अखण्डलिंगमिति मत्वा तस्मिन्नेव स्वस्यावस्थानात् स्वं संपूर्णतया तदधीनमिति यो भावयति स एव लिङ्गायत्तचित्तत्वात् लिंगायत इति व्यवह्रियते। एवं ब्राह्मणवीरशैवलिंगायतपदानि न केवलं जातिवाचकानि किंतु ब्रह्मभावबोधकानीति विवेकिभिर्ज्ञेयम्। एतादृशं ब्रह्मभावमधिगन्तुं सच्चरितानां सर्वेषामप्यधिकारो वर्तते। एवं ब्राह्मणो भूत्वा ब्रह्मभावेऽहङ्कारममकारौ संत्यज्य प्रसादभोगेन निर्मलो भूत्वा युद्धं शिवाराधनभावनया निर्वोढुं परमात्मा श्रीकृष्णोऽर्जुनं प्रेरयति ॥ ६४ ॥

प्रसादे सर्वदुःखानां हानिरस्योपजायते।
प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ॥ ६५ ॥

प्रसादे एवं प्रसादभोगेनान्तःकरणे प्रसन्ने सति पुरुषस्य सर्वदुःखानां हानिरुपजायते। सर्वदुःखानामपि हि मूलं मनःकालुष्यमेव। "मन एव मनुष्याणां कारणं बन्धमोक्षयोः। बन्धाय विषयासङ्गि मुक्त्यै निर्विषयं मनः।" इति ह्युच्यतेऽनुभविभिः। एवं प्रसन्नचेतसो मनुष्यस्य हि बुद्धिराशु शीघ्रमेव पर्यवतिष्ठते। निश्चलभक्तिस्तादृशः साधकः शीघ्रं स्थितप्रज्ञो भवतीत्यर्थः ॥६५॥

नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना।
न चाभावयतः शान्तिरशान्तस्य कुतस्सुखम् ॥ ६६ ॥

अयुक्तस्य असमाहितचित्तस्य तावत् समीचीना बुद्धिर्नास्ति न संभवति। एवमयुक्तस्य परमात्मनि सर्वार्पणभावेन यः शरणागतो न भवति तादृशः प्रत्येकजीविनः पुरुषस्य व्यवहारकालेऽपि शिरोविराजमानेन प्रेक्षकेन भावलिंगेन ऐक्यमनापन्नस्य भावना सर्वत्रात्मचिन्ता न संभवति। तस्य तावदात्मौपम्यदृष्टिर्न विलसति। "ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः। लिप्यते न स पापेन पद्मपत्रमिवांभसा।" इति भगवानेव वक्ष्यति। एवं

सर्वेषामपि कर्मणां ब्रह्मभावेन समदृष्ट्या अनुष्ठानमेव योगः। स एव यस्मिन् न विद्यते सोऽयुक्त इति परिगण्यते। तस्यायुक्तस्य सद्भावना न विद्यते। एवमध्यात्मभावनारहितस्य शान्तिरुपशमो न संभवति। अशान्तस्य विषय-कलुषितस्य सुखं कुतो लभ्यते? इन्द्रियलभ्यं सुखं दुःखमिश्रमेवेति सर्वैः ज्ञातम्। 'ये हि संस्पर्शजा भोगा दुःखयोनय एव ते' इति भगवानप्याह। तस्मात्संयुक्तस्यैव जगद्व्यवहारेण शाश्वतं सुखं स्यात्। एतादृशो योगो यैर्नाधिगम्यते त एव व्यवहारैर्दुःखं प्राप्नुवन्ति। अयमेवाशयः "योगः कर्मसु कौशलम्" इत्यत्राविष्कृतः। यः स्वस्मै स्वहिताय स्वचसेवाहङ्कारेण व्यवहरति सः दुःखभाग्भवति। यः स्वहृदये विराजमानाय प्राणलिङ्गाय सर्वेन्द्रियैस्सह स्वात्मानमपि समर्प्य तत्सन्तोषार्थं तत्प्रेरणानुरोधेनैव व्यवहरति सः न कदापि दुःखं समश्नुते। यस्तच्चित्तो तन्निष्ठस्तद्गतप्राणस्समाहितो भूत्वा स्वीयपतिसन्तोषायैव नित्यं व्यवहरति स सर्वदा नित्यसुखी वर्तते। शान्तितृप्ती तस्य स्वभावतया परिणमतः। एवं जागरूकतया व्यवहरणमेव योग इति परमात्मा उपदिशति। तादृशो योगस्य परिचयः सर्वेषामप्याव-श्यकः। अस्य योगस्यानधिगमेनैव मानवा दुःखिनो भवेयुः॥ ६६॥

अयुक्तस्य जीवस्य बुद्धिर्व्यवस्थिता न भवतीति कुत इत्यत्राह—

**इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते।**
**तदस्य हरति प्रज्ञां वायुर्नावमिवांभसि॥ ६७॥**

चरतां स्वस्वविषयेषु प्रवर्तमानानां इन्द्रियाणां यन्मनः अनुविधीयते इन्द्रियमनुसृत्य मनोऽपि यत्र प्रवर्ततेवेत्यर्थः। तन्मनः अंभसि उदके नद्यादि-प्रवाहे नावं वायुरिव अस्य मनुष्यस्य प्रज्ञां हरति हि। वायुर्यस्यां दिशि-नावमपि हठात्प्रवर्तयत्येव, तद्वदिन्द्रियाणां विषयप्राबल्ये मनसोऽपि तदनु-गुणप्रवृत्तौ प्रज्ञापि तदनुगुणैव भवेदित्यर्थः॥ ६८॥

**तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः।**

इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ६९ ॥

हे महाबाहो, तस्मात्कारणात् यस्य विवेकिनः इन्द्रियाणीन्द्रियार्थेभ्यः स्वविषयेभ्यः सर्वशः सर्वप्रकारेणापि निगृहीतानि भवन्ति तस्यैव प्रज्ञा प्रतिष्ठिता निश्चला भवति ॥ ६७ ॥

एवमिन्द्रियविषयेषु प्रवृत्तिरविद्यावशाद्भवति । अविद्या च विद्याविरोधिनी । अत इयमविद्या विद्यां ज्ञानं नाशयेत् । एवमुत्पन्ना च विद्या अविद्यां नाशयेत् । विद्याया अविद्यानाशकत्वं प्रसिद्धम् । एवं विद्याविद्ययोः परस्परनाशकत्वमुपपादयति—

या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥ ६९ ॥

यथा निशाचराणां निशैव दिवा भवति ; तेषां दिवैव अस्माकं निशा भवति तथा सर्वभूतानां सर्वप्राणिनां या निशा तमः सर्वपदार्थानां अविवेकहेतुरदर्शनकारणं संपद्यते तस्यास्तमसि संयमी योगी जागर्ति सर्वं पश्यति । लोकस्तु तद्विपरीतवर्तन एव वर्तते । अतस्तेषां विवेक एव स्वेष्टविरोधित्वात् तम उच्यते । योगी तावदन्धकारे वस्तुनां बाह्यरूपाणि यद्यपि न पश्यति किन्तु प्रकाशमानं ब्राह्मं चिद्रूपं पश्यत्येव । तदानीमविवेकिनस्तु बाह्यप्रकाशाभावात् वस्तुनां बाह्यरूपाणि न हि पश्यन्ति । परन्तु अन्तर्विराजमानं चिद्रूपं द्रष्टुं न शक्यत एव तेषाम् । अतो ज्ञानिनां या जागृदवस्था सा अज्ञानिनां निशावस्था संपद्यते । यदा अज्ञानिना सर्वाणि वस्तूनि बाह्यदृष्ट्या अवलोक्यन्ते तदा ज्ञानिना तानि न दृश्यन्त एव ; प्रत्युत सः सर्वत्र परमात्मप्रकाशमेव पश्यति । बाह्यानि रूपाण्यपि तस्य ब्रह्मभावेनैव दृश्यन्ते । अविवेकिनां स्वेष्टविरोधित्वात् यो विवेकस्तमो भवति स एव योगिनां स्वेष्टसाधनत्वात् दिवा संपद्यते । एवं यस्यामविवेकावस्थायां भूतानि इतरप्राणिनः जाग्रति सर्वं पश्यन्ति सैवावस्था पश्यतो मुनेः परमर्थतत्त्वं पश्यतो योगिनः

निशा भवति । अविवेकदशायां हि मानवः सर्वं करोति । सा त्ववस्था ज्ञानिनः स्वेष्टवस्तुविरोधित्वात् निशेव भवति । तथाच अविवेकिनो यत्र रमन्ते तत् विवेकिनां जुगुप्सितं भवति । विवेकिना यत् जुगुप्सितं तदेव च मूर्खाणां प्रियतमं भवतीत्युक्तं भवति ॥ ६९ ॥

एवञ्च उक्तरीत्या विवेकिनः आत्मातिरिक्तविषयवितृष्णस्यैव शान्तिर्मोक्षो वा भवितुमर्हति ; न तु आत्मातिरिक्तक्षुद्रात्यन्तहेयार्थतृष्णस्येति सदृष्टान्तमुपपादयति—

**आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति तद्वत् ।**
**तद्वत्कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी ॥ २०॥**

आपूर्यमाणं नद्यादीनामद्भिः सदा पूर्यमाणमपि अचलं एकरूपमेव सन्तं समुद्रमापः सर्वतः प्राप्ता यद्वत्प्रविशन्ति । तद्वत् प्राप्त्या अप्राप्त्या वा अविकृतं सततैकरूपं यं पुरुषं कामा अवशप्राप्ता विषयाः सर्वे प्रविशन्ति नतु लेशतोऽपि विकारमापादयन्ति स एव शान्तिमैहिकमनस्समाधानं अनन्तरं शाश्वतशान्तिरूपमोक्षं च आप्नोति । कामकामी काम्यन्त इति कामाः आत्मातिरिक्तलौकिकविषयाः तान् कामयितुं शीलं यस्य सः कामकामी । तादृग्जीवो नैव शान्तिमाप्नोतीत्यर्थः ॥ ७० ॥

**विहाय कामान्यस्सर्वान् पुमांश्चरति निःस्पृहः ।**
**निर्ममो निरहङ्कारः स शान्तिमधिगच्छति ॥ ७१ ॥**

तस्मात् यः कामान् उक्तलौकिकविषयान् विहाय परित्यज्य । तेषु पुरुषार्थत्वबुद्धिरहित इति यावत् । अत एव निस्पृहः कुत्राप्यपेक्षारहितः । अत एव निर्ममो निरहङ्कारश्च अहङ्कारममकाररहितस्स एवंभूतः शान्तिमधिगच्छति प्राप्नोति ॥ ७१ ॥

**एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यसि ।**
**स्थित्वास्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति ॥ ७२ ॥**

हे पार्थ, एषा यथोक्ता ब्राह्मी परशिवप्राप्त्यनुगुणा स्थितिः। एनां स्थितिं प्राप्य कोऽपि न विमुह्यति। अस्यां स्थित्यामन्तकालेऽपि अन्तिमवय-स्यपि स्थित्वा ब्रह्मनिर्वाणं ब्रह्मरूपं निर्वाणं मोक्षं ऋच्छति प्राप्नोति। अतः कथञ्चित् तादृशीं स्थितिं संपादयेत्यर्थः॥

## तृतीयाध्यायः

पूर्वं "दूरेण ह्यवरं कर्म बुद्धियोगाद्धनञ्जय। बुद्धौ शरणमन्विच्छ" इत्यारभ्य कर्मणां हेयत्वं, ज्ञानस्यैव श्रेष्ठत्वं चोक्तम्। अत्रार्जुनः पृच्छति।

**ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन।**
**तत्किं कर्मणि घोरे मां नियोजयसि केशव॥ १॥**

हे जनार्दन कृष्ण, कर्मणः कर्मापेक्षया बुद्धिर्ज्ञानमेव ज्यायसी श्रेष्ठेति ते तव मता चेत्सम्मता स्यात्, तत् तर्हि, हे केशव कृष्ण, घोरे कर्मणि युद्धाख्येऽस्मिन् घोरकृत्ये मां किं कुतो नियोजयसि प्रेरयसि 'तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः' इत्यादिना? देहे त्वयि परशिवस्सन्निधा वर्तत इति ज्ञानमेम नालम्; किन्तु स एव तदीयेन्द्रियैः तत्सेवकसकाशात् सकलान् व्यवहारान् निर्वहन् वर्तते। तदा प्रकृतिस्तमाकृष्य तत्सकाशाद्बलात्कारेण कर्म कारयति। अतस्स सर्वमपि कर्म भगवत्प्रीत्यर्थं निस्स्वार्थतया यदि करोति तदा स भगवदनुग्रहभाजनं भूत्वा तत्प्रसादेन सुखी संपद्यते। अतो देहे विराजमानस्य शिवस्य संतोषाथ सर्वोऽपि व्यवहारो निरुह्य इत्याशयेन तत्काले निर्वर्त्यं कर्म सर्वमपि कर्तव्यभावनया सर्वैरनुष्ठेयमिति कृष्णोऽर्जुनमपादिशत्। देहे शिवस्य सान्निध्यं, तेन निर्वर्त्यां जगद्व्यापारलीलां चाजानन्नर्जुनः केवल-स्वरूपज्ञाने यदि मानवो वर्तेत तदेवालम्; किमिति भीकरमिदं युद्धाख्यं कर्मानुष्ठेयमिति तस्याशयः। अत एव सः पृच्छति॥ १॥

व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे ।
तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥ २ ॥

व्यामिश्रेणेव परस्परसङ्कीर्णतयेव, कर्मसु मम प्रेरणात्, ज्ञानस्य च प्रशंसया। अर्थं निर्णेतुमशक्येनेव वाक्येन पूर्वोक्तेन मे मम बुद्धिं मोहयसीव कृत्याकृत्यविवेकशून्यं मां त्वमेव करोषीव कृतवानस्येव। उभयत्र इव-शब्दप्रयोगः स्वस्य मन्दबुद्धेस्तथा भातीत्यर्थं निवेदयति । "मानवस्य शिवज्ञानमेवावश्यकम् । तेनैव तस्य स्वरूपज्ञानमुदेति" इत्येकदा वक्ति भवान् । अनन्तरं सर्वमपि कर्म तदीयमिति ज्ञात्वा श्रद्धयानुष्ठेयमिति च वदति भवान् । किमहं ज्ञानमेकमेवावलंबे उत सर्वदा कर्म कुर्वन्नेव वर्ते इति संशयो मे जातः । तत्तस्मात् एकं कर्मज्ञानयोरन्यतरत् निश्चित्य येनान्यतरेण अहं श्रेयस्सद्गतिमाप्नुयां प्राप्नुयां तद्वद कथय ॥ २ ॥

लोकेऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मयानघ ।
ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् ॥ ३ ॥

एवं पृष्टः श्रीभगवानुवाच—अनघ अर्जुन, सांख्यानां ज्ञानिनां ज्ञान-योगेन, योगिनां कर्मिणां कर्मयोगेन च द्विविधा निष्ठा पुरा मया लोकेऽस्मिन् मया प्रोक्ता उपदिष्टा । तथा च ज्ञानयोगाधिकारिण एव केचित् ; कर्म-योगाधिकारिण एवान्ये इत्युक्तं भवति ॥ २ ॥

एवमुक्तयोर्द्विविधनिष्ठयोः स्वरूपमाह—

न कर्मणामनारंभान्नैष्कर्म्यं पुरुषोऽश्नुते ।
न च संन्यसनादेव सिद्धिं समधिगच्छति ॥ ४ ॥

कर्मणामनारंभादेव नैष्कर्म्यं कर्मोपरतिरूपं संन्यासं पुरुषो नाश्नुते न प्राप्नोति । एवं संन्यसनादेव कर्मणां त्यागमात्रेणैव सिद्धिं मोक्षाख्यपरम-पुरुषार्थं न च समधिगच्छति नैव प्राप्नोति । तथा च कर्मत्यागमात्रादेव ज्ञानयोगो न सिद्ध्येत् । अनुष्ठितेषु कर्मसु क्रमशश्चित्तशुद्धौ जातायां तस्याः

प्रतिष्ठितत्वसंभवेन तदानीमेव ज्ञानयोगस्यावकाशः न त्वारंभ एवेत्यर्थः ॥

कुतः कर्मणामावश्यकत्वमिति शङ्कायां कर्मणामवर्जनीयत्वमाह—

**न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ।**
**कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥ ४ ॥**

कश्चिद्धि पुरुषः क्षणमपि कंचित्कालमपि जातु कदापि अकर्मकृत् कर्म अकुर्वन्नेव तिष्ठति स्थातुं शक्नोति । सर्वदा सर्वैरपि यत्किञ्चित्कर्म क्रियमाणमेव वर्तते । इन्द्रियाणि इन्द्रियार्थेषु सदा वर्तन्त एव । जीव–परमयोस्सांन्निध्येनैवं सर्वोऽपि व्यवहार आनायासेन निरूह्यते । अतोऽत्र नास्त्येव जीवः कश्चिद्यः कर्म परित्यजति । किन्तु प्रकृतिजैः प्रकृतिसंबद्धैर्गुणैः सत्त्वरजस्तमोभिः सर्वः सर्वोऽपि जनः अवश एव स्वयमजानन्नपि यत्किञ्चित्कर्म कार्यत एव । बलात् प्रकृतिरेनं कर्म कारयत्येव । यावच्छरीरपतनं प्रकृतिसंबन्धस्यावर्जनीयत्वात् तत्प्रयुक्ततया यत्किञ्चित्कर्म सर्वैरप्यवश्यं कर्तव्यमेव । अतः कर्मणां त्यागमात्रेण ज्ञानयोगः सिद्ध्यतीति न भ्रमितव्यम् । यतः कर्माणि त्यक्तुमेवाशक्यानि इत्यर्थः ॥ ५ ॥

**कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।**
**इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते ॥ ६ ॥**

एवं स्थिते कर्मेन्द्रियाणि हस्तपादादीनि संयम्य बलात्कारेण बन्धयित्वा मनसा इन्द्रियार्थान् इन्द्रियविषयान् यः स्मरन्नास्ते चिन्तयंस्तिष्ठति स विमूढात्मा अत्यन्तमोहपीडितस्सन् मिथ्याचारो मृषाचारः कपटवेषधारी उच्यते । एवं च कर्मणां बाह्यतस्त्यागमात्रेण ज्ञानयोगो न सिध्येत् । एवं च इन्द्रियनिरोध एव नालम् ; किन्तु मनसोऽपि सर्वविषयेभ्यो निवृत्तिरप्यपेक्षितेत्यर्थः ॥ ६ ॥

एतादृशकपटज्ञान्यपेक्षया कर्मयोग्येव श्रेष्ठ इत्याह—

**यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन ।**
**कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते ॥ ७ ॥**

यस्तु एवं कर्मणां पूर्णतया त्याज्यत्वं न संभवतीति जानन् मनसान्तःकरणेन इन्द्रियाणि चक्षुरादीनि नियम्य स्वविषयेभ्यः संयम्य कर्मेन्द्रियैर्हस्तादिभिरसक्तस्सन् फलसङ्गरहितस्सन् कर्मयोगमारभते स एव विशिष्यते। पूर्वोक्तकपटज्ञानयोग्यपेक्षया एतादृशकर्मयोग्येव श्रेष्ट इत्यर्थः। इन्द्रियाणि व्यवस्थयोपयुज्य तत्सहकारेणैव फलाभिसन्धिरहितो यः स्वप्रेरकेश्वरप्रीत्यर्थमेव कर्मारभते स तादृक्कर्मयोगी प्रशस्य इत्यर्थः ॥ ७ ॥

अतस्त्वमपि कर्मनिष्ठ एव भवेत्यार्जुनं प्रेरयति भगवान्—

**नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः।**
**शरीरयात्रापि च ते न प्रसिध्येदकर्मणः ॥ ८ ॥**

अवश्यकर्तव्यत्वेन प्राप्तं कर्म त्वं कुरु। यतः अकर्मणः तादृशकर्मत्यागापेक्षया कर्मकरणमेव ज्यायः श्रेष्ठम्। कुत इत्यत्राह शरीरयात्रेति। अकर्मणः संपूर्णकर्मत्यागात् ते शरीरयात्रा देहसंरक्षणमपि न च प्रसिध्येत् नैव सिध्येत्। संपूर्णकर्मत्यागे शरीररक्षणं वा कथं कर्तुं शक्यम्। "नहि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः। उद्यमेन हि सिध्यन्ति सर्वेपि च मनोरथाः" इत्यभियुक्ता वदन्ति। अतोऽन्ततस्तदर्थं वा कर्म कर्तव्यमेवेति सूचनाय "कर्म ज्यायो ह्यकर्मणः" इत्युक्तम् ॥ ८ ॥

ननु कर्मणः पुण्यपापसाधनत्वात् बन्धकत्वेन तत्कथं ज्याय इत्यत्राह--

**यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः।**
**तदर्थं कर्म कौन्तेय मुक्तसङ्गस्समाचर ॥ ९ ॥**

अयं लोकः यज्ञार्थात्। ईश्वरप्रीत्यर्थो व्यापारो यज्ञः। यज् देवपूजायामिति धातोरुत्पन्नोऽयं शब्दः ईश्वराराधनं बोधयति। ईश्वरप्रीत्यर्थात्कर्मणोऽन्यत्र तद्व्यतिरिक्तालपपुरुषार्थफलकात् कर्मण एव लोकोऽयमत्रत्यो जनां कर्मबन्धनः कर्मरूपबन्धनविशिष्टो भवति। ईश्वरप्रीत्यर्थतया अवश्यप्राप्तकर्मणः करणे तु तादृशं कर्म नहि बन्धकं भवतीत्यर्थः। यदेव क्रियते तत्सर्वमपि

ईश्वराराधनमिति यो भावयति सः कर्मणा न बध्यते। प्रत्युत यः स्वीयं कर्म स्वस्मै स्वसुखायैव स्वयमेवानुतिष्ठति तमेव तदीयं कर्म बध्नाति। सः देहे सहजतया प्रवर्तमानां शिवस्य जगद्व्यापारलीलां ज्ञात्वा इन्द्रियव्यापारमपि शिवलीलात्वेनैव भावयति। अतस्तस्य कर्मणा न क्वापि हानिस्संभवेत्। तदर्थं तस्मात्कारणात् हे कौन्तेय अर्जुन, मुक्तसङ्गः फले सङ्गं त्यक्त्वा फलापेक्षां विहाय कर्म समाचर कुरु। फलसङ्ग एव अनर्थकारी। अत एव मानवैर्देहेन निर्वर्त्यमानानां सर्वेषामपि कर्मणां फलानि तदानीमेव स्वेष्वेव विराजमानायेश्वराय भक्त्या समर्पणीयानि। एवं कृते तेषु बन्धो न भविष्यत्येवेत्यर्थः। यतः पुण्यं पापं वा ईश्वर एव स्वसेवकजीवात्कारयति ततोऽयं जीवः सर्वमपि तेनैवानुष्ठितमिति यथार्थतया बुध्वा स्वयं निमित्तमात्रं श्रद्धया प्रवर्तेत। स एव निर्लिप्ततया कर्म कुर्वन् मनसापि स्वकर्तृत्वमस्मरन् सुखदुःखादिकं सर्वमपि ईश्वरप्रसादरूपेण स्वीकरोति। अयमेव बन्धविमोचनमार्गः भगवतोपदिष्टो मानवकल्याणाय। अनया भावनया अवश्यप्राप्तं युद्धमनुष्ठाय तत्फलमीश्वरप्रसाददृष्ट्या अनुभवितुं श्रीकृष्णोऽर्जुनमाज्ञापयति। सर्वं कर्म देहस्थपरमेश्वराराधनमेव; नान्यथेति यो भावयति स एव दुःखविदूरस्तृप्त्या शान्त्या च वसन् नित्यसुखी संपद्यते। एतदर्थमेव मानवो देहेन्द्रियसौकर्यं लब्धवान्। अयमेव योग इत्यनुभविनो वदन्ति। एवं योगी भूत्वा यः कर्म करोति सः न कदापि तेन कर्मणा बध्यते ॥ ९ ॥

**सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः।**
**अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥ १० ॥**

मनुष्यस्य पाशविमोचनप्रकारमेवोपपादयति। प्रजापतिः प्रजानां स्रष्टा ब्रह्मा पुरा पूर्वस्मिन्काले सहयज्ञाः यज्ञसहिता प्रजाः सृष्ट्वा एवमुवाच 'अनेन यज्ञेन यूयं प्रसविष्यध्वं वृद्धिं प्राप्नुत। एष यज्ञो वः युष्माकं इष्टकामधुक् इष्टानमितान्कामान् दोग्धि प्रददाति इति। एवं च कर्माणि प्रजानां सृष्टिकाले सहैव सृष्टानि तथैव कार्याभिमतसाधनानि च। अतः

कर्मणां त्यागो न कदापि कर्तव्यः; कर्तुमशक्यश्च। तत्रापि भारतभूमौ वर्तमानैरवश्यं कर्माचरणीयमेव। "यतो हि कर्मभूरेषा ह्यतोऽन्या भोगभूमयः" इत्यभिज्ञा वदन्ति। कर्मभूमौ जातैस्सर्वैरपि कर्म कार्यकदृष्ट्या नियतमेवानुष्ठेय मित्यर्थः॥ १०॥

**देवान् भावयतानेन ते देवा भावयन्तु वः।**
**परस्परं भावयन्तः श्रेयः परमवाप्स्यथ॥ ११॥**

यज्ञरूपं कर्म कथमिष्टार्थं साधयतीत्यत्राह देवानिति। देवानिन्द्रादीन् भावयता प्रीतान् कुर्वता अनेन यज्ञेन भवत्कृतकर्मणा प्रीतास्ते देवा वः युष्मान्भावयन्तु भवदिष्टप्रदानेन भवतस्सन्तोषयन्तु। भवद्भिः पूजिता देवा भवद्भ्यस्सर्वमपि फलं दद्युः। एवं परस्परं भावयन्तः परस्परेष्टं साधयन्तो यूयं सर्वे एवमेव परं श्रेय परमपुरुषार्थमपि क्रमशोऽवाप्स्यथ। एवं कर्माचरणेन सर्वमपि फलं प्राप्तुं शक्यते; यतः इष्टकामधुक् यज्ञ इति प्रोक्तं परमात्मनैव। अयं च यज्ञः शिवाराधनरूप इति वर्ण्यते श्रीरेणुकाचार्यैः। "पञ्चधा कथ्यते सद्भिस्तदेव भजनं पुनः। तपः कर्म जपो ध्यानं ज्ञानं चेत्यनुपूर्वकम्। अनेन पञ्चयज्ञेन यः पूजयति शङ्करम्। भक्त्या परमया युक्तः स वै भक्त इति स्मृतः॥" एवं पञ्चप्रकारेण शिवयज्ञेन मूर्तामूर्तात्मकं शिवं यः पूजयति स सर्वमप्यैहिकामुष्मिकं फलं शिवानुग्रहाद्विन्दते॥

एवं परस्परभावनाया अकरणे पापमपि स्यादित्याह—

**इष्टान् भोगान्हि वो देवा दास्यन्ते यज्ञभाविताः।**
**तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः॥ १२॥**

यज्ञभाविता यज्ञैर्भावितास्तोषिता हि देवा इन्द्रादयः व इष्टानभिमतान् भोगान् स्त्रीपशुपुत्रादीन् वः युष्मभ्यं दास्यन्ते वितरिष्यन्ति। एवं च यद्यत् दैहिकं सुखसाधनं लब्धं तत्सर्वमपि देवदत्तमिति भाव्यम्। एवं तैर्दत्तान् तानादायैभ्यो देवेभ्य अप्रदायादत्त्वा तेषां तृप्तिमकृत्वा यः केवलं

स्वयमेव भुङ्क्ते स्वदेहेन्द्रियाणि केवलं तर्पयन्ति सः स्तेन एव चोर एव भवेत्। देवैर्दत्तं तदीयाराधनरूपं यज्ञसाधनं कर्म यः स्वकीयभोगसाधनं परिकल्पयति सः चोर एव हि। नात्र संशयो वर्तेत। अतः कर्म अकुर्वतां चौर्यरूपं महच्च पापं संभवत्येव। कर्मानुष्ठानायैवायं देहोऽनुग्रहीतोऽस्माकमीश्वरेण। इमं च भगवदाराधनरूपं यज्ञं महत्त्वपूर्णं भावयन्ति शरणाः। तादृशपवित्रयज्ञाचरणाय स्वकीयं मनस्ते सम्यक् प्रेरयन्ति। "चित्त मदीयं शृणुताद्वचो हिं शिवं समाहूय गुरो शिवेति। तथा सकृत्पूजनतश्शिवस्य शिवो भव त्वं शिवभावनायाः॥ सकृत्समाहूय विभो हरेति भक्त्या समभ्यर्च्य हरो भव त्वम्। लिङ्गं समाहूय तदीयनाम्ना चिद्रूपमेतं गुरुमल्लिकार्जुनम्॥ सकृत्समभ्यर्च्य भवं वितीर्य त्वमेव लिङ्गं भव चित्त नित्यम्॥" इति शरणाः सर्वदेवात्मकस्य लिङ्गरूपिणश्शिवस्यार्चनेन मानवश्शिवो भवत्येवेति प्रतिपादयन्ति। "चिद्रूपलिङ्गस्य चरात्मनस्ते संसर्गतो मे भवरोगनाशः" इत्येतादृशो दृढ आत्मविश्वासस्तेषां चिरस्मरणीयोऽस्माकम्।

**यज्ञशिष्टाशिनस्सन्तो मुच्यन्ते सर्वकिल्बिषैः।**
**भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात्॥ १३॥**

अतो यज्ञशिष्टाशिनः। यज्ञो देवतापूजनम्। तत्कृत्वा तत्र शिष्टं यत् तत्प्रसादरूपत अधिगतं स्त्रीपशुपुत्रान्नादिकं तदाशिनः तदेवोपभुञ्जन्तो जनास्सर्वकिल्बिषैः सर्वविधपापेभ्यो मुच्यन्ते देवप्रसादभावनयैव सर्वस्योपभोगात् पापं न भवेदित्यर्थः। यज्ञशिष्टरूपे प्रसादेऽपि व्यवस्थितः क्रम आदरणीयः। स्वकीयोपास्यदेवाय यदेव भोज्यं वस्तु समर्प्यते तदेव तेन भुक्तं सत् स्वस्मै प्रसादरूपेणानुगृह्यते। स्वदेवे स्वीयप्रसादे च यो न विश्वसिति सः न कुत्रापि विश्वसेत्। अस्मिन्विषये शरणा निर्दाक्षिण्यतया वदन्त्याशयं स्वीयम्। "उपास्यदेवं परिहाय भिन्नं समर्चयेच्चेत्पतितो भवेन्ना। अनेकदेवोज्झितभक्षितारं शिष्टाः किमाहुः कथय प्रभो स्वयम्॥" इति ते भक्तंमन्यान् निष्पक्षपातं वारयन्ति। एवं दृढविश्वासेन यः प्रसादं भुङ्क्ते स

सर्वविधैः प्रापैर्विमुच्यत इत्याश्वासयति भगवान् सर्वेभ्यस्साधकेभ्यः । ये मूढा आत्मकारणात् केवलस्वदेहेन्द्रियादितृप्त्यर्थमेव पचन्ति पाकादिकं कर्म सर्वं कुर्वन्ति ते तु पापाः पापात्मान एव भवन्ति । पापमेव भुञ्जते पापमेव संपादयन्ति ते ॥ १२ ॥

कर्मणो जगच्चक्रप्रवृत्तिहेतुत्वात् तदवश्यं कर्तव्यमेवेत्याह—

**अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसंभवः ।**
**यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥ १४ ॥**

**कर्म ब्रह्मोद्भवं विद्धि ब्रह्माऽक्षरसमुद्भवम् ।**
**तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥ १५ ॥**

अन्नात् भुक्तादाहारात् भूतानि जीववर्गा भवन्ति जायन्ते । भुक्तं ह्यन्नं लोहिताद्यात्मना परिणमते । पर्जन्यान्मेघात् वृष्टेरन्नसंभवोऽन्नस्योत्पत्तिः । पर्जन्यश्च यज्ञाद्भवति देवताप्रीत्यर्थकृतकर्मभिर्जायते । "अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥" इति हि श्रूयते । अतो यज्ञात्पर्जन्यो भवति । यज्ञश्च कर्मसमुद्भवः । ऋत्विग्यजमानादिव्यापारसाध्यः खलु प्राकृतो यज्ञः । तथैव शिवयज्ञोऽपि पूजाद्रव्यानयनादिरूप एव । एवं चोभयविधोऽपि यज्ञः कर्मसमुद्भव एव । व्यापाररूपं कर्म च ब्रह्मोद्भवं ब्रह्म वेदः उद्भवः कारणं यस्य तत् । वेदविहितं खलु यज्ञादिकं कर्म । शिवयज्ञोऽपि त्रिविधोपासनरूपो वेदे विहित एव । "तस्याभिध्यानाद्योजनात्तत्त्वभावात्" इति श्वेताश्वतरोपनिषत्सु श्रूयते । उपासात्रैतिध्यं ब्रह्मसूत्रमप्युपदिशति । अतश्शिवयज्ञाख्यं कर्म ब्रह्मोद्भवं वेदविहितमिति जानीहि । एवं ज्ञातुं भगवानादिशति । ब्रह्म वेदश्च अक्षरसमुद्भवं अक्षरं नाम परमात्मा स एव वेदस्य परमकारणम् । "तस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदः" इति वेदानां परशिवसकाशादुद्भवः प्रसिद्धः । एवं सर्वकारणत्वात् परशिवब्रह्म सर्वगतं सर्वत्र विद्यमानमपि नित्यं सदा यज्ञे

प्रतिष्ठितं, सर्वेष्वपि कर्मसु वेदविहितयज्ञादेरेव प्राधान्यात्। 'यज्ञो दानं तपः कर्म पावनानि मनीषिणाम्' इति यज्ञादेः पवित्रत्वं वक्ष्यति। अतो ब्रह्म यज्ञे प्रतिष्ठितमित्युच्यते॥ १४–१५॥

**एवं प्रवर्तितं यज्ञं नानुवर्तयतीह यः।**
**अघायुरिन्द्रियारामो मोघं पार्थ स जीवति॥ १६॥**

एवमित्थं प्रवर्तितमीश्वरेणैव व्यवस्थापितं चक्रं जगच्चक्रं यो नानुवर्तयति न परिपालयति केवलमिन्द्रियभोगैकनिष्ठस्तिष्ठति स इन्द्रियाराम इन्द्रियाण्येव यस्यारामः क्रीडास्थानानि तादृशत्वात् अघायुः पापमयायुः मोघं व्यर्थमेव जीवति। एतादृशां जघन्यं जीवनमेवं निर्दिशन्ति शरणाः "आशानिबद्धाः शतशो मृताः पुरा तथैव चान्नात्खलु कोटिशो मृताः। नितंबिनीस्वर्णभुवां कृते मृतास्सहस्रशस्ते भवरोगपीडिताः॥ विचार्यमाणे बहुधा गुहेश्वर त्वदर्थमेकोऽपि मृतो न दृश्यते॥" इति भगवत्सेवार्थमेव यो जीवेत्स एव धन्य इत्याशयं प्रकटयन्ति ते॥ १६॥

**यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः।**
**आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते॥ १७॥**

यस्तु पूर्वविलक्षणो मानवः अनेकजन्मानुष्ठितदेवपूजादिपुण्यवशात् क्षीणपापः पिण्डनामकः साधकः सः आत्मरतिरेव स्यात् न त्विन्द्रियरतिरेव। अत एवात्मतृप्तश्च आत्मनैव तृप्तः न त्वन्नपानादिना। अत एवात्मन्येव च सन्तुष्टः न तु पुत्रदारादिना। तादृशस्य तु ज्ञानिनः कार्यं कर्तव्यं किञ्चिदिह न विद्यते नास्त्येव। एतादृशं साधकमेवं वर्णयति सिद्धान्तशिखामणिः "बहुजन्मकृतैः पुण्यैः प्रक्षीणे पापपञ्जरे। शुद्धान्तःकरणो देही पिण्डशब्देन गीयते॥ शिवशक्तिसमुत्पन्ने प्रपञ्चेऽस्मिन्विशिष्यते। पुण्याधिकः क्षीणपापः शुद्धात्मा पिण्डनामकः॥" इति। अयमेव पिण्डो भक्तः इति शिवेन, "ममैवांशः" इति कृष्णेन च निर्दिश्यते॥ १७॥

**नैव तस्य कृतेनार्थः नाकृतेनेह कश्चन ।**
**न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥ १८ ॥**

तस्यात्मरतेर्ज्ञानिनः कृतेन कर्मणा अर्थः प्रयोजनं किञ्चिदपि नैवास्ति। एवमकृतेन कर्माकरणेनापि वा कश्चनार्थस्य हान्यादिरिह नैवास्ति। अस्य ज्ञानिनस्सर्वभूतेषु ब्रह्मादिस्थावरान्तेषु प्राणिषु यः कश्चित् अर्थव्यपाश्रयः प्रयोजननिमित्तमुपाश्रयणं न चास्ति। कश्चित् भूतविशेषमाश्रित्य किञ्चित्साध्यं प्रयोजनमेव तस्य नास्ति, यतः ततत्सदर्थक्रियाकरणाकरणादिकं तस्य न लाभहान्यावहमित्यर्थः ॥ १८ ॥

**तस्मादसक्तस्सततं कार्यं कर्म समाचर ।**
**असक्तो ह्याचरन्कर्म परमाप्नोति पूरुषः ॥ १९ ॥**

तस्मात्कारणात् फलनिरपेक्षकर्मानुष्ठानेन दोषाभावादसक्तः सङ्गवर्जितस्सततं सदा कार्यं कर्तव्यत्वेन प्राप्तं कर्म समाचर कुरुष्व। एवमसक्तस्सन् कर्माचरन्पुरुषः परं परमात्मानमेवाप्नोति प्राप्नोति। तादृशकर्मानुष्ठानेन सत्त्वशुद्ध्या शिवज्ञानोदयान्मलपाशहान्या मोक्षस्सिध्यतीत्यर्थः ॥ १९ ॥

**कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।**
**लोकसंग्रहमेवापि संपश्यन्कर्तुमर्हसि ॥ २० ॥**

कर्मानुष्ठानावश्यकत्वे दृष्टान्तमप्याह। जनकादयो राजानोऽपि कर्मणैव स्ववर्णाश्रमधर्मत्वेन प्राप्तराज्यरक्षणादिनैव ससिद्धिं मोक्षमास्थिताः प्राप्ताः। यदि ते जनकादयः संपूर्णज्ञानिनोऽपि सन्तो लोकहितार्थमेव राज्यपरिपालनादिकं कृतवन्त इति मन्यसे तर्हि त्वमपि तथैव लोकसंग्रहमेवापि संपश्यन् लोकस्य स्वेच्छयोन्मार्गप्रवृत्तिवारणार्थं वा कर्मैव कर्तुमर्हसि ॥ २० ॥

**यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।**
**स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ २१ ॥**

लोकसंग्रहार्थमिति चेत्कोऽर्थ इत्यत्र विवरणं क्रियते। श्रेष्ठो मुख्यो

जनो यद्यदाचरति यद्यत्कर्म करोति इतरो जनस्सामान्यः प्राकृतो जनः तत्तदेव करोति। किञ्च सः श्रेष्ठो यत्प्रमाणं कुरुते लौकिकं वैदिकं वा प्रमाणीकरोति लोकोऽपि तदेव तेन यत्प्रमाणीकृतं तदेवानुवर्तते। "श्रेष्ठेन तेन कृतत्वात् तदेव ममापि समीचीनं स्यात्। अतो मयापि तदेव कर्तव्यम्" इति मत्वा तथैव कुर्युस्सर्वे। अतः संभावितो भवान् कर्म न परित्यजेदित्यर्थः ॥ २१ ॥

**न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन।**
**नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥ २२ ॥**

प्रागुक्तमर्थं स्वानुष्ठानेन स्थापयत्यत्र। हे पार्थ, मे अवाप्तसमस्तकामस्य मम त्रिष्वपि लोकेषु ऐहिकामुष्मिकफलोद्देशेन कर्तव्यं किञ्चन कर्म न विद्यते लेशतोऽपि नास्ति। यतो हि ममैतावता कालेनानवाप्तमप्राप्तं किञ्चित्फलं अवाप्तव्यं नूतनतया प्राप्तव्यं च नास्त्येव। अथापि कर्मणि मम वर्णाश्रमधर्मस्य परिपालनकर्मणि अहं वर्त एव च। साधयितव्यफलाभावेऽपि सर्वदाहं कार्यनिरत एवास्मीत्यनेन भगवानेवादर्शभूतः कर्मयोगीत्यर्थो ध्वन्यते।

**यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः।**
**मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ २३ ॥**

हे पार्थ, किमर्थमहं सर्वदा कर्तव्यकर्मव्याप्तोऽस्मीत्येतदाश्रावय। अतन्द्रितोऽनलसोऽहं जातु कदाचिदालस्यादिना कर्मणि न वर्तेय यदि कर्म न कुर्यां चेत् मनुष्यास्सर्वेऽपि सर्वशः सर्वप्रकारेणापि मम वर्त्मैव मदीयमार्गमेव अनुवर्तन्तेऽनुवर्तेरन्। सर्वेऽपि लोके न किञ्चिदपि कर्म कुर्युः; परन्तु ते भूभारा एव भवेयुः यद्यहं कर्म न कुर्याम् ॥ २३ ॥

**उत्सीदेयुरिमे लोकाः न कुर्यां कर्म चेदहम्।**
**सङ्करस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥ २४ ॥**

यदि लोके जनाः कर्म त्यजेयुस्तदा का हानिरित्यत्राह। अहं कर्म न कुर्यां चेदिमे लोकाः मामनुवर्तमानास्तेऽपि स्वस्वकर्तव्यं न कुर्युः। मम तु

अवाप्तसमस्तकामत्वात् न कापि हानिः स्यात् । तेषां त्वतादृशत्वात् सङ्करस्य वर्णाश्रमसाङ्कर्यस्य चाहमेव कर्ता स्याम् । अत एवेमाः प्रजा अहमेव हन्यां प्रजानामनुग्रहाय समागतोऽहमेव तान् हन्यामित्यर्थः ॥ २४ ॥

**सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।**
**कुर्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसङ्ग्रहम् ॥ २५ ॥**

हे भारत अर्जुन, अविद्वांसोऽज्ञानिनः कर्मणि सक्तास्सन्तो यथा तत्तत्फलाय कर्म कुर्वन्ति तथैव विद्वान् ज्ञानी सन्नपि लोकसङ्ग्रहं चिकीर्षुर्लोकानुग्रहं कर्तुमिच्छन् तान्येव कर्माणि असक्त अनासक्तस्सन् कुर्यात् । बाह्यदृष्ट्या पामरज्ञानिनोरविशेष एव । उभावपि कर्म यद्याप्यनुतिष्ठत एव ; तथापि ज्ञानी कर्मफले अनासक्तस्सन् कर्तव्यभावनया कर्म अनुतिष्ठति । अज्ञानी तु फलापेक्षया स्वाभिमानेन च कर्मानुतिष्ठति । तयोरेकः पाशमुक्तो भवत्यपरः पाशबद्धो भवति । अयमेव विशेषस्तयोरान्तरङ्गिकः ॥ २५ ॥

**न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।**
**जोषयेत्सर्वकर्माणि विद्वान्युक्तस्समाचरन् ॥ २६ ॥**

पूर्वोक्तमेवाशयं विवृणोत्यत्र । कर्मसङ्गिनां कर्मसु सङ्गवतामपरिपक्वचित्तानामत एव अज्ञानां कर्मिणां बुद्धिभेदं बुद्धेः 'ममेदमवश्यकर्तव्यम्' इत्येतादृश्याः बुद्धेर्भेदं नाशं न जनयेत्कुर्यात् । भवता कर्माकरणे तेऽपि कर्म अकुर्वन्तः पतिता भवेयुः । अतो विद्वान् सर्वकर्माणि अवश्यकर्तव्यानि सर्वाण्यपि कर्माणि युक्तः हृदये विराजमानेन प्राणलिङ्गरूपेणेश्वरेण संयुक्तः स्वयमपि ईश्वरप्रेरणानुरोधेन कर्म कुर्वन्नेव जोषयेत् तूष्णीं तिष्ठेत् । बहिः स्वस्य ज्ञानितां, स्वेन कर्माकर्तव्यतां वा लेशतोऽप्यसूचयन्, अज्ञानिनो यथा कर्म कुर्वन्ति तद्वदेव तेषु कर्मणि विश्वासोत्पादनार्थं ज्ञान्यपि सर्वं कर्म फलसङ्गकर्तृत्वादिरहितस्सन् कुर्यादेव ॥ २६ ॥

**प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।**

**अहङ्कारविमूढात्मा कर्ताहमिति मन्यते ॥ २७ ॥**

अज्ञानां कर्मसु सङ्गस्य हेतुमाह—प्रकृतेः प्रकृतिः प्रधानमव्यक्तं सर्वजगन्मूलकारणं त्रिगुणात्मकं द्रव्यम् । अस्य गुणैस्सत्त्वरजस्तमोभिः सर्वशः सर्वप्रकारेणापि क्रियमाणानि कर्माणि । सत्त्वं समीचीनकार्यहेतुः । रजो रागादिहेतुः । तमोऽज्ञानहेतुः । अत एतत्त्रिविधमपि कार्यं प्रकृत्यधीनमेव । एतादृशकर्माणि सर्वाण्यप्यहमेव करोमीत्यहङ्कारेण मोहितचित्तो जीवः 'अहं कर्ता' इत्यात्मानं मन्यते । वस्तुतस्तु प्रकृतेरेव कर्तृत्वमित्यर्थः । अथ च अहङ्कारममकारादिमोह एव सर्वकर्मसु सङ्गहेतुरित्यर्थः ॥ २७ ॥

**तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः ।**
**गुणा गुणेषु वर्तन्ते इति मत्वा न सज्जते ॥ २८ ॥**

हे महाबाहो, गुणकर्मविभागयोस्तत्त्ववित्तु गुणविभागस्य तन्मूलककर्मविभागस्य च याथार्थ्यज्ञानी सद्भक्तस्तु "गुणाः कारणभूतास्सत्त्वादयो स्वस्वविषयभूतेषु गुणेषु व्यापृतास्सहजतया वर्तन्ते, न मम तत्र सङ्गलेशोऽपि" इति मत्वा जानन् न सज्जते व्यवहारेषु सर्वेष्वपि न सक्तिं करोति । परन्तु सः सर्वमपि कर्म कर्तव्यनिष्ठया कायकभावनया च निर्वहति । अतस्स कर्माचरणकाले ततः पूर्वमनन्तरमपि सुखेन शान्त्या च वर्तते । तादृशं कर्मयोगिनं प्रशंसन्ते शरणाः । यदि कर्म कायकरूपेणाचर्येत तदैव तत्कर्तुर्दुःखं नोत्पद्येतेति ते सम्यक् प्रतिपादयन्ति । "कृषिस्तदा कायकतामुपैति यदा तु सद्भक्तसमाश्रिता स्यात् । यदा गुरूणां चरजङ्गमानां सेवार्थमेवोपनिबध्यते चेत् ॥ देहं मनश्चैव निपीड्य धर्मादाहृत्य किञ्चित्तत एव सेवाम् । समाचरेद्यः परमस्स भक्तस्तदीयपादोऽस्तु मदीयमस्तके ॥" इत्येवं शिवात्मकस्य जगतो हिताय देहसहकारेण यद्यदाचर्यते तत्सर्वमपि कर्तारं न बध्नाति । एतादृश्या सद्भावनया युवयुवतिभिः स्वीयं कर्माचरणीयमिति भावः ॥ २८ ॥

**प्रकृतेर्गुणसम्मूढाः सज्जन्ते गुणकर्मसु ।**

**तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत् ॥ २९ ॥**

प्रकृतेरुक्तस्य त्रिगुणद्रव्यस्य गुणसम्मूढाः गुणैस्सत्त्वरजस्तमोभिस्संमूढाः संमोहितचित्ता एव गुणकर्मसु सत्त्वादिगुणनिर्वर्त्यमानेषु कर्मसु सज्जन्ते सक्त भवन्ति। अकृत्स्नविदोऽतत्त्वविदस्तान् पामरान् कृत्स्नवित्तत्त्वविन्न विचालयेत् बुद्धिभेदं न जनयेत्। अपरिपक्वमनसां हि कर्माण्यवर्जनीयान्येव। ज्ञानी परिपक्वबुद्धिर्यदि कर्म न कुर्यात्तदा तेऽपि तं दृष्ट्वा कर्म न कुर्युः। अतो ज्ञान्यपि लोकसंग्रहार्थं कर्म कुर्यादेव। तादृशो ज्ञानिनो महत्त्वं स्तुवन्ति ते शरणा आदर्शरीत्या। "तदीयवाक्यं परमं पवित्रं तथा च तद्वर्तनमेव शुद्धम्। तस्मै च यस्तत्त्वमुपादिदेश स एव दिव्यो गुरुरित्यवैमि॥ एतादृशं भक्तगृहं च केवलं कैलास एवेति विचिन्त्य जङ्गमः। लिङ्गार्चनं तत्र समाचरेच्चेत् स वन्दनीयो जगदेकपावनः॥ विश्वस्य चैतादृशजङ्गमं हि तस्मै प्रणामं विदधामि देव।" इति। एवं प्रशंसार्हं सद्भक्तजीवनं युवयुवतिभिर्यदि निरुह्येत तदा ते नित्यतृप्ता नित्यसुखिनो नित्यसुन्दराश्च भवेयुः॥ २९॥

**मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा।**
**निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥ ३० ॥**

तर्हि अज्ञानां कर्मिणां का गतिः? कथं ते पाशान्मुच्येरन्नित्यत्राह— मयि सर्वेश्वरे सर्वकारणभूते परमेश्वरे। शिवतादात्म्यभावनया कृष्णः एवं वदति। अवश्यकर्तव्यत्वेन प्राप्तानि युद्धादीनि सर्वाणि कर्माणि अध्यात्मचेतसा विवेकयुतेन मनसा संन्यस्य समर्प्य "राजप्रीत्यै भृत्यवत्, ईश्वरप्रीत्यै केवलमिदमहं करोमि न त्वेतत्फलोद्देशेन" इत्येवंरीत्या फलसंबन्धं विहाय। एवं निराशीः फलप्रार्थनारहितस्सन्, अत एव निर्ममो ममेदं भवत्विति ममकाररहितश्च भूत्वा विगतज्वरो गतसन्तापस्सन् युध्यस्व युद्धं कुरु। एवं फलापेक्षामन्तरा कर्मणि कृते तेन न कश्चन अनर्थ उत्पद्येत। तस्यैव जीवनं सर्वेषामप्यादरणीयं भवेत्। सः निर्दिष्टफलादधिकं लाभं न

कदाप्यपेक्षते नान्यं याचते च। तदीयं पावनं जीवनमेवमुपवर्ण्यते बसवार्येण "श्व एव यद्यच्च समागमिष्यति तदेव चाद्यैव समाप्नुतान्मम। यदद्य भाव्यं तदुपैतु सद्यः बिभेति कोऽस्मादथवाश्रु मुञ्चेत्॥ जातस्य तावन्मरणं ध्रुवं स्यात्कर्मानुसारं गुरुणैव केवलम्। यदेव लिख्येत ललाटदेशे तच्चापि धात्रा नहि मार्ष्टुमर्हम्॥" इति। एवं निर्दाक्षिण्यप्रकृतिर्नरः कस्मै न स्वदेत? तस्य तावत्सर्वदा परमेश्वरचिन्तनं विहाय नान्या विषयचिन्ता वर्तेत। "यत्र यत्र च दृशं प्रहिणोति तत्र तत्र परिपश्यति स त्वाम्। यच्च यच्च नयनाभिमुखं सत् सर्वमेव भवतः खलु रूपम्।" इत्येवं ज्ञानिनस्सर्वत्र परमात्मानमेव पश्यन्ति। "चकोर इन्दोरुदयं निरीक्षते भानोः प्रकाशं च निरीक्षतेऽम्बुजम्। द्विरेफ इच्छेत्कुसुमस्य गन्धं ममास्ति चिन्ता गुरुसङ्गमेश्वरे।" इत्येवं बसवार्यः स्वदृष्टान्तेन सर्वेषामपि व्यवहारिणामीश्वरदृष्टिमेव आवश्यकतया निर्दिशति। एवं च कर्तव्यदृष्ट्या कर्मनिर्वाहोऽभ्यासेन साधनीयो वर्धिष्णुभिरिति अर्जुनव्याजेन सर्वानपि साधकान् प्रबोधयति कृष्णः ॥ ६० ॥

**ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः।**
**श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ॥ ३१ ॥**

उक्तार्थस्य प्राशस्त्यं विपरीतस्य च निन्दां कुर्वन्नाह—ये मानवाः मे मदीयमिदं उक्तं मतं निर्णयमनुतिष्ठन्ति अनुवर्तन्ते, अनुष्ठाने अशक्तौ सत्यां श्रद्धावन्तो वा तिष्ठन्ति। तत्राप्यशक्तौ अनसूयन्तः अन्ततो मयि असूयां वा अकुर्वन्तस्तिष्ठन्ति तेऽपि क्रमशः कर्मभिः पुण्यपापैर्मुच्यन्ते मुक्ता भवेयुः। एवं मुक्तयेऽनेकान् मार्गान् बोधयति भगवान् कृष्णः ॥ ६१ ॥

**ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम्।**
**सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः ॥ ३२ ॥**

ये तु मानवाः एतन्मे मतमभ्यसूयन्तोऽसूयाविष्टा नानुतिष्ठन्ति तान्सर्वज्ञानविमूढान् सर्वविधविवेकरहितान्, अत एवाचेतसोऽविवेकिनः, अत

एव नष्टान् स्वयमेव नाशङ्कतान् विद्धि जानीहि । एवं कर्माकुर्वन्तो विवेकशून्या अन्ते नाशमेव प्राप्नुयुः । अतस्त्वं तथा मा भूरित्यर्जुनाय यथार्थं तत्त्वं उपदिशति भगवान् ॥ ३२ ॥

एवं तर्हि लोके सर्वेऽपि कुतस्तव मतं नानुतिष्ठन्ति ? प्रत्युत अल्पपुरुषार्थप्रवणा आत्मनाशमेव कुतः संपादयन्ति ? इत्यत्राह—

**सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।**
**प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥ ३३ ॥**

ज्ञानवानपि विवेकी सन्नपि स्वस्याः प्रकृतेस्स्वस्वभावस्य सदृशमेव चेष्टते प्रवर्तते स्वभावो दुरतिक्रम इति न्यायात् । यतो भूतानि प्राणिनः प्रकृतिं स्वस्वभावं यान्ति अनुवर्तन्ते । निग्रहः विवेकादिना मतो निरोधः किं करिष्यति ? किमेव कुर्यादित्यर्थः । विवेकिनामेवेत्थं गतिरिति चेदन्येषां विषये किं वक्तव्यमित्यर्थः ॥ ३३ ॥

**इन्द्रियाणीन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।**
**तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ॥ ६४ ॥**

मनोनिग्रहेऽसाध्ये सति किं कर्तव्यम् ? आत्मकल्याणं साधयितुं कथं प्रयतेत मानव इत्यत्राह । इन्द्रियस्येन्द्रियस्य चक्षुरादितत्तदिन्द्रियस्य अर्थे शब्दस्पर्शादिषु विषयेषु रागद्वेषौ पुरस्कारतिरस्कारौ व्यवस्थितौ अवश्यंभाविनौ । अतस्तयोरिन्द्रियार्थापेक्षामूलकरागद्वेषयोर्वशं नागच्छेत्तदधीनो न भूयान्मानवः । यतस्तौ हि रागद्वेषौ अस्य चेतनस्य परिपन्थिनौ प्रधानशत्रुस्थानीयौ स्तः । अतः रागं द्वेषं च प्रथमं त्यक्त्वा समाहितेन मनसा कर्तव्यनिरतो भवेत्यर्जुनव्याजेन सर्वान्प्रेरयति भगवान् ॥ ३४ ॥

**श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।**
**स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ ३५ ॥**

रागद्वेषवतां शास्त्रार्थोऽपि विपरीतो भासेतेत्याह । स्वानुष्ठिताद्रागद्वे-

षादिमूलकाविवेकेन सम्यगनुष्ठितादपि परधर्मात् परकीयधर्मात् विगुणो गुणहीनोऽपि स्वधर्म एव श्रेयानुत्तमः । यतस्स्वधर्मे स्थितस्य निधनं मरणमपि श्रेयस्करमेव । परधर्ममनुवर्तमानस्य जीवितादपि स्वधर्ममाचरतो मरणमपि श्रेयोवहमेव । यतः परधर्मः परकीयधर्मस्तु भयावहो नरकादिलक्षणभयहेतुरेव । अतो रागद्वेषमोहादिभिः स्वधर्मत्यागः परधर्माचरणं च न कदापि कर्तव्यम् । मानवो न केवलं नश्वरो देह एव किन्त्वविनाशी आत्मेति प्रागेवात्मतत्त्व-मुपवर्णितम् । अत आत्मभूतो मानवः आत्मधर्ममवश्यमनुतिष्ठेदेव । स एव तस्य स्वधर्म उच्यते । तं व्यवस्थितं धर्म्यं क्रमं परित्यज्य स सर्वदा देहधर्ममेव यद्यनुवर्तेत तदा तस्य महती हानिरनिवार्यतया संभवेदेव । देहधर्मस्तस्य परधर्म इति भाव्यः । तथापि देहस्य सहकारेणैवात्मगुणविकासस्तेन साधनीयः । अयमेव तस्य स्वधर्म इत्यनुभविनो वदन्ति । शक्तिविकासो यदि मानवैर्नाधिगम्येत तदा महती विपत्परंपरा संभवेदेव ॥ ३५ ॥

**अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ।**
**अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥ ३६ ॥**

एवं तर्हि सर्वोऽपि जनो लोके कुतः पापं करोतीत्यर्जुनः पृच्छति । अथैवं चेत् हे वार्ष्णेय वृष्णिकुलप्रसूत कृष्ण, केन प्रयुक्तः प्रेरितोऽयं पूरुषः स्वयमनिच्छन्नपि 'अयमधर्मो मया न कार्यः' इति जानन्नेव बलात् बलात्कारेण नियोजितस्सन् पापं चरति करोतीति मानवानां पापाचरणस्य कारणं पृच्छत्यर्जुनः ॥ ३६ ॥

**काम एषः क्रोध एषः रजोगुणसमुद्भवः ।**
**महाशनो महापाप्मा विद्धय नमिह वैरिणम् ॥ ३७ ॥**

अर्जुनप्रश्नस्योत्तरमुवाच भगवान् । रजोगुणसमुद्भवो रजोगुणाज्जात एषः कामो विषयाभिलाषः पापं कर्तुं मानवान् प्रेरयति । अयमेव पापाचरणे हेतुः । एवं तन्मूलकः क्रोधश्च पापाचरणे मानवं प्रेरयति । स कामो

महाशनः । महदशनमाहारो भोग्यविषयो यस्य तादृशः । लोके हि भोग्यविषयाणामानन्त्यात् सदानुभवेऽपि तृप्तिर्न भवति । "न जातु कामः कामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥" इति हि प्रसिद्धो न्यायः । अतः कामो महाशनः । अत एव महापाप्मा महापापानामपि प्रेरकः स इति प्रसिद्धः । कामाक्रान्तहृदयो हि सर्वमपि पापं कर्तुं सन्नद्धो भवति । तस्मादेनं काममिह संसारे वैरिणं शत्रुं सर्वनाशकं विद्धि जानीहि । कामक्रोधयोर्दुर्गतिं सम्यगुपपादयन्ति शरणाः । "क्रोधाविष्टः स्नापयत्यंविकेशं तच्च स्नानं रक्तधारासरूपम् । पापात्मा चेत्पुष्पभारोपहारं कुर्यादेतत्खड्गधारात्रणं स्यात् ॥" "तनोश्च कोपः प्रविहन्ति मानं मनःप्रकोपः प्रविहन्ति शेमुषीम् । दहेद्गृहस्थो गृहमेव दावो नान्यद्गृहं सन्दहतीव देव ॥" इति कामक्रोधयोर्दुष्प्रभावं हृदयंगमया रीत्या निवेदयन्ति ते ॥३७

**धूमेनाव्रियते वह्निर्यथादर्शो मलेन च ।**
**यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतम् ॥ ३८ ॥**

धूमेन वह्निरग्निर्यथा आव्रियते व्याप्यते, आदर्शो दर्पणो मलेनाशुद्ध्या यथा आव्रियते । गर्भः उल्बेन गर्भवेष्टनजरायुणा यथा आवृत आच्छादितः तथैव तेन कामेन इदं विश्वमावृतं व्याप्तमेव ॥ ३८ ॥

**आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।**
**कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥ ३९ ॥**

ज्ञानिनो विवेकिनो नित्यवैरिणा सदा शत्रुभूतेन दुष्पूरेणानलेन च पूरयितुमशक्येनाग्निनेव तादृशाग्निसदृशेन । न ह्यग्निः काष्ठेन कदापि शाम्यति । न जातु कामः काम्यवस्तूनामुपभोगेन प्रसीदति किन्तु विशेषत अभिवर्धत एव । तादृशेनैव तेन कामाग्निना मानवस्य ज्ञानं यथार्थज्ञानमावृतम् । मनसि रागे उत्पन्ने बुद्धिरपि तदनुगुणैव स्यात् । तदा मानवो धर्माधर्मादिकं न विचारयत्येव । अतः कामवशो यथा न भवेन्मानवस्तथा सत्सङ्ग एव

यथावसरं स्थातुं प्रयतेत । तस्माद्यस्य कामक्रोधमूलं मनः सत्ससंगे यदि वर्तेत तदा सः सुव्यवस्थितस्स्यादित्यभिप्रायेण शरणा भवबीजनाशकं भैषज्यमेकं साधितवन्तः । तच्चैवं वर्णयन्ति ते महानुभावाः । "शाखास्वटन्मर्कटतुल्यमेतन्मनो मदीयं चलतीति सत्यम् । संसक्तमेतद्विषयोपभोगे न केवलं तिष्ठति सत्समूहे ॥ तथा प्रवेशं न ददाति मह्यं समाधियोगाय हृदन्तराळे । संप्रार्थये त्वां गुरुसङ्गमेश दयस्व भृत्यं भवदंशभूतम् ॥ मनो मदीयं भवतः पदांबुजे द्विरेफरूपेण निधेहि सर्वदा । चिद्रूपलिङ्गस्य चरात्मनस्ते संसर्गतो मे भवरोगनाशः ॥" इति सतां संबधं विना न केनापि मार्गेण कामक्रोधबीजं मन इदं निरुद्ध्यत इत्यनुभविनश्शरणा वदन्ति । अतस्सत्सङ्गे स्थित्वा मानवो यदि स्वकर्तव्यनिरतो भवेत्तदा मनसि दुष्प्रवृत्तिरेव न संभवेत् । "सुज्ञानिनस्सङ्गवशाद्धि जन्तुरज्ञाननाशेन शिवे प्रलीयते । तथैव शंभो गुरुमल्लिकार्जुन तवैव योगात्सुखमेति लोकः ॥" इति भगवान् सिद्धरामशिवयोगी सत्सङ्गमेव मनोरोगस्यौषधरूपेण प्रयुङ्क्ते । एवं जानन्मानवः काममूलस्य मनसो निग्रहाय यथाशक्ति प्रयतेत ॥ ३९ ॥

**इन्द्रियाणि मनोबुद्धिरस्याधिष्ठानमुच्यते ।**
**एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥ ४० ॥**

कामः कथं ज्ञानमावृणोतीत्यत्र तत्क्रममाह । अस्य कामस्याधिष्ठानमाश्रय इन्द्रियाणि पञ्चज्ञानेन्द्रियाणि पञ्चकर्मेन्द्रियाणि च, मनश्चेतः, बुद्धिर्मनीषा एतानि कामस्याश्रयः । शब्दादिषु विषयेषु चापल्यात् ख्यातिलाभपूजादिव्यामोहात् बुद्धिदोषाच्चायं कामः प्रवर्तते । एषः काम एतैरुक्तैरिन्द्रियादिद्वारैर्ज्ञानं विवेकमावृत्य देहिनं चेतनं विमोहयति मोहपरवशं करोति ॥ ४० ॥

**तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ।**
**पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम् ॥ ४१ ॥**

अत एव हे भरतर्षभ अर्जुन, त्वं तस्मात् यस्मादिन्द्रियादीनि पुरुष-

स्यात्मप्रभां नाशयन्ति तस्मात्कारणादादौ प्रथमं इन्द्रियाणि नियम्य वशिकृत्य व्यवस्थया सत्कार्येभ्य उपयुज्य ज्ञानविज्ञाननाशनं शास्त्रजन्यं ज्ञानं, विज्ञानं विशेषतस्तदनुभवरूपं ज्ञानं तयोरुभयोरपि विनाशकं एनं पाप्मानं पापहेतुं कामं जहि परित्यज। एवं सर्वानर्थमूलं कामं विषयसंग्रहणादाकृष्य सत्सङ्गे विनियोक्तुं यथामति प्रयतितव्यं मानवैः। हृदिस्थेश्वरचिन्तया यः यथाशक्ति प्रयतेत स एव मनोनिग्रहाय प्रभवति। यः स्वाहङ्कारेण ईश्वरं विस्मृत्य स्वयमेव प्रयतेत सः न कदापि मनो निगृह्णीत ॥ ४१ ॥

**इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः।**
**मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ॥ ४२ ॥**

देहे परमात्मावस्थितिमुपादेशति। इन्द्रियाणि श्रोत्रादीनि पराणि प्रकृष्टानि स्थूलदेहापेक्षया सूक्ष्मत्वात्प्रबलान्याहुः पण्डिताः। इन्द्रियेभ्यस्तु मनः परं ततोऽपि सूक्ष्मत्वात्। एवं सूक्ष्मत्वेन प्रसिद्धायाः बुद्धेरप्यपेक्षया परतः योऽस्ति स एव परशिवब्रह्मेत्यर्थः ॥ ४२ ॥

**एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना।**
**जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥ ४३ ॥**

हे महाबाहो, एवं बुद्धेरपि परमुत्कृष्टं वस्तु बुद्ध्वा ज्ञात्वा आत्मना सुसंस्कृतेन मनसा आत्मानमसंस्कृतं चित्तं संस्तभ्य सम्यक् निरुध्य दुरासदं दुर्विज्ञेयं कामरूपं शत्रुं जहि नाशय। अनेन कर्मयोगेन कायकरूपस्य कर्मणः प्राशस्त्यं यथा सर्वेषां हृदये स्थिरीक्रियेत तथा स्मृत्युत्साहोत्पादनायात्र सम्यगाविष्कृतो भगवता स्वीयावतारस्य सदाशयोऽव्याजप्रेम्णा ॥ ४३ ॥

## चतुर्थाध्यायः

एवमध्यायद्वयेनोक्तमसङ्गेन कर्मानुष्ठानरूपं योगं वंशानुक्रमनिरूपणेन भगवान् स्वयमेव स्तौति ॥

**इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।**
**विवस्वान् मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥ १ ॥**

इममव्ययमव्ययफलत्वात् शाश्वतं योगमहं पूर्वं विवस्वते आदित्याय सृष्टयादौ प्रोक्तवानुपदिष्टवान् । स च विवस्वान् मनवे स्ववंश्याय प्राह । सोऽपि स्ववंशोद्भवायेक्ष्वाकवे अब्रवीदुपदिदेश ॥ १ ॥

**एवं परंपराप्राप्तमिमं राजर्षयो विदुः ।**
**स कालेनेह महता योगो नष्टः परन्तप ॥ २ ॥**

हे परन्तप । एवं क्रमेण परंपराप्राप्तमुपदेशपरंपरागतमिमं योगं राजर्षयो राजानश्च ते ऋषयश्च । राजानोऽपि सन्तः ये ऋषयोऽप्यभवंस्ते विदुर्ज्ञातवन्तः । स योगो महता दीर्घेण कालेन इहास्मिन् लोके नष्टो विच्छिन्नसंप्रदायो बभूव । क्रमशो मानवस्याविवेकावस्थया प्रकृतेर्दुष्प्रेरणेन च कर्मयोगोऽयं नष्टोऽभूदित्यर्थः ॥ २ ॥

**स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः ।**
**भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥ ३ ॥**

स एवायं पुरातनः प्राचीनो योगो मया ते तुभ्यं अद्येदानीं "मे भक्तोऽसि मे सखा चासि" इति हेतोः प्रोक्त उपदिष्टः । कस्तादृशोऽतिशयः ? इत्यत्राह रहस्यमिति । हि यस्मादेतावदुत्तमं श्रेष्ठं रहस्यं एतादृशो योगस्तुभ्यमुपदिष्टः । अतस्सर्वेभ्योऽयं नोपदेष्टुमर्हः ; भक्ताय मित्राय तुभ्यमेवोपदिष्टो वात्सल्येन । त्वया श्रद्धया अयं योगो ज्ञेयोऽनुष्ठेयश्चे त्यर्थः ॥ ३ ॥

एवं भगवतोक्ते तत्र वचनविरोधमाशङ्क्यार्जुनः पृच्छति—

**अपरं भवतो जन्म परं जन्म विवस्वतः ।**
**कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति ॥ ४ ॥**

भवतः कृष्णरूपस्य ते जन्मोत्पत्तिरपरमर्वाचीनम् । त्वं हि समीप एव काले वसुदेवगृहे जातः । विवस्वतस्सूर्यस्य तु जन्मोत्पत्तिः परमतिप्राचीनम् ।

जगत्सृष्ट्यादावेव किल सूर्यस्योत्पत्तिः । अत इदानीमुत्पन्नस्त्वं आदौ सर्गारंभे सूर्यायेदं प्रोक्तवानित्येतत् कथमहं विजानीयाम् ? कथमिदं घटताम् ? तयोः परस्परं संघटनैव न विद्यते ॥ ४ ॥

एवं श्रीकृष्णं सामान्यमनुष्यं मत्वा पृष्टवन्तमर्जुनं प्रति कृष्णस्स्वस्य वास्तविकं रूपमुपदेष्टुमारभते—

**बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।**
**तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप ॥ ५ ॥**

अर्जुनप्रश्नमुत्तरयितुं पीठिकामारचयन्भगवानुवाच । हे अर्जुन, बहूनि जन्मानि मे व्यतीतानि गतानि । तव च बहूनि जन्मानि व्यतीतानि गतानि । हे परन्तप, अथापि तानि सर्वाण्यपि जन्मानि अहं वेद जाने । त्वं तु न वेत्थ न जानीषे । एवं चेदानीं वसुदेवपुत्रो योऽहं जातस्स एव पूर्वं जगत्सर्गारंभेऽपि स्थित्वा आदित्यायेमं योगमुपदिष्टवान् । यतोऽहं मदीयं सर्वं जन्म जानामि अत एवाहमेवेमं योगमादित्याय तदोपदिष्टवान्; तुभ्यमधुनोपदिष्टवान् । अत्र न कोऽपि मिथोविरोध इत्याशयः । उपदेष्टा पुरुष एक एवः । श्रोतारस्तु बहवोः जीवाः । एकस्य बहूनां च स्वरूपं किम् ? सवन्धश्च कः ? इत्ययमेवांश अधुना ज्ञातव्यः । एतस्यैव विज्ञानेन भवतः सन्देहो निवार्यते । अयमेव महाविषयस्तत्त्वशास्त्रे जिज्ञासार्हो वर्तते । एतत्परिचयेन भवान् योगनिष्ठो भविष्यति ॥ ५ ॥

एवं स्वस्य स्वर्वज्ञत्वे उक्ते "भगवानेव सर्वज्ञः, अकर्मपरवशश्च ; स तु किमर्थं बहूनि जन्मानि स्वीकरोति" इत्याशङ्कायां स्तस्याकर्मवश्यत्वेऽपि स्वेच्छयैव जन्मानि स्वयं स्वीक्रियन्त इत्याह—

**अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।**
**प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया ॥ ६ ॥**

अजोऽपि सन् स्वयमुत्पत्तिरहितोऽपि, तथा अव्ययात्मापि व्ययः

ज्ञानशक्त्यादीनां क्षयः तद्रहितोऽक्षीणज्ञानक्रियेच्छाशक्तिकस्सन् भूतानां ब्रह्मादिस्तंबपर्यन्तानां सकलप्राणिजातानामीश्वरोऽपि सन् नियामकस्सन्नपि स्वां प्रकृतिमधिष्ठाय स्वीयां स्वाधीनां त्रिगुणात्मिकां प्रकृतिं स्ववशां कृत्वा, न त्वितरजनवत् प्रकृत्याः परवशो भूत्वा मदीय्या विचित्रया मायाशक्त्या संभवामि उत्पत्स्ये । अत्र मायया इति कथनमात्रेण भगवदवताराणां मिथ्यात्वं केचित् भ्रमन्ति । तत्समनन्तरमेव "जन्म कर्म च मे दिव्यम्" इति स्वजन्मनः स्पष्टतया दिव्यत्वकथनात् विचित्रशक्तिरेव मायाशब्दस्यार्थः न तु मिथ्यात्वम् ; मायाशब्दस्य मिथ्यार्थकत्वं न संभवतीति श्रीकरभाष्ये उक्तम् । "मं शिवं परमं ब्रह्म अयतीति स्वभावतः । मायेति प्रोच्यते लोके ब्रह्मनिष्ठा सनातनी ॥" इति मायाशब्दनिर्वचनमपि शिवागमेषु प्रसिद्धं विराजते । अयमर्थः श्वेताश्वतरोपनिषद्वीरशैवभाष्ये सम्यग्विशदीकृतः । एवं च परमात्मा अजोऽपि सन् जायत इत्येतत्सर्वं विचित्रशक्तियोगादेव युज्यत इति स एवात्र मायाशब्दार्थो वेद्यः । "सर्वोपेता च तद्दर्शनात्" इति ब्रह्मसूत्रे, "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी" इति श्वेताश्वतरश्रुतौ च परमात्मनः शक्तिवैशिष्ट्यं स्वाभाविकमित्युपवर्ण्यते ॥ ६ ॥

**यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।**
**अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥ ७ ॥**

मज्जन्मनः कालः क इत्यत्राह—हे भारत, धर्मस्य "स्वधर्मनिरतो भव" इत्यादिषु उच्यमानस्य लोकव्यवस्थाहेतोर्वर्णाश्रमादिधर्मस्य ग्लानिः क्षीणतावस्था यदा यदा भवति सञ्जायते । न तु तत्र कालनियमो वर्तते इत्यर्थः । एवं धर्मस्य हानौ अधर्मस्य तद्विपरीतस्य च अभ्युत्थानं अभित उत्थानमुद्भवो यदा भवति, तदा अहमात्मानं आत्ममायया स्वीयमायाशक्तियोगात् सृजामि लोके अवतरामीत्यर्थः ॥ ७ ॥

**परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।**
**धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ ८ ॥**

किमर्थं परमात्मनोऽवतारः ? तस्योपदेशश्च कः ? इत्यस्योत्तरमाह । साधूनां धर्मपरायणानां निरपराधिनां भगवद्भक्तानामधर्मपीडितानां परित्राणाय रक्षणाथ तथा तदङ्गतया साधुहिंसकानां दुष्कृतानामधर्मनिष्ठानां विनाशाय च ध्वंसनाय च तन्मूलतया धर्मसंस्थापनार्थाय धर्मस्य जगदाधारभूतस्य मया सृष्टस्य वर्णाश्रमधर्मस्य संस्थापनाय पुनस्सम्यगसङ्कीर्णतया स्थिरीकरणाय । जातिसांकर्यस्य हि नरकहेतुत्वं "सङ्करो नरकायैव" इत्यादिषूक्तम् । अतस्तादृशसाङ्कर्यादिकं परिहृत्य यथावस्थिततया धर्मसंस्थापनाय युगे युगे प्रतियुगं यदा यदा धर्मग्लानिर्भवति तदा सर्वदा संभवाम्यवतरामि ॥ ८ ॥

**जन्म कर्म च मे द्विव्यमेवं यो वेत्ति तत्त्वतः ।**
**त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥ ९ ॥**

मदीयं जन्म मिथ्येति वा सामान्यजनसदृशमिति वा अजानानो यः कश्चिदेतादृशस्य स्वजन्मनो रहस्यं यदि जानाति तस्यापि परमपुरुषार्थप्राप्तिरत्र निर्दिश्यते । हे अर्जुन, मे जन्म कर्म वा सर्वमेवमुक्तरीत्या दिव्यं लोकानुग्रहाय स्वयं स्वीकृतं नित्यसुन्दरं रूपमिति तत्त्वतो वस्तुस्थित्यैव यो वेत्ति जानाति स एतद्देहं प्राकृतं रूपं त्यक्त्वा दिव्यदेहधारी सन् पुनरिदं भौतिकं जन्म नैति न प्राप्नोति । 'ध्रुवं जन्म मृतस्य च' इत्ययं न्यायस्तस्मिन् नान्वेति । यस्तु हृदयस्थं महादेवं जानाति तेन सह युनक्ति च तस्य देहे सर्वत्र महादेव एव दृश्यते । अङ्गेन्द्रियाणि च लिङ्गेन्द्रियरूपतया परिणतानि भवन्ति । तथाच प्रकृतिमयो देहः महादेवसंपर्कात् दिव्यदेहो भवति । सामान्यजीवीव सः बाह्यदृष्ट्या प्राकृतदेहे स्थितोऽपि परित्यक्तव्यामोहो निरामयो दिव्यजीवी संपद्यते । इदमेव दिव्यजीवनं देहत्याग इति भाव्यते । एतादृग्दिव्यजीवी अत्रैव नित्यसुखमनुभवन् भवपाशान्मुक्तः पुनर्जन्म न लभते । तर्हि देहावसाने सः कुत्र गच्छतीत्यत्राह मामेतीति । सः मां परमात्मानं जन्ममरणरहितममूर्तशिवं प्राप्नोति । एवं यो न जानाति स तु पुनः पुनः जन्ममृत्युपरवशो

भवत्येव । संसारचक्रभ्रमणान्मोचनं तु देहस्थेश्वरपरिचयादेव ; तत्रापि तत्सेवाकरणात्, सर्वत्र तद्विज्ञानादेव चेति स्पष्टं प्रतिभाति । एतादृशं दिव्यज्ञानिनं शरणाः अजातमित्येव भावयन्ति "सामान्यजीवीव हि देहदृष्ट्या जातोऽपि भक्तस्स अजात एव । अयं ह्यजातो न हि याचतेऽन्यं न कांक्षते तन्मनसा यथेष्टम्" इत्येवं साधको जीवः योगमहिन्मा अजातस्सन् सर्वत्र शिवमेव पश्यन् शिवसायुज्यमत्रैव दिव्यदेहे अनुभवन् देहवियोगादनन्तरमपि तमेव दिव्यदेहं शाश्वतिकतया प्राप्य तत्रामूर्तस्थितौ निरन्तरतयानवछिन्नतया वसेदिति भगवानर्जुनद्वारा सर्वानुपदिशति ॥ ९ ॥

**वीतरागभयक्रोधा मन्मया मामुपाश्रिताः ।**
**बहवो ज्ञानतपसा पूता मद्भावमागताः ॥ १० ॥**

मदाश्रयेण मानवीप्रकृतिं दैवीप्रकृतिकतया परिणतां कृत्वा जीवितसमय एव शान्ता भूत्वा अनेके मद्भावमागता इत्ययमर्थोऽनुभवसिद्ध इत्याह— वीतरागभयक्रोधः वीता गता रागो भयं क्रोधश्च येषां ते तादृशा जीवा मन्मया मच्चिन्तनया मद्भावमागताः, अत एव मामुपाश्रिताः सेवमाना बहवस्साधका भक्ता ज्ञानतपसा ज्ञानं तत्त्वज्ञानमेव तपः शरीरेन्द्रियव्यवस्थापकं साधनं तेन पूताः परिशुद्धाः मलकर्मक्षयं प्राप्ता इत्यर्थः । मद्भावमीश्वरभावं परशिवलिङ्गभावं नाम लिङ्गस्वरूपं समदर्शनप्रकृतिं आगताः प्राप्ताः । अतो जीवभावस्य ब्रह्मांशस्य अंशिनि अखण्डलिङ्गरूपे परशिवब्रह्मणि समरसतया विलयनं नहि नूतनतया उच्यते । बहोः कालादारभ्य अनेके महर्षयः शिवयोगिवर्याः श्रीरेणुकाद्याचार्याः अल्लमादिशरणाश्च स्वान्तर्लीने महालिङ्गे तन्मयास्सन्तोऽनन्यवात्सल्येन इधरान्साथकानपि तथा भवितुं प्रेरितवन्तो दृश्यन्ते । श्रीबसवार्यः स्वोद्धारक्रममेवं निर्दिशति । "भक्त्याख्यभूमेरुपरि प्ररूढे गुरौ तु लिङ्गे छदतामुपेयुषि । तस्योपरिष्टाद्धिषणाख्यपुष्पे क्रिया शलाटुत्वमवाप पश्चात् ॥ स एव तस्मादनु सत्फलत्वं निष्पत्तिरूपं समपद्यतात्र । तस्मिंश्च निष्पत्तिफले तु वृन्तात् श्लथं पतत्येव तदुन्निनाय ॥ वात्सल्यपूर्णो

गुरुसङ्गमार्यस्तदीयवात्सल्यफलोऽस्मि जातः।" इत्येवं बसवार्यः गुरुसङ्गमार्यस्य कृपया स्वान्तर्लिङ्गस्वरूपं ज्ञात्वा तत्र विलीनस्तदानन्दमनुभवन् प्रसादपूर्णं जीवनं निर्वहन् तन्मयीभावेन लोके जीवितुं साधकानपि प्रेरयति। न केवलं स एव अपि त्वितरे शरणाश्च जीवने कृतकृत्यतां गतास्सर्वानपि जन्मसाफल्यार्थं मनःपूर्वकमुत्तेजयन्ति। अतः प्राक्तनात् कालादप्यनेके महात्मानः स्वयं विज्ञातशिवतत्त्वा इतरेष्वपि शिवमेव पश्यन्तः स्वीयादर्शेनाधुनापि साधकान् अध्यात्मसुखाय अद्यापि उत्तेजयन्तो विराजन्ते ॥१०

ननु बहव इति कुत उच्यते? तर्हि स्वीयान्तर्गतमीश्वरं द्रष्टुमनुभवितुं च योग्यता सर्वेषां नास्ति वा? अस्ति चेत्कुतस्ते पक्षपातः? येन केचिदेव ब्रह्मत्वं प्राप्ता इति शङ्कायां 'न ममायं दोषः किन्तु तेषामेव' इत्याह—

**ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्।**
**मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः॥ ११॥**

ये मनुष्याः यथा येन प्रकारेण यादृशफलोद्देशेन मां प्रपद्यन्ते समाश्रयन्ति तांस्तथैव तदनुगुणतयैव भजाम्यहं तदभीष्टं निर्वर्तयामि। तथा च ये अल्पफलोद्देशेन मामाश्रयन्ति तेषां तदेव फलं ददामि। ये तु मोक्षार्थमेव मामश्रयन्ति तेभ्यस्तु मोक्षमेव ददामि। अतो न मे कुत्रापि पक्षपातः। एवं सर्वत्र समदृष्ट्या व्यवहरन्तं मां 'सम' इति श्रुतिर्वर्णयति। अतश्च हे पार्थ, मनुष्याः सर्वप्रकारेणापि मम वर्त्म मदादिष्टं ज्ञानकर्मसमाविष्टं कर्मयोगमार्गमेव अनुवर्तन्ते अनुसरन्ति। को वा त्वदादिष्टो मार्ग इत्यत्रोत्तरं 'चातुर्वर्ण्यं मया सृष्टम्' इत्यादिना अनुपदं वक्ष्यति। भक्ता वयमस्मत्प्रकृत्यनुरोधेन यद्यदभिलषामः तत्सर्वमपि ईश्वरानुग्रहादेव लभामहे। ऐहिकं वा आमुष्मिकं वा फलं यद्यदपेक्ष्यते तत्सर्वमपि परमेश्वरस्तदानीमेवानुगृह्णाति। शरणगीतायां भक्तावतंसस्य बसवार्यस्य दिव्यं वचनमेवं परिशोभते। "आरोह्यापि रथं य एष भपको भावं नवं ग्राहितः, स्वं भावं न जहाति वीक्ष्य विषयं प्राग्जन्मसंपादितम्। तद्वन्मे मनसोऽन्यतः प्रसरणं दन्दह्यतां हे

मृड, त्वां संस्मर्तुमपीह नो वितरति ह्यज्ञं मनो मेऽन्तरम् ॥ मत्स्वामिन् भवदीयपादयुगळं संस्मर्तुमाशाधि माम् । चेलान्तं हि वितत्य याचितुमुपक्रान्तोऽस्मि देव त्वयि ॥" इत्येवं बसवार्यः परमात्मपादयुगळस्मरणाय तस्यैवानुग्रहं भक्त्या याचते । एवमात्मपरीक्षायां निरतस्स महात्मा लौकिकफलासक्तान्सर्वानपि भगवन्तमेव समधिगन्तुं तत्परिणामेन सुखीभवितुं च सम्यगुपदिशति । तदीयं वचनं सर्वेषामवि हितावहं वर्तते । "भक्तो यदीप्सेत्स्त्रियमात्मना तदा शिवाज्ञया तां स्त्रियमुद्वहेन्ननु । तस्यैव चित्तं यदि मृत्तिकायां तदालयं संरचयेन्मनस्वी । तदीयचित्तं यदि स्वर्णमय्नं संपादयेत् क्लेशवशात्तदेव ॥" इत्येवं ईश्वरकृपयैव भूकामिनीकाञ्चनरूपं फलमपि मानवैर्लभ्य त इति स्वदृष्टांन्तेन बसवार्यो हृद्गतमशयमाविष्करोति । एतदपि भगवत्प्रसादलभ्यत्वान्न कदापि निन्द्यमेव । भोगो योगो वा सर्वोऽपि भगवत एव लभ्यः । अतस्सर्वेऽपि परमेश्वरमेव येन केनापि मार्गेणानुसरन्त्येव । ये तु तदीयं मार्गं निन्दन्ति ते नरकमेव गच्छेयुः । अतोऽर्जुनो भगवद्दर्शितमेव मार्गमनुसरन् सुखी भवेदित्याशयोऽत्र सूच्यते ॥ ११ ॥

**काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः ।**
**क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥ १२ ॥**

ननु सर्वेऽपि मोक्षार्थमेव त्वां कुतो न समाश्रयन्ते ? लौकिकफलप्राप्तावपि तस्य क्षणिकत्वात् संसारपाश एव नियतः स्यात् । कथमेते जनाः भवबन्धमेवाभिलषेयुरित्यत्राह—कर्मणामैहिकामुष्मिककर्मणां सिद्धिं फलसिद्धिं कांक्षन्तोऽपेक्षन्तो मनुष्या इहास्मिन्लोके देवता इन्द्रादिदेवान् यजन्ते पूजयन्ति । हि यस्मात् मानुषे लोके कर्मजा सिद्धिः कर्माधीनैहिकामुष्मिकफलप्राप्तिः क्षिप्रं शीघ्रं भवति । एवं च शीघ्रफलप्राप्तिमपेक्षमाणाः पुरुषाः स्त्रियश्च तदनुगुणदेवान् तत्तदुद्देशेनैव पूजयन्ति न तु मोक्षार्थं मामाश्रयन्ते । यस्य मलकर्मक्षयः सन्निहितः स एम अमृतरूपं मोक्षमपेक्षते लभते अनुभवति च । सर्वेऽपि तथा न वर्तन्तेऽस्मिन् चित्रविचित्रप्रपञ्चे । पृथिवीकाञ्चननितंबिनी-

प्राप्त्यर्थमेव मूर्खाः प्राणानपि परित्यजन्ति। भवपाशबद्धास्ते एवमभिमानेन तदर्थमेव जीवन्ति। विवेकिनस्तु स्त्रीकाञ्चनादिकमेव भगवत्प्रसादमिति भावयन्त एतल्लितयादेव नित्यसुखं विन्दन्ते। अत एव भगवान् फलप्रदानं मानवेच्छाधीनमिति निष्पक्षपातया दृष्ट्या वदति ॥ १२ ॥

चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः।
तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥ १३ ॥

"मम वर्त्मानुवर्तन्ते" इत्युक्तम्। को वा तव वर्त्मेत्यत्राह— चत्वारो वर्णाश्चातुर्वर्ण्यं स्वार्थिकः प्रत्ययः। मया परमात्मनैव गुणकर्मविभागशः गुणाः सत्त्वरजस्तमांसि, कर्माणि तदनुगुणानि तपआदीनि अष्टादशाध्याये वक्ष्यन्ते। सत्त्वप्रधानस्य ब्राह्मणस्य ब्रह्मज्ञानोत्सुकिनः तप आदीनि कर्माणि। सत्त्वमिश्ररजःप्रधानस्य क्षत्रियस्य राज्यरक्षणादीनि कर्माणि। तमोमिश्ररजः-प्रधानस्य वैश्यस्य वाणिज्यादीनि कर्माणि। रजोमिश्रतमःप्रधानस्य शूद्रस्य परिचर्यादीनि कर्माणि। एवंरीत्या गुणानां कर्मणां च विभागानुगुणतया चातुर्वर्ण्यं मयैव सृष्ट्यादौ लोकव्यवस्थानिर्वाहाय रचितम्। एषु वर्णविहितेषु कर्मसु नैकमपि तुच्छं निन्द्यं वा भवितुमर्हति। एकैकोऽपि वर्णीयः स्वीयं कर्म श्रद्धया भगवदाराधनभावनयैव यदि निर्वहेत्तदा सः तेनैव भगवत्प्रसादं लभते। एवं तत्तद्गुणकर्मानुगुणतयैव मया प्रागेव तादृशव्यवस्थायाः रचनात् तस्य कर्तारमपि मां अकर्तारं अत एवाव्ययं स्वतो निर्विकारं च विद्धि जानीहि। 'कर्तारमकर्तारं च' इति यदुच्यते तदर्थवत्तरं विद्यते। अहमेव तस्य कर्तेत्ययमंशस्सत्य एव। तथाप्ययं मानवकल्याणायैव मया कृतः; न हि ममानेन साधनीयं यत्किञ्चित्फलमस्ति। लोके सुखाय चतुर्विधमपि कर्म सर्वेषामप्यावश्यकम्। अत एव सर्वे स्वीयकर्मसु उच्चनीच-भावनां विहाय परस्परप्रेम्णा सार्वजनिकहिताय सर्वं कर्म सहोदरदृष्ट्या निर्वहन्त्वित्यपेक्षया परमात्मा स्वकीयां निर्लिप्ततामभिव्यनक्ति। लोकव्यवस्थायै गुणकर्मविभागस्य कर्तापि स स्वस्याकर्तृत्वभावनया दोषविदुरत्वं स्थापयति।

एतादृशो विभागो यदि न स्यात् सर्वत्र अव्यवस्थैवोत्पद्येत। एवं जगद्धितार्थमेवायं विभागः कृत इति भगवान् भावयति। अतस्तस्य अकर्तृत्वभावनापि युज्यते। "लोकेषु भूतोऽस्मि न लोकधर्मा" इत्येवंरीत्या परमात्मा सर्वजीविषु स्थित्वापि तेभ्योऽन्य एवेत्यनुभविनो वदन्ति। अत एव भगवान् नित्यसुंदरो दिव्यादर्शो वर्तते सनातनकालादारभ्य न केवलमेतद्दिवसपर्यन्तं किन्त्वागामिदिवसावधिकमपि। एवमेव मानवः स्वीयं कर्म लोकहितदृष्ट्या कुर्वन् मनसि वचने च स्वीयां कर्तृत्वभावनां परित्यजेदित्याशयं भगवान् स्वदृष्टान्तेन बोधयति। शरणगीता कर्तुर्जीवस्य हितदृष्ट्याऽकर्तृत्वभावनाया आवश्यकतां सम्यक् प्रतिपादयति। "मया कृतं कार्यमिदं त्विहेति संचिन्तयन्वै लभते शिवाग्रहम्। लिङ्गेऽर्पितं यन्न च वाच्यमेतद्बुद्धिधिष्णुना लिङ्गपदाभिकांक्षिणा॥ यदर्पितं जङ्गम एव भक्त्या तदप्यवाच्यं शिवभक्तिकामिना। यदि ह्यकार्षं किल कार्यमेतदित्येव चित्ते न निवेश्यते चेत्। इष्टं प्रदद्यात्खलु सङ्गमेशः शिष्टाय चेष्टाय चरात्मकाय॥" इत्येवं कर्तृत्वभावनां परित्यज्य सर्वमपि परहितेच्छया कार्यमित्युदात्तमाशयमाविष्करोति महात्मा बसवार्यः। एवमेवेतरेऽपि शरणा शिवभक्तिमेव प्रधानीकृत्य शिवप्रीत्यर्थमेव सर्वानपि व्यवहारान् निर्वहन्तोऽद्यापि तमेवाशयं आधुनिकेष्वपि युवकेषु दृढीकुर्वन्ति। तथैव रेणुकाचार्या अपि भावार्पणस्थले सर्वेन्द्रियव्यवहारं शिवार्तमेव निर्वोढुं साधकेभ्य आदिशंति। शिवार्पणबुद्ध्या व्यवहरन्तो जनाः नित्यसुखिनो भवेयुरिति सर्वे दार्शनिका अप्यभ्युपगच्छन्ति ॥ १३ ॥

**न मां कर्माणि लिंपन्ति न मे कर्मफले स्पृहा ।**
**इति मां योऽभिजानाति कर्मभिर्न स बध्यते ॥ १४ ॥**

एवं सर्वकर्तारमपि मां अकर्तृत्वेन तत्प्रयुक्तफलाभागित्वेन च यो जानाति सोऽपि क्रमशः कर्मबन्धाद्विनिर्मुक्तो भवतीत्यत्राह—"तानि कर्माणि मां न लिंपन्ति ; न मे तत्कर्मसंपर्कोऽस्ति। एवं मे कर्मफले तादृशकर्मफले स्पृहा इच्छापि नास्ति।" इति मां योऽभिजानाति सम्यक् विजानाति

सः कर्मभिः पुण्यपापादिभिर्न संबध्यते। एवं यथार्थतया मां यो जानाति सः न केनापि कर्मणा बध्यते। ये तु एतद्विपरीततया सर्वस्यापि कर्मणः मामेव साक्षात् कर्तारं अत एव तत्फलभोगिनं अत एव पक्षपातादिमन्तं वा जानीयुस्ते सदा कर्मपरवशास्सन्तः संसार एव तिष्ठेयुरित्युक्तं भवति। लोककल्याणाय सर्वं कृतवतोऽपि मे तस्मिन् कर्मणि न कदापि कर्तृत्वं विद्यते। तथापि यो मामेव सर्वस्यापि कर्तारं फलभागिनं च मनुते स अज्ञ एवेति भाव्यः। वस्तुतो ह्यकर्तारं निर्लिप्तं चिदानन्दरूपं मां यो याथार्थ्येन जानाति स एव नित्यसुखी भवेदित्याशयः ॥ १४ ॥

**एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः।**
**कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ॥ १५ ॥**

एवं वर्णाश्रमव्यवस्थायाः मयैव कृतत्वात् मदंशभूतैर्मानवैस्तद्धर्मपरिपालनमवश्यकर्तव्यमित्याह—एवं वर्णाश्रमधर्मरूपस्य कर्मणस्तत्त्वमेतादृशं ज्ञात्वा पूर्वैरपि मुमुक्षुभिः पूर्वतनैर्जनकादिभिर्मुमुक्षुभिरपि कर्म स्वकर्तव्यत्वेन प्राप्तं कर्म कृतमाचरितम्। फलसङ्गकर्तृत्वत्यागपूर्वकं ह्यनुष्ठितं कर्म मोक्षफलप्रदं भवतीति प्रागेवासकृदुक्तम्। "कर्मणैव हि संसिद्धिमास्थिता जनकादयः" इत्यत्राप्ययमाशयः स्पष्टीकृतः। तस्मात्कारणात् त्वमपि पूर्वतरैरनादेः कालादेव कृतं पूर्वतरमनादिकालप्राप्तं कर्मैव कुरु न तु कर्म परित्यक्तुमर्हति भवान् यावत्पर्यन्तं देहे तिष्ठति। वर्णधर्माऽपरिपालनं महादोष इति परिगण्यते। तत्र यो जुगुप्सते स आत्मकल्याणं नहि साधयितुं प्रभवेत्। अतः सर्वथा भवदीयं कर्म कायकामेति ज्ञात्वा अवश्यं श्रद्धया आचरणीयमेव। नो चेत् महती हानिरुत्पद्येत, विपत्परंपरा च समापतेत् ॥

ननु यदि मया कर्म कर्तव्यं स्यात् तदा सर्वस्यापि कर्मणो नैकेनैव कर्तुं शक्यत्वात् कीदृशं कर्म कर्तव्यं, कीदृशं न कर्तव्यं इत्यादिविवेचना दुर्ज्ञेयैव मादृशाम्। अतः कथं कर्म कुर्यां किं वा कुर्यां, कदा वा कुर्यां, इति चिन्तायां पराशक्तिरूपो भगवानेव विवेचयितुं पीठिकामारचयति—

किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः ।
तत्ते कर्म प्रवक्ष्यामि यद्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १६ ॥

कर्म कर्तव्यं चेत्तत् किं कीदृक्स्वरूपम् । एवमेव अकर्म अकर्तव्यं परित्याज्यं च कर्म किं कीदृशमित्यस्मिन् विषये कवयोऽपि मेधाविनोऽपि मोहिता मोहङ्गता एव । तत्तस्मात्कारणात् ते तुभ्यमहमेव कर्मस्वरूपमकर्मस्वरूपं च प्रवक्ष्यामि सम्यग्वक्ष्यामि । यत् मदुक्तम् ज्ञात्वा विज्ञाय अशुभादेतादृश-मोहात् तन्मूलकाद्भवबन्धात् तद्रूपाज्जननमरणचक्रभ्रमणाच्च मोक्ष्यसे मुक्तो भविष्यसि । एवं च कर्माकर्मविवेचनमेव नित्यसुखमूलमित्युक्तं भवति ॥१६॥

ननु शास्त्रैरेव कर्तव्यं कर्म विहितम्, अकर्तव्यं च निषिद्धं दृश्यत एव । अतस्तत्र ज्ञेयांशः शास्त्रावलोकनेनैव ज्ञातुं शक्य इति शङ्कायां कर्मादीनां स्वरूपं न तावत्सुलभतया ज्ञातुं शक्यत इति प्रतिपादयन् भगवान् तदेव विवेचन मसन्दिग्धतयोपदिशति—

कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः ।
अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥ १७ ॥

हि यस्मात् कर्मणोऽपि कर्मस्वरूपविषयेऽपि बोद्धव्यं ज्ञातव्यं रहस्य-मस्ति । एवं विकर्मणो विरुद्धस्य कर्मणः स्वरूपेऽपि ज्ञातव्यं रहस्यमस्ति । एवमकर्मणः कर्मत्यागरूपे तूष्णींभावेऽपि बोद्धव्यं रहस्यं किंचिदस्ति । यतः कर्मणः कर्तव्याकर्तव्यकर्मणां गतिर्गहना अतिगंभीरा सूक्ष्मा च वर्तते । कर्तव्यं चेत्सर्वमपि कर्म कर्तव्यमेव भवेत् । सर्वस्यापि कर्मणः कर्तुमशक्य-त्वात् तत्त्यज्यते चेत् सर्वमपि त्यक्तव्यमेव भवेत् । अतोऽस्य कर्मणः सूक्ष्मं रहस्यं अतीव दुर्ज्ञेयम् । ततोऽहमेव तद्रहस्यं विविच्य वक्ष्य इत्यभिप्रायः ॥

कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः ।
स बुद्धिमान्मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥ १८ ॥

तदेव कर्मानुष्ठानरहस्यं प्रथमं संक्षेपेण प्रशंसार्थमुपदिशति । सः

पुरुषः कर्मणि क्रियमाणे व्यापारे अकर्म कर्माभावं पश्येत्, एवमेव यः बाह्ये अकर्मणि कर्माननुष्ठानेऽपि अन्तरङ्गे मानसिकतया अनुष्ठितं कर्म जानीयात् स एव मनुष्येषु बुद्धिमान् विवेकी संपद्यते। चक्षुरादिभिर्बाह्येन्द्रियैः सहजतया रूपादिग्रहणे जातेऽपि तथैव पादादिकर्मेन्द्रियैश्च गमनादिकर्मणि निरुह्यमानेऽपि 'इन्द्रियाणीन्द्रियार्थेषु वर्तन्ते' इति मत्वा तूष्णीं तिष्ठन् पुरुषः स्त्रीपुंदेहान्तर्गतो जीवः स्वेन न किञ्चिदपि कर्म कृतमिति अकर्मैव यदि पश्येत् तदा सः बुद्धिमानिति परिगण्यते। आत्मसान्निध्येन इन्द्रियैस्सहजतया कर्मणि अनुष्ठितेऽपि तत्स्वेनैवानुष्ठितमिति यः मनसापि न स्मरेत् स एक एव धीमानिति भाव्यते। एवं सः यदि सर्वमपि कर्म वस्तुतः परित्यजेत् तदा तदीयं मनः परित्यक्तस्यैव कर्मणश्चिन्तने निमग्नं सत् सर्वदा तत्रैव व्यापृतं भवेत्। कर्मानुष्ठानेऽपि कर्तृत्वाभिमानं यः परित्यजति स एव कर्माऽननुष्ठानेऽपि मनसः कर्मव्यापृतिमपि जानाति। तादृगेव जीवः प्रज्ञाशालीति कीर्त्यते। स एव युक्तः हृदये प्रकाशमानेन प्राणलिङ्गेन संयुतस्सन् शिवयोगीति च परिगण्यते। स एव कृत्स्नकर्मकृत्तु समग्रकर्मनिर्वाहकश्च संपद्यते। तेन कस्मिंश्चित् कर्मणि समग्रकर्मभिर्यत्फलं प्राप्यते तस्यैवाधुनापि प्राप्त्या स एव कर्मयोगी भवति॥

ननु कर्मणि क्रियामाणे सति कर्माभावस्य दर्शनं विरुद्धमेव। अत इदं सर्वं भ्रान्तिमूलमेव भवेत् इत्याशङ्कायां कर्माकर्मणोः स्वरूपं वैलक्षण्यं च समुपदिशन् परमात्मा तयोः परस्परं विरोधो न घटत एवेत्याह—

**यस्य सर्वे समारंभाः कामसङ्कल्पवर्जिताः।**
**ज्ञाननिर्दग्धकर्माणं तमाहुः पण्डितं बुधाः॥ १९॥**

यस्य पुरुषस्य सर्वे समारंभा व्यापाराः कामसङ्कल्पवर्जिताः काम इच्छा तेन, तत्कारणभूतैस्सङ्कल्पैश्च वर्जिता भवन्ति। फलसङ्कल्पादिकं विना कर्तव्यभावनयैव यः कर्माण्यनुतिष्ठति तं तादृशं शिवज्ञानाग्निना दग्धकर्मकाष्ठं तादृशं पुरुषं ज्ञानिनं बुधा विद्वांस आहुर्भावयन्ति। तस्मिंश्च ज्ञानं कर्मण्यकर्मतादर्शनं पूर्वोक्तं, तदेवाग्निस्तेन दग्धं शुभाशुभलक्षणं कर्म च समन्विते

वर्तेते । एवं कर्म कुर्वन्त एव निर्लिप्ता असंस्पृष्टविकारा जीवा युक्ता इति पण्डितैर्भाव्यन्ते । एते कर्मयोगिन इतरैः कर्मिभिर्विशिष्यन्ते । कर्मिणः पदेपदे व्यथामनुभवन्ति कर्मयोगिनस्तु कर्म कृत्वापि न निबध्यन्ते । ' कृत्वा कृत्वा व्याहता दौर्मनस्यात् दत्वा दत्वा व्याहतास्सत्यहानात् । कुर्युर्दद्युर्यद्धि सत्यस्य योगात्संयुज्येरन् सङ्गमेश त्वयैव ॥ " इति शरणाः कर्मयोगिनो वैशिष्ट्यं निरूपयन्ति । कर्मण्यकर्मताबुद्धिमान् पण्डितः देहेन्द्रियादिकं सर्वमपि भगवत्संबद्धं जानन् नित्यसुखी भवति । तस्य सद्भावनामेवं वर्णयति शरणगीता । " यतस्तदीया तनुरित्यवैमि ततो ममान्या तनुरेव नास्ति । यस्मात्त्वदीयान्मनसो विभिन्नं मनस्तु नैवेति विनिश्चयो मे ॥ यतस्त्वदीयं धनमेव सर्वं ततो विभिन्नं धनमेव नास्ति । ज्ञात्वा तदीयं त्रयमेतदेवं कथं नु विद्येत परो विचारः ॥ " इत्येवं शिवानुभविनः पण्डितस्य निरभिमानं जीवनं प्रशंसते शरणगीता । तादृगेव ज्ञानी शिवयोगी इत्यादिशब्दैर्लोके व्यवह्रियते ॥

**त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः ।**
**कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित्करोति सः ॥ २० ॥**

कर्मणि क्रियमाणे सति तत्र अकर्मत्वदर्शनं कथं नु शक्यमित्यत्राह । कर्मफलासङ्गं कर्मसु तत्फलेषु च आसङ्गमभिमानं त्यक्त्वा वर्जयित्वा, अत एव नित्यतृप्तो विषयेष्वाकांक्षाऽभावात् सदा तुष्ट एव, अत एव निराश्रयो यत्किञ्चिदुद्देशादिरूपाश्रयरहितो यः सः कर्मण्यवश्यकर्तव्यतया प्राप्ते कर्मणि अभिप्रवृत्तोऽपि किञ्चिदपि कर्म नैव करोति । कर्तृत्वाभिमानरहितत्वात् तेन कर्म कृतमपि तत्परिणामे सुखदुःखादिरूपे तस्य मतिर्न प्रवर्तत एव । समदर्शनस्य तस्य पुत्राप्यपेक्षाऽभावात् सः कर्म कुर्वन्नपि न करोत्येवेति ज्ञानिनो विदन्ति । तस्य करणमकरणं चोभयमपि तुल्यमेव । स्वार्थशून्यः कर्मणा न किञ्चिदपि फलमपेक्षते । तादृशस्य कर्मयोगिनो निष्ठामेवं वर्णयति शरणगीता । " परस्य वित्तं नहि मे भवेदित्येषा हि निष्ठा शरणे निरीक्ष्यते । परस्य भार्या नहि मे भवेदित्येषा हि निष्ठा शरणे निरीक्ष्यते ॥ परस्य हिंसा न चिकीर्ष्यते

मयेत्येषा हि निष्ठा शरणे निरीक्ष्यते। लिङ्गं त्वभिन्नं चरजङ्गमादित्येषा हि निष्ठा शरणे निरीक्ष्यते ॥ सत्यः प्रसादः परमेश्वरस्येत्येषा हि निष्ठा शरणे निरीक्ष्यते। विनैव निष्ठां चरतो नरांस्तु न विश्वसेत्कूडलसङ्गमार्यः ॥" इत्येवं परमात्मनि सर्वार्पणभावेन शरणागतस्य, लोककल्याणाय व्यवहरतः पण्डितस्य पावनं सुन्दरमार्जवोपेतं जीवनमुपवर्ण्यते तत्र। तादृश एव कर्मयोगिनि प्रागुक्तं कर्मण्यकर्मत्वदर्शनं दृश्येत; नान्यत्र तच्च शक्येत ॥ २०॥

**निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः।**
**शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ २१ ॥**

तादृशे योगिनि कर्मणां व्याप्तिमाह—निराशीः कुत्राप्यपेक्षारहितः, अत एव यतचित्तात्मा यतो नियमितः चित्तमन्तःकरणं आत्मा च येन तादृशः। अत एव त्यक्तसर्वपरिग्रहः विषयभोगादिसर्वपरिग्रहविवर्जितः शारीरं कर्म केवलं शरीरधारणमात्रोपयोगि कर्ममात्रं कुर्वन् किल्बिषं पापं नाप्नोति। तदतिरिक्तापेक्षायां तु पापमवर्जनीयमेव। तादृशः शिवयोगिनो वर्तनं बसवार्यजीवने सम्यगभिलक्ष्यते। तदीयमादर्शं वर्तनं स एव निर्दिशति। "सुवर्णराशीषु च लेशमात्रं तन्तुं च वासस्स्वहमेकमेव। एतद्दिनार्थं परतो दिनार्थं यदि प्रतीक्षे शरणं तदा भवान् ॥ तथा भवत्पारिषदाः प्रमाणं भवन्तु मह्यं गुरुसङ्गमार्य।" इति। एवं शरीररक्षणाय यत्किञ्चित्कर्म कायकभावनया कुर्वन् योगी सत्यः शुद्धश्च वर्तत इति भगवत आशयः ॥

**यदृच्छालाभसन्तुष्टो द्वन्द्वातीतो विमत्सरः।**
**समः सिद्धावसिद्धौ च कृत्वापि न निबद्ध्यते ॥ २२ ॥**

एवं शरीरयात्रार्थमेव कर्म कुर्वतः पापाभाव उक्तः। एवमेव स्वयं पूर्वतनकर्मोपात्तद्रव्यैरेव सन्तोष्टव्यम्। अन्यथा तस्यापि बन्धो निरन्तर एव स्यादित्याह—यदृच्छालाभसन्तुष्टः अप्रार्थितोपनतेनैव लाभेन सम्यक् तुष्टः पुनः पुनः उपर्युपरि आशारहितः द्वन्द्वातीतः सुखदुःखादिद्वन्द्वसहिष्णुः। अत

एव विमत्सरः कुत्रापि मात्सर्यादिरहितः। अत एव सिद्धावसिद्धौ च कार्यसाफल्ये वैफल्ये वा समः हर्षविषादोभयरहितो यः सः यत्किञ्चित्कृत्वापि न निबध्यते बन्धपरवशो न भवत्येव। तादृशो योगिनो वर्तनं स्वीयदृष्टान्तेनोपवर्णयति भगवान् बसवार्यः। "न्यायैकनैष्ठुर्यपरोऽस्मि यावत् तावच्च दाक्षिण्यपरो न जातः। लोकाद्विरुद्धः शरणो बिभेति कुतोऽपि नो सङ्गमदेव एषः॥ तवैव तेजोनिचये विलीनः जगच्च तेजोमयमेव पश्यति।" एवं सः सर्वदा निर्भयस्तृप्त्या शान्त्या च वसन् कर्म कुत्वापि तत्र नाभिमनुते॥ २२॥

गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः।
यज्ञायाचरतः कर्म समग्रं प्रविलीयते ॥ २३॥

एवं ज्ञानिना कृतं कर्म कुत्र गच्छतीत्यत्राह। गतसङ्गस्य सर्वतोऽपि निवृत्तासक्तस्य, अत एव मुक्तस्य निवृत्तकर्मकृतबन्धस्य, ज्ञानावस्थितचेतसः ज्ञाने एतावता प्रतिपादिते तत्त्वज्ञाने अवस्थितं व्यवस्थया तिष्ठच्चेतो मनो यस्य तादृशः शिवयोगिनः। उक्ततत्त्वज्ञाने दृढनिश्चयवत इत्यर्थः। एतेन च क्रियमाणं कर्म सर्वमपि केवलभगवत्प्रीत्यर्थं तदुद्देशेनैव प्रवर्तेत। अतो यज्ञाय केवलभगवत्पूजोद्देशेनैव कर्माचरतः कुर्वतो जीवस्य तत्कर्म समग्रं संपूर्णतया प्रविलीयते विनश्यत्येव। यतो ज्ञानिना कृतस्य कर्मणः भगवत्प्रीतिरेव फलं अतो बन्धं न जनयत्येव तदीयं कर्म। सः साधुषु पापिषु सर्वत्र समदृष्ट्या व्यवहरन् परमात्मप्रकाशमेव पश्यति। जगच्च सर्वं तस्य परशिवलीलाविनोदभूमिस्संपद्यते। सः त्रिकरणैश्च जगत्प्रीणयन् सदा सन्तुष्टचित्तो विलसति। शरणगीता तदीयजीवनमेवं वर्णयति। "मर्त्यो हि लोकः परमेश्वरस्य लीलाविनोदाय विनिर्मितं गृहम्। अत्रैव योग्या य इहाद्य दृष्टास्तेऽमुत्र योग्याः खलु सङ्गमार्य॥ ये त्वत्र नार्हास्त्वभवन्मनुष्यास्ते तत्र नार्हा भवितुं समर्थाः।" इति। एवं योग्यवर्तनेन योगी न केवलमिहैव अपि तु परत्रापि संभावितो नित्यसुखी शिवप्रियश्च वर्तेतेत्यर्थः ॥ २३॥

**ब्रह्मार्पणं ब्रह्म हविः ब्रह्माग्नौ ब्रह्मणा हुतम् ।**
**ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥ २४ ॥**

भगवत्पूजारूपेण कर्माचरणे तत्कर्म बन्धाय न भवतीत्युक्तं प्राक् । कथं तत्संभवतीत्यत्राह । केवलकर्तव्यभावनयैव भगवत्पूजारूपमेव कर्म यः करोति तेन तादृशकर्मणो भगवते यदर्पणं क्रियते तदपि ब्रह्मैव भवति । एवं हविः पूजासाधनं द्रव्यमपि ब्रह्मरूपमेवेति भाव्यम् । तथा च ब्रह्मरूपाग्नावेव ब्रह्मणा तदंशभूतेन जीवेन स्वेन हुतं भवति । तस्मात् ज्ञानिनस्तु कर्ता कर्म करणं क्रिया इत्यादिकं सर्वमपि शिवरूपमेव संपद्यते । अतो ब्रह्मकर्मसमाधिना तदीयं कर्म परशिवानुभवसाधकमित्येतद्भावनावता तेन ज्ञानिना परशिव एव ज्ञतव्यो भवति । न तु तादृशं कर्म अस्य पुण्यपापादिफलप्रदं भवेदित्यर्थः । अयमेवाशयः श्रीरेणुकाचार्यैः प्रागेवाविष्कृतः । ते तु एवं वदन्ति । "भोक्ता भोज्यं प्रेरयिता सर्वमेतच्चराचरम् । भावयन् शिवरूपेण शिवो भवति वस्तुतः ॥ सर्वं कर्मार्चनं शंभोर्वचनं तस्य कीर्तनम् । इति भावयतो नित्यं कथं स्यात्कर्मबन्धनम् ॥" इत्येतादृशी भावना श्रेयोवहास्यात् ।

**दैवमेवापरे यज्ञं योगिनः पर्युपासते ।**
**ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥ २५ ॥**

एवं ज्ञानिना अनुष्ठेये कर्मणि शिवपूजारूपत्वमुक्त्वा तादृशक्रियायाः प्रभेदान् प्रतिपादयति । अपरे योगिनः पूर्वोक्ततत्वज्ञानिनः दैवमेव यज्ञं महादेवः परमशिवो येन पूज्यते तादृशं देवताराधनरूपं कर्मैव पर्युपासते कुर्वन्ति । अपरे केचन ज्ञानिनः यज्ञं तादृशमाराधनरूपं कर्म यज्ञेनाराधनरूपतयैव ब्रह्माग्नौ परशिवमयाग्नावेव उपजुह्वति होमं कुर्वन्ति । नतु इन्द्रादिदेवतोद्देशेन यज्ञादिरूपां बाह्यपूजां प्रत्येकतया कुर्वन्ति । सर्वेन्द्रियसुखानां परशिवाग्नौ तंदानिमेव भक्त्या समर्पणमेव ज्ञानिनामेतेषां होमकर्म भवति ॥

**श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ।**
**शब्दादीन्विषयानन्ये इन्द्रियाग्निषु जुह्वति ॥ २६ ॥**

अन्ये अपरे तु ज्ञानिनः श्रोत्रादीनि पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि च संयमाग्निषु संयम इन्द्रियाणां विषयेभ्यो निवर्तनं, तद्रूपेष्वग्निषु जुह्वति होमं कुर्वन्ति । तथा च इन्द्रियजये प्रयतन्त इत्यर्थः । अन्ये तु योगिनः शब्दादीन् पञ्च विषयान् एवमेव वचनादिकर्माणि च इन्द्रियाग्निषु तत्तदिन्द्रियरूपेष्वेवाग्निषु विराजमाने आचारलिङ्गगुरुलिङ्गशिवलिंगचरलिंग-प्रसादलिंगाभिधे महालिंगे जुह्वति होमं कुर्वन्ति । विषयभोगमनुभवतामपि शास्त्रोक्तं संयममनुसृत्य वर्तनात् सोऽपि संयमो होम इत्युक्तः । अयमेवाशयः श्रीरेणुकाचार्यैरगस्त्यमहर्षये प्रागेव विशदीकृतः । "आत्मज्योतिषि चिद्रूपे प्राणवायुनिबोधिते । जुह्वत् समस्तविषयान् तन्मयो भवति ध्रुवम् ॥ इन्द्रियाणि समस्तानि शरीरं भोगसाधनम् । शिवपूजांगभावेन भावयन्मुक्तिमाप्नुयात् ॥" इति विषयभोगं शिवपूजांगमिति भावयितुम् पूज्यपादाः सर्वानादिशन्ति ॥

**सर्वाणीन्द्रिययमाणि प्राणकर्माणि चापरे ।**
**आत्मसयंमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥ २७ ॥**

अपरे च योगिनः सर्वाणि समस्तान्यपि इन्द्रियकर्माणि इन्द्रियाणां चक्षुरादीनां दर्शनादीनि सर्वाणि कर्माण्यपि, प्राणकर्माणि प्राणवायोरुच्छ्‌वास-निश्वासादिकर्माणि च ज्ञानदीपिते शिवज्ञानेन प्रज्वलिते प्रकाशिते आत्म-संयमयोगाग्नौ आत्मनः स्वस्य यः संयमो विषयवैमुख्यरूपस्तादृशो शिवयोग-रूपाग्नौ होमं कुर्वन्ति । इन्द्रियकर्माणि प्राणकर्माणि सर्वाण्यपि तत्रत्याय परमेश्वराय समर्पयन्तः तत्प्रसादरूपेण तान्युपयुञ्जन्तो वर्तन्ते केचनेत्यर्थः ॥

**द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे ।**
**स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥ २८ ॥**

अपरे योगिनो द्रव्ययज्ञाः द्रव्यं संपाद्य तस्य सत्पात्रेषु विनियोगरूप-यज्ञनिष्ठा भवन्ति । अपरे तपोयज्ञाः तपः कायक्लेशादिरूपम् । तद्रूपयज्ञा-सक्ता भवन्ति । अपरे योगयज्ञाः प्राणायामप्रत्याहारादिलक्षणयोगासक्ता

वर्तन्ते । अपरे च यतयः प्रयत्नशीलाः संशितव्रतास्तीक्ष्णव्रताश्च भूत्वा स्वाध्यायज्ञानयज्ञाः, स्वाध्यायः स्वस्वशाखाध्ययनम् । ज्ञानं तदर्थचिन्तनम् । एतादृशयज्ञनिष्ठा भवन्ति । सर्वेषां एतत्सर्वं देवपूजारूपत्वात् यज्ञो भवति ॥

**अपाने जुह्वति प्राणं प्राणेऽपानं तथापरे ।**
**प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ॥ २९ ॥**

अपरे प्राणं प्राणवायुव्यापारं पूरकाख्यं कर्म अपाने अपानवृत्तौ रेचकाख्ये कर्मणि लीनं कुर्वन्ति । तथापरे प्राणेऽपानं पूरके रेचकं पूरयन्ति । अपरे तु प्राणायामपरायणाः प्राणायामसाधनतत्पराः प्राणापानगती रुद्ध्वा पूरकं रेचकं उभयमपि निरुद्ध्य कुंभकं कृत्वा प्राणायाममेव आचरन्ते ॥२९॥

**अपरे नियताहाराः प्राणान् प्राणेषु जुह्वति ।**
**सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥ ३० ॥**

अपरे तु नियताहाराः नियतः व्यवस्थापितः आहारो यैस्ते आहार-नियमविशेषविशिष्टाः प्राणान् प्राणेषु जुह्वति पूरकाभ्यासनिष्ठा एव भवन्ति। एते सर्वेऽपि यज्ञविदः परमात्मपूजारूपस्य अत्रोक्तस्य सर्वस्यापि यज्ञस्य तत्त्व-विज्ञानिनः यज्ञक्षपितकल्मषाः तादृशयज्ञानुष्ठानेन क्षपितं नाशितं कल्मषं पापं येषां ते तादृशा भवन्ति । उक्तेषु यज्ञेषु यस्यकस्याप्यनुष्ठानेनैव पापक्षयो भवत्येव । एतेषां सर्वेषामपि समन्वयरूपस्य शिवयज्ञस्य स्वरूपं स्वस्याचरण-द्वारा निरूपयत्यल्लमप्रभुर्जङ्गमपुङ्गवः । तच्चैवमुपवर्ण्यते शरणगीतायाम् । स आह । " स्वदेहमेवोपवनं विधाय मनःखनित्रेण च तं खनित्वा । भ्रान्ति समुलां परिहाय चित्ते संसारलोष्टं विनिभिद्य युक्त्या ॥ स्वान्ते निखन्यां परमात्मबीजं वाप्यास्सहस्रारसमाह्वयायाः । प्राणाख्ययन्त्रादुदकं सुषुम्नया निषिच्य सम्यक् परिपोषितं मया ॥ पंचैव गावो नहि कुर्युरत्र विनाशमित्येव विचिन्त्य भक्त्या । क्षमासमत्वाख्यवृतिं विधाय तत्रावधानेन तदेव सस्यम् ॥ गुहेश्वर त्वत्कृपया व्यवर्धयं यतो हि सर्वो भवतो विलासः । "

इति । तस्याभ्यासेन देहे परशिवस्य पूर्णव्याप्तिं सम्यगनुभवितुं शक्नोति साधकः । देहे विद्यमानं मलपाशं निवारयितुमयं शिवयोगः शिवप्रभाविकसनद्वारा प्रभवति । तस्य च शिवयज्ञस्यानुष्ठातारः मलपाशविनिर्मुक्ता भवन्ति ॥

**यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम् ।**
**नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ॥ ३१ ॥**

बहुविधयज्ञकर्तॄणां कर्मक्षयः परशिवप्राप्तयेऽपि भवतीत्याह । पूर्वं "देवान् भावयतानेन ते देवा भावयन्तु वः" इति देवाराधनेनैव मनुष्यस्य श्रेयःप्राप्तिः प्रतिपादिता । 'ते त्वघं भुञ्जते पापाः ये पचन्त्यात्मकारणात्' इति देवपूजादिकमकुर्वतो निन्दा च कृता । अतः यज्ञशिष्टामृतभुजः पूर्वोक्तदेवाराधनरूपो यो यज्ञः तत्र शिष्टं यदमृतं तत्प्रसादरूपं भुञ्जन्तो मानवाः सनातनमाद्यन्तरहितं सदा विद्यमानं परशिवब्रह्मैव यान्ति प्राप्नुवन्ति । "सदा लिङ्गैकनिष्ठानां गुरुपूजानुषङ्गिणाम् । प्रपन्नानां विशुद्धानां प्रसीदति महेश्वरः ॥" इत्येवं हरगुरुचरप्रसादभोगिनो जीवाः सर्वत्र शिवं पश्यन्तः स्वात्मन्यपि तमेवानुभवन्ति । "प्रसादे शांभवे सिद्धे परमानन्दकारणे । सर्वं शिवमयं विश्वं दृश्यते नात्र संशयः ॥" इति श्रीरेणुकभगवच्चरणाः प्रसादमाहत्म्यं प्रसादिनः शिवदृष्टिं च सम्यक् निरूपयन्ति । अतो वर्धिष्णुभिस्सर्वैरपि यज्ञ आचरणीयः । अयज्ञस्य तादृशं माहेश्वराराधनरूपं यज्ञमकुर्वतः अयं लोकः ऐहिकसौख्यं नास्ति । इतोऽप्यधोगतिं सः प्राप्नोति । एवं सत्यन्य उत्तमो लोकः कुतः संभवेत् ? हे कुरुसत्तम अर्जुन, शृणु तावत् ॥

**एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे ।**
**कर्मजान् विद्धि तान्सर्वानेवं ज्ञात्वा विमोक्ष्यसे ॥ ३२ ॥**

एवमुपक्रान्तानां यज्ञानां स्वरूपविचारमुपसंहरति । एवं पूर्वोक्तरीत्या बहुविधाः बहुप्रकारा अनेके यज्ञाः हरगुरुजङ्गमाराधनरूपा बहवो ब्रह्मणः परशिवस्य मुखादुपदिष्टाः । "सह यज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।

अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥" इति पूर्वमेवोक्तम् । तानुक्तान्सर्वान्यज्ञान् कर्मजान् कायकवाचकमानसिककर्मसमुद्भूतान् । एते सर्वेऽपि कर्मयोगरूपा इति भावः । एवंभूतान् ज्ञात्वा एतादृशः कर्मयोगस्य परमात्मप्राप्तिसाधनत्वमप्यस्तीति ज्ञात्वा तदनुष्ठानेन विमोक्ष्यसे बन्धान्मुक्तो भविष्यसि । अतस्त्वया युद्धं श्रद्धया आचरणीयमेवेति भावः ॥ ३२ ॥

**श्रेयान् द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परंतप ।**
**सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥ ३२ ॥**

एवं कर्मयोगमुपदिश्य तदपेक्षया ज्ञानयोगस्यैव श्रैष्ठ्यमुपपादयति । द्रव्यमयात् द्रव्यसाध्यात् यज्ञात् आराधनरूपात् उक्तकर्मयोगात् ज्ञानयज्ञः ज्ञानरूपो यज्ञः श्रेयानुत्तमः । हे परंतप अर्जुन, अखिलं सर्वमपि कर्म निश्शेषतः ज्ञाने ज्ञानयोग एव परिसमाप्यते पर्यवस्यति । ज्ञानस्यैव साक्षान्मोक्षसाधनत्वेन उक्तकर्मयोगस्सर्वोऽपि तादृशज्ञानोत्पत्तिद्वारैव मोक्षसाधनं संपद्यत इति कर्मयोगापेक्षया ज्ञानयोग उत्तम इत्युक्तम् । अयमेव ज्ञानयोगी ज्ञानाचारस्थले एवं निर्दिश्यते श्रीरेणुकाचार्यैः "निर्विकल्पे परे धाम्नि निष्कले शिवनामनि । ज्ञानेन योजयन्सर्वं ज्ञानाचारी प्रकीर्तितः ॥" इति । तस्य प्राक्तनं सर्वमपि कर्म ज्ञानाग्निना दग्धं सत् पुनर्न प्ररोहेत् । तथापि सः लोककल्याणाय स्वधर्ममाचरति । "अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दया क्षमा । दानं पूजा जपो ध्यानमिति धर्मस्य संग्रहः ॥" इति तदीयो धर्मः रेणुकाचार्यैर्व्यवस्थापितो वर्तते । एवमाचरन् ज्ञानयोगी सर्वैः विशिष्यते ॥

**तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।**
**उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥ ३४ ॥**

मोक्षसाधनभूतं ज्ञानं च किंरूपमिति प्रश्नस्योत्तरमाह । मोक्षसाधनभूतशिवज्ञानस्वरूपं प्रणिपातेन गुरुजङ्गमप्रणामादिना, परिप्रश्नेन विनयपूर्वकं तेषां योगक्षेमविषयकप्रश्नेन, सेवया गुरुजङ्गमशुश्रूषादिना विद्धि गुरोस्सकाशाज्जानीहि । न तु तत् रहस्यत्वात् स्पष्टतया वक्तुं शक्यते । केषां सकाशे

तत् प्रष्टव्यमिति शङ्कायामाह उपदेक्ष्यन्तीति। तत्त्वदर्शिनः ये यथावस्थितं तत्त्वं परमात्मस्वरूपं साक्षात्कृतवन्तस्तादृशो ज्ञानिनस्ते तुभ्यं तत् ज्ञानं मोक्षसाधनभूतं परशिवज्ञानमुपदेक्ष्यन्ति प्रणिपातादिपूर्वकप्रश्ने कृते तद्रहस्यमुपदिशेयुरिति भावः। "मत्स्वामिन् भवदीयपादयुगळं संस्मर्तुमाशाधि माम्। चेलान्तं हि वितत्य याचितुमुपक्रान्तोऽस्मि देव त्वयि॥" इति बसवार्यः तत्त्वज्ञानोपदेशाय परमगुरुं सङ्गमार्यमनन्यभक्त्या याचते॥ ३४॥

यद्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव।
येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि॥ ३५॥

तादृशतत्त्वज्ञानस्यैव प्रशसां करोति। मोक्षसाधनभूतं यद्रहस्यं वर्तते तदेव ज्ञात्वा विज्ञाय पूनर्भूय एव मोहं 'कथमहमिमान् हन्याम्' इत्यादिरूपं मोहं न यास्यसि न प्राप्स्यसि। तादृशतत्त्वज्ञाने जाते भवत एतादृशो मोह एव नोत्पद्येत। किञ्च हे पाण्डव अर्जुन, येन तादृशेन ज्ञानेन भूतानि सर्वाण्यपि प्राणिजातान्यशेषेण कृत्स्नशः आत्मनि स्वस्मिन्नेव द्रक्ष्यसि साक्षात्करिष्यसि। अथोऽनन्तरं मय्यपि परमात्मनि तत्सर्वं साक्षात्करिष्यसि। "यत्र यत्र च दृशं प्रहिणोति तत्र तत्र परिपश्यति स त्वाम्। यच्च यच्च नयनाभिमुखं सत् सर्वमेव भवतः खलु रूपम्॥" इति शरणगीता ज्ञानिनस्सर्वत्र शिवदर्शनं निरूपयति। शिवप्रसादे सति योगभाजः सर्वं शिवात्मकतया विभाति। इति श्रीरेणुकाचार्याः शिवयोगिनः सर्वशिवात्मकत्वमुपपादयन्ति॥

अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः।
सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि॥ ३६॥

तस्यैव प्रशंसात्र क्रियते। सर्वेभ्यः पापेभ्यो लोके विद्यमानेभ्यः सर्वेभ्योऽपि पापात्मभ्यः पापकृत्तमः महापापी असि चेदपि सन्नपि सर्वं वृजिनं संसारं ज्ञानप्लवेनैव उक्तगुरूपदेशलब्धज्ञानाख्येन साधनेनैव सन्तरिष्यसि संपूर्णतया अतिक्रम्य गच्छसि। तादृशमहापापिनामपि शिवज्ञानेन सर्वपापनाशः संभवेदिति चेत् सद्भक्तानां विषये किं वक्तव्यम्। अपि वा यश्चण्डालः

शिव इति वाचं प्रयुञ्जीत सोऽपि बन्धमुक्तो भवेदेवेति श्रुतिराह। "गर्भस्थो वा जायमानो वा जातो वा ब्राह्मणोऽथवा। अन्त्यजो वापि मुच्येत प्रसादे सति शाङ्करे ॥" इति श्रीरेणुकभगवत्पादाः अतिनीचजातीयानामपि शिवज्ञानरूपेण प्रसादेन सर्वपापक्षयमुपदिशन्ति। शरणास्त्वस्मिन्विषये महतोदारभावेन स्वाशयमाविष्कुर्वन्ति। "ग्रामस्य बाह्यान्तरभेदमात्रादाकाशभेदः किमु सत्य एषः। जलेऽप्ययभेदः परिदृष्ट एव शौचस्य चैवाचमनस्य लोके ॥ आत्मस्वरूपावगमस्तु येषां तेषां कुले भेदविदेव नास्ति। षड्दर्शनज्ञानजमुक्तिलभ्यं फलं द्वितीयं न च दृश्यते हि ॥ येनैव दृष्टं परमेशरूपं तस्यैव निष्ठा न च सद्वितीया ॥" इति जगज्जीवने भेददृष्टिमन्तरङ्गे विहाय सर्वशिवभावनया जगदवलोकयितुं शरणाः साधकान्सर्वान् प्रेरयन्ति। बसवार्यः स्वदृष्टांतेन जनेषु सद्भावनामुत्पादयति। "देव त्वमाकर्णय मद्विधानं विप्रादिशूद्रान्तसमस्तवर्णाः। शिवैकनिष्ठा यदि भक्तिमन्तः सर्वे समाना इति भाव्यते मया ॥" इति विशालदृष्ट्या जगदवलोकयन्सः तामेव दिव्यदृष्टिमितरेष्वपि प्रेरयति। एवमात्मरूपशिवज्ञानाय सर्वैरपि सावधानेन चित्तेन प्रयतितव्यमित्युदाराशयं भगवावानत्राविष्करोति ॥ ३६ ॥

**यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन।**
**ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥ ३७ ॥**

हे अर्जुन, समिद्धः सम्यक् प्रदीपितः अग्निर्वह्निरेधांसि बहून्यपि काष्ठनि यथा यादृशरीत्या भस्मसात्कुरुते भस्मीकरोति तथा तेनैव प्रकारेण ज्ञानाग्निः शिवज्ञानरूपाग्निरपि सर्वकर्माणि सर्वाण्यपि पापानि भस्मसात्कुरुते संपूर्णतया विनाशयति। अग्निना काष्ठानां नाशे यथा काष्ठबाहुल्ये सत्यपि नाग्निः क्षीणो भवति ; किन्तु वर्धते तद्वदेव ज्ञानमपि संपूर्णतया मलपाशं नाशयेत् ; न तु क्षीणं भवेदित्याशयः। "ज्ञानप्रभावाद्धिनिहन्यतेऽज्ञता ज्योतिर्बलादेव तमो विहन्यते। ऋतप्रभावदनृतं विहन्यते तथैव लोहः परुषप्रभावात् ॥ भवो मदीयो हत एव देव महानुभावैः शरणैश्च सङ्गात्।"

इति ज्ञानिनस्सङ्गाद्भवपाशनाशं शरणगीता हृदयङ्गमया रीत्या प्रतिपादयति ॥

**न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ।**
**तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥ ३८ ॥**

कथं तादृशप्रभावो ज्ञानस्य संभवेदित्यत्र समाधानमाह । ज्ञानेनोक्तशिवज्ञानेन सदृशं तुल्यमन्यत्पवित्रं वस्तु मलदोषनिवारकं इहास्मिन् जगति नहि विद्यते नास्त्येव । तच्च ज्ञानं योगसंसिद्धः पूर्वोक्तकर्मयोगानुष्ठानेन संपूर्णाधिकारवान् महता कालेन स्वस्मिन्नेव लभते । अतः चिराभ्याससाध्यमिदम् ॥

**श्रद्धावान् लभते ज्ञानं तत्परः संयतेन्द्रियः ।**
**ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥ ३९ ॥**

तादृशज्ञानं कथं प्राप्यत इत्यत्राह । श्रद्धावान् "श्रद्धामयोऽयं पुरुषः यो यच्छ्रद्धः स एव सः" इति न्यायेन तादृशज्ञानप्राप्तये श्रद्धालुरेव जीवात्मा प्रभवति ; न तु श्रद्धाहीनः । श्रद्धालुत्वेऽपि तदनुगुणप्रयत्नाद्यभावे शिवज्ञानं न लभ्येत इत्यतः तत्पर इत्याह । तत्परस्तादृशज्ञानैकसाधनप्रवणो जीवस्तल्लभत इत्यर्थः । तत्परत्वेऽपि विषयचपलश्चेत् जीवस्तन्न लभते इत्यतः संयतेन्द्रिय इत्युक्तम् । लौकिकविषयविमुखस्यैव तत्सिद्धिरिति भावः । एतादृशं ज्ञानं लब्ध्वा परां शान्तिं परिपूर्णशान्तिरूपं मोक्षमचिरेण शीघ्रमेव अधिगच्छति प्राप्नोति जितेन्द्रियः श्रद्धावान् साधकः ॥ ३९ ॥

**अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।**
**नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥ ४० ॥**

स्वोक्तार्थे विश्वासहीनस्य संशयवतो वा दुर्गतिरेव संभवेदित्याह । अज्ञ उक्तमर्थमजानन् यो वर्तते, जानन्नपि अश्रद्दधानः श्रद्धारहितो यो वर्तते, अथवा उक्तार्थे संशयात्मा सन्देहस्वभावो यः एते सर्वेऽपि विनश्यन्ति । ते नह्यात्मकल्याणं साधयितुं प्रभवेयुः । तत्रापि अज्ञाऽश्रद्दधानापेक्षया संशयात्मनो महन्नष्टमित्याह नायं लोक इति । अज्ञाऽश्रद्दधानौ हि एतद्विचारं परित्यज्य लौकिके वा मार्गे संचरन्तौ लौकिकं वा सुखं अनुभवेताम् ; संशयात्मनः

सन्देहप्रकृतिकस्य तु 'इतो भ्रष्टस्ततो भ्रष्टः' इति न्यायेन अयं लोकः ऐहिक-सुखमपि नास्ति, अत्रापि समाधानं न वर्तते ; न परस्तथैव परलोकसुखमपि न भविष्यति। आहत्य न सुखं–कुत्रापि सः सुखं त विन्दते। विश्वासरहितस्य जीवस्य दुर्गतिं शरणगीता सम्यगावेदयति। "विश्वासहीनाय गुरुर्न विद्यते न जङ्गमो नैव तयोः प्रसादः। न चापि शान्तिं लभते स मानवः। तथैव लिङ्गं न कदापि विन्दते॥ विश्वासयुक्तः पुनरेव संशयं यदा हि धावत्यथ सूतकी भवेत्। तदैव देवो विजहाति तादृशं देवाद्वियुक्तस्तु विभाव्यते मृतः॥ न चैव तस्याभ्युदयादियोगः न संशयात्मा सुखमश्नुते भुवि॥" इत्येवं श्रद्धारहितस्य संशयात्मनश्च जीवस्य संभवन्ती विपत्परंपरा अतीव विषमा भयङ्करा चेति सर्वानुभवसिद्धमेतत्। अध्यात्मक्षेत्रे निरतिशयं सुखमधिगतो बसवार्यः श्रद्धारहितान् जनानवलोक्य स्वाशयमेवं निवेदयति "न विश्वस-न्त्येव जनास्तु देवं तथापि तं नित्यमुपाह्वयन्ति। कर्तुं च विश्वासमपार-यन्तस्तथापि मोहाद्विचरन्ति मन्दाः॥ विश्वासपूर्वं यदि वाह्वयेत तदा कुतो नोत्तरयेच्च देवः। विश्वासहीनो यदि देवमाह्वयेत्सद्यः पतेत्तत्कृतनिग्रहांकुशः॥" इति। एवं विश्वासवानेव जीव इहामुत्र च योग्यवर्तनेन सदित्यभिख्यां लब्ध्वा शिवप्रियो भवेदिति सत्यम्॥ ४०॥

योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम्।
आत्मवन्तं न कर्माणि निबध्नन्ति धनञ्जय॥ ४१॥

अतः कथं वर्तितव्यम्। बन्धरहितं यथा तथात्र कथं निवसेन्मानवो-गौरवेणेत्यत्राह। हे धनञ्जय अर्जुन, योगसन्यस्तकर्माणं योगेनोक्तकर्म-योगेन शिवप्रियेन संन्यस्तानि शिवार्पितानि कर्माणि, सर्वे इन्द्रियविषयाः येन सः तादृशम्। पूर्वोक्तरीत्या फलाभिलाषस्वकर्तृत्वत्यागपूर्वकं असङ्गिना अङ्गनाम्ना शिवदीक्षासंस्कृतेन निर्मलेन जीवेनानुष्ठितानि कर्माणि शिवार्पि-तानि भूत्वा तं न बध्नन्ति। तथैव ज्ञानसंछिन्नसंशयं ज्ञानेन तत्त्वज्ञानेन संछिन्नो विनाशितस्संशयो येन सः तादृशमित्यर्थः। अत एवात्मवन्तम-

प्रमत्तं सदा जागरूकतया व्यवहरन्तं कर्माणि वर्णविहितानि युद्धादिकार्याणि न निबध्नन्ति निबद्धुं न पारयन्ति । एवं रीत्या कर्म कुर्वतः कर्मफलापेक्षा-भावात् तानि कर्माणि न संसारबन्धमापादयन्तीत्यर्थः । एवं परहितार्थं यद्यदाचर्यते तदेव हितावहं नित्यसुखदायकं सत् कायकमिति पवित्रनाम्ना व्यवह्रियते । अनया दृष्ट्या यदि कर्तव्यमनुष्ठीयते तदैव जीवनं निरामयं भवेत् । "वृत्तिस्तदा कायकतामुपैति यदा तु सद्भक्तसमाश्रिता स्यात् । यदा गुरूणां चरजङ्गमानां सेवार्थमेवोपनिबध्यते चेत् । देहं मनश्चैव निपीड्य धर्मादाहृत्य किञ्चित्तत एव सेवां समाचरेद्यः परमस्स भक्तस्तदीयपादोऽस्तु मदीयमस्तके ॥" इति शरणगीतायां बसवार्यः सद्भक्तैरनुष्ठितां सर्वामपि वृत्तिं कायकनाम्ना व्यवहरति । एवं कायकमहत्त्वं यदि सर्वैरभ्युपगम्येत तदा विपदो न संभवन्त्येव । कायकनिरताः पुरुषाः स्त्रियश्च सदा सन्तुष्ट-चित्ता भवेयुः । "सदा सन्तुष्टचित्तानां संपदस्तु पदे पदे । सदाऽसन्तुष्ट-चित्तानां विपदस्तु पदेपदे ॥" इत्यनुभविनो वदन्ति । एवं सर्वरोगनिवारिका कायकदृष्टिस्सर्वैरपि वर्धिष्णुभिरभ्यसनीया । इदमेव भवरोगनाशकं परमौषधम् ॥

**तस्मादज्ञानसंभूतं हृत्स्थं ज्ञानासिनाऽत्मनः ।**
**छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥ ४२ ॥**

हे भारत, तस्मात्कारणात् अज्ञानसंभूतं अविवेकाज्जातं हृत्स्थं तव हृदये विद्यमानमात्मनः स्वस्य तव एनं संशयं 'कथमिदं युद्धमहं कुर्याम्' इत्यादि-रूपं सन्देहं ज्ञानासिना ज्ञानं "मदन्तरङ्गे नियामकतया वसन् परमेश्वर एव तदीयसेवकेन मया तदीयेन्द्रियसहकारेण लोककल्याणाय यद्यदभीप्सितं तत्सर्वमपि कारयति न ममात्र पापसंपर्कः" इत्यादिकं तत्त्वज्ञानं तदेव असिः खड्गः । छेदनसाधनत्वात् ज्ञानं असिरित्युच्यते । छित्वा नाशयित्वा योगं शिवप्रियमुक्तकर्मयोगमातिष्ठ समाचर । अत उत्तिष्ठ इदानीं युद्धाय स्वकाय-कनिर्वाहाय उत्तिष्ठ । 'रथोपस्थ उपाविशत्' इत्युक्तत्वात् अर्जुनमुत्थापयितुं कार्यनिरतं च कर्तुमुद्देशपूर्वकं कृष्णः उत्तिष्ठेति पदमत्र प्रयुङ्क्ते ॥

## पञ्चमाध्यायः

एवं भगवता कर्मयोगस्वरूपे प्रतिपादितेऽपि 'श्रेयान् द्रव्यमयाद्यज्ञात् ज्ञानयज्ञः परन्तप' इत्येवं ततोऽपि ज्ञानयोगस्य प्राशस्त्याभिधानात्, अथाप्यन्ते 'त्यक्त्वैनं संशयं योगमातिष्ठ' इति, 'युद्धं कुरु' इति च कथनात् पुनस्संशयग्रस्तोऽर्जुन उवाच—

**संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि ।**
**यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥ १ ॥**

हे कृष्ण, कर्मणां संन्यासं भगवदर्पणरूपं ज्ञानयोगमेकदा शंससि श्रेयान् द्रव्यमयाद्यज्ञादित्यादिना । पुनश्च योगं कर्मयोगमपि शंससि 'नायं लोकोऽस्त्ययज्ञस्य' इत्यादिना, एतयोर्मध्ये सुनिश्चितमेकं श्रेयस्साधनं यत् तत् मे मह्यं ब्रूहि निश्चित्य वद किं मयाधुना कर्तव्यमिति । एतद्दशसंशयपरिहारेणैव निश्चयज्ञानमुदेति मयि ॥

**संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।**
**तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यते ॥ २ ॥**

एवं पृष्टो भगवानुवाच । संन्यासः कर्मणां त्यागः स्वकर्तृत्वत्यागः शिवप्रियो ज्ञानयोग एकः, एवं कर्मयोगश्च कायकभावनया कर्मानुष्ठानरूपयोगश्चापरः इत्युभावपि निःश्रेवसकरावेव निःश्रेयसं साधयत एव ; उभावपि मोक्षहेतुभूतावेव । तु परं तु तयोर्मध्ये कर्मसंन्यासात् भगवते कर्मफलसमर्पणरूपात् ज्ञानयोगात् कर्मयोग एव श्रद्धया कर्तव्यदृष्ट्या निरभिमानेन कर्मानुष्ठानरूपः कर्मयोग एव सर्वदा मनोनैर्मल्यसंपादनद्वारा सन्तोषप्रकृतिकत्वाविष्करणाद्विशिष्यते श्रेष्ठ इत्यनुभविनो वदन्ति ॥

**ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न कांक्षति ।**
**निर्द्वन्द्वो हि महाबाहो सुखं बन्धात्प्रमुच्यते ॥ ३ ॥**

कर्मयोगस्य श्रेष्ठत्वे हेतुमाह । स एव नित्यसंन्यासी यः न द्वेष्टि कुत्रापि द्वेषं न करोति न कांक्षति न किंञ्चिदपि लौकिकं फलमिच्छति ।

एवमिच्छाद्वेषरहितः फलापेक्षादिकं विना कर्म कुर्वन् यः स एव नित्यसंन्यासीत्यर्थः। हे महाबाहो अर्जुन, निर्द्वन्द्वः इच्छाद्वेषरहितः सुखदुःखयोः समत्वभावनश्च यः सः बन्धात् संसारपाशात् सुखं प्रमुच्यते मुक्तो भवति। तस्य तावत् सर्वत्र परमात्मैव दृश्यते। तेन क्रियमाणः सर्वोऽपि शिवपूजैव संपद्यते। तस्य वर्तनमेवं वर्णयति शरणगीता। 'मर्त्यो हि लोकः परमेश्वरस्य लीलाविनोदाय विनिर्मितं गृहम्। अत्रैव योग्या य इहाद्य दृष्टाः तेऽमुत्र योग्याः खलु सङ्गमार्य ॥ ये त्वत्र नार्हास्त्वभवन्मनुष्यास्ते तत्र नार्हा भवितुं समर्थाः। मनुष्यलोकस्तु विभिन्न एव सुपर्वलोकादिति नैव सत्यम् ॥ पुण्यं पापं यद्धि लोके प्रदृष्टं तत्तत्सर्वं चित्तसंकल्पजं हि। उक्तादन्यं नास्ति लोके हि पुण्यं पपं वेति प्रायशः सिद्धमेतत् ॥" इति। एवं सद्वर्तनशीलः कर्मयोग्येव ज्ञानयोग्यपेक्षया श्रेष्ठ इत्यनुभविनो वदन्ति। यतः कर्मयोगी सर्वदा कर्माण्याचरन्नपि इच्छाद्वेषरहितो नित्यसुखी वर्तते। तस्य मतिस्तु दुर्मार्गे न कदापि प्रवर्तेत ॥

**सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः।**
**एकमाप्यास्थितः सम्यगुभयोर्विन्दते फलम् ॥ ४ ॥**

सांख्ययोगौ ज्ञानयोगकर्मयोगौ उभावपि पृथक् परस्परमत्यन्तविलक्षणौ परस्परं भिन्नफलप्रदौ चेति बाला अज्ञानिनो वदन्ति न तु पण्डितास्तत्त्वानुभविनो यथार्थतत्त्ववेत्तारः। यतः एकमपि अनयोरन्यतरमपि आस्थितः अनुतिष्ठन् उभयोः फलं विन्दते। ज्ञानयोगी यत्फलं लभते तदेव कर्मयोग्यपि लभते। एवं कर्मयोगिना यत्फलं लभ्यते तदेव ज्ञानयोग्यपि लभते। उभयोरपि मोक्षसाधनत्वात् एकतरानुष्ठानेनैव मोक्षो लभ्यते। एवं तयोः परस्परसंबधसत्त्वात्, एकस्यापरत्र समन्वयाच्च तयोर्भेदं न कल्पयन्ति पण्डिताः। कर्मयोगे ईश्वरप्रीत्यर्थव कर्माचरणमावश्यकम्। तथैव "सर्वव्यापको महादेव एव स्वशक्त्यंशभूतेन मानवदेहेन स्वचेतनांशद्वारा सर्वं कारयति"। इत्येतद्भावनोत्पादके ज्ञानयोगेऽपि ईश्वरसंबन्धो वर्तत एव। एवं द्वयोरपि

मानवकल्याणसाधनत्वात् पण्डितैस्समदृष्टिरेवाचर्यते ॥ ४ ॥

**यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ।**
**एकं सांख्यं च योगं च यः पश्यति स पश्यति ॥ ५ ॥**

एकेनैव उभयोः फलं कथं संभवेदित्यत्राह—सांख्यैर्ज्ञाननिष्ठैर्यत्स्थानं प्राप्यते तदेव योगैरुक्तकर्मयोगनिष्ठैरपि गम्यते प्राप्यते। उभयोः फलभूते मोक्षे न हि भेदोऽस्ति। शक्तिसङ्कोचरूपाऽणवमायेयकार्मिकमलपरिहारसमकाल एव इच्छाज्ञानक्रियाशक्तिविकास अनुभूयेत। अत्र न कोऽपि भेदोऽस्ति। एवमुभयोः फलैक्यात् एकेनैव उभयोः फलं प्राप्नोति साधक इत्यर्थः। एवमेकफलत्वात् तयोः सांख्यं ज्ञानयोगं, योगं कर्मयोगं च एकं फलैकत्वादेकमेवेति यः पश्यति जानाति स एव पश्यति सम्यक् तत्त्वं विजानाति। उभयोः फलभेदं यो जानाति सः ज्ञान्येव भवितुं नार्हति। ऐक्यदृष्टिरेव ज्ञानी संपद्यते। भेददृष्टिस्तु कर्मी भूत्वा दुःखभाग्भवति ॥ ५ ॥

**संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ।**
**योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति ॥ ६ ॥**

एवं तयोरेकत्वे 'कर्मसंन्यासात् कर्मयोगो विशिष्यते' इति कर्मयोगस्य श्रेष्ठत्वं कथमुक्तमित्यत्राह। हे महाबाहो, संन्यासस्तु वास्तविकतया कर्मणां संन्यासरूपो ज्ञानयोगस्तु अयोगतः कर्मयोगानुष्ठानमन्तरा आप्तुमनुभवितुं दुःखं न शक्यम्। कर्मणामनुष्ठानेन चित्तशुद्धौ जातायामेव हि ज्ञानयोगे अधिकारो लभ्येत साधकैः। न तु कर्मणां त्यागमात्रेण ज्ञानयोगः सिध्येत्। कर्माणि परमात्मनैव क्रियन्त इति ज्ञानादेव मानवो नहि निर्मलो भवेत्। तानि सर्वाणि प्रशान्तेन मनसा कृत्वा तद्गतफलानि परमात्मने समर्पणीयानि। अयमेव कर्मयोगः। एतस्य संबन्धो ज्ञानयोगेऽपि वर्तत एव। एवं योगयुक्तस्तु मुनिः परमेश्वरे फलसमर्पणारूपकर्मयोगेन युक्त एव कर्मयोगी न चिरेण शीघ्रमेव ब्रह्म परमात्मनं अधिगच्छति प्राप्नोति। अतः कर्मसंन्यासात् कर्मयोगो विशिष्यते ॥ ६ ॥

**योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ।**
**सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥ ७ ॥**

कर्मयोगनिष्ठस्य जीवस्य वैशिष्ट्यं प्रशंसयन्नाह । योगयुक्त उक्तकर्मयोगनिष्ठः तेन विशुद्धात्मा विशुद्धान्तःकरणः तेन विजितात्मा विजितान्तःकरणः, जितेन्द्रियः जितबाह्येन्द्रियः सर्वभूतात्मा सर्वेषां ब्रह्मादिस्तंबपर्यन्तानां भूतानां आत्मभूतः आत्मा चेतनो यस्य सः सर्वत्र समदर्शीत्यर्थः । एतादृशो योगी कर्म कुर्वन्नपि न लिप्यते न कर्मफलसंस्पृष्टो भवति , अपि तु परशिवब्रह्मैव संपद्यते । स सर्वदा परहितचिन्तक एव सन् नित्यसुखी संपद्यते । एतादृशस्य कर्मयोगिनो महत्त्वं शरणगीतायामेवं वर्ण्यते । "मनो निपीड्याथ गृहं विनाश्य त्रिस्रोतसस्त्वंभसि सन्निमज्य । किं विन्दसे मानव पुण्यलेशं पापीव गीर्वाणसुखं हि कांक्षन् ॥ गङ्गान्तिके यद्यवतिष्ठते श्लैः किं त्यज्यते तेन कळङ्क एषः ? । ततश्च योऽन्यस्य मनो न पीडयन् न नाशयत्येव गृहं कदापि । स एव धन्यो भुवि पावनश्च तवैष योगः कपिलार्यसिद्ध ॥" इति । एवं कर्मयोगी न कदाप्यन्यस्य हिंसामुत्पादयति, परंतु सर्वदा सर्वानप्यात्मौपम्यदृष्ट्या प्रीणयन् सार्वजनिकं हितमेव साधयति । अतः कर्मयोग्येव ज्ञानयोग्यपेक्षया विशिष्यते ॥ ७ ॥

**नैव किञ्चित्करोमीति युक्तो मन्येत तत्त्ववित् ।**
**पश्यन्शृण्वन् स्पृशन् जिघ्रन् अश्नन् गच्छन् श्वसन् स्वपन् ॥८॥**

**प्रलपन्विसृजन् गृह्णन् उन्मिषन्निमिषन्नपि ।**
**इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥ ९ ॥**

**ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।**
**लिप्यते न स पापेन पद्मपत्रमिवांभसा ॥ १० ॥**

कर्म कृत्वापि तस्य लेपनं यथा न स्यात्तत्प्रकारमेवात्र विवृणोति । युक्तः समाहितचित्तस्तत्त्ववित् आत्मयाथार्थ्यविन्नरो नैव किञ्चित्करोमीति

"अहं न किञ्चित्करोमि, मम कुत्राप्यपेक्षाया अभावात् ; लोककल्याणाय यदावश्यकं तत्सर्वमपि देहस्थः परमेश्वरः कारयति" इति मन्येत चिन्तयेत्। अत एव पश्यन्वा, शृण्वन्वा, जिघ्रन्वा, अश्नन्वा, गृह्णन्वा, उन्मिषन्निमिषन्वापि एतादृग्बहुविधकार्याणि कुर्वन्नपि इन्द्रियाणि चक्षुरादीनि इन्द्रियार्थेषु रूपादिषु तत्तद्विषयेषु वर्तन्ते व्यापृता भवन्तीति धारयन् निश्चयं कुर्वन् सर्वाणि कर्माणि ब्रह्मणि देहे सर्वत्र व्यापृते परमेश्वर एव आधाय समर्प्य, फले तत्कर्मप्रयुक्ते फले आसक्तिं त्यक्त्वा यः करोति कर्माणि करोति सः पद्मपत्रं कमलपत्रं अंभसेव जलेनेव पापेन कर्मफलरूपेण न संबध्यते। कर्मफलसंबन्धं विहाय ईश्वरप्रीत्यर्थमेव सकलकर्माचरणरूपत्वादयं कर्मयोगः श्रेष्ठ इति सर्वैः प्रशंस्यते। तस्य वर्तनं शरणगीतायामेवं वर्ण्यते। "अयीति वाचा प्रवदेद्यदा नरः तदैव तत्रैव हि नाकलोकः। रेशब्दसंबोधयितुर्जनस्य तदैव तत्रैव हि कालसूत्रम् ॥" इति। ईश्वराराधनभावनया सर्वाण्यपि कर्माणि श्रद्धया निर्वहतः कर्मयोगिनः फलार्पणबुद्धिः स्वयमेवोदेति। एवं सर्वप्रीणनात्पवित्रं जीवनं निरुह्यते कर्मयोगिना। अतः कर्मयोगी सद्भक्तः कर्मयोगीश्वरस्य परमात्मनः प्रियो भूत्वा माहेश्वरस्थितिं लभते ॥ १० ॥

**कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि ।**
**योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये ॥ ११ ॥**

एवं कर्मयोगिनि सार्वजनिकहितदृष्ट्या क्रियमाणानां कर्मणां अलेपमात्रतैवेति न किन्तु फलमप्यस्तीत्याह। कायेन देहेन, मनसा अन्तःकरणेन बुध्या च केवलैः ममकारवर्जितैरिन्द्रियैः चक्षुरादिभिरपि। केवलशब्द इतरत्रापि संबध्यते। केवलेन कायेन दग्धपटवस्थितेन देहेन, केवलेन निर्लिप्तेन मनसा, केवणया बुद्ध्या सर्वत्राहङ्करममकारवर्जितया निर्विकारय मत्या। योगिनः कर्मयोगिनः सङ्गं त्यक्त्वा फलापेक्षां विनैव आत्मशुद्धये आत्मनैर्मल्यसंपादनायैव कर्म कुर्वन्ति। न तु दैहिकसुखप्राप्तीच्छया ते कर्मव्यापृता भवन्ति ॥ ११ ॥

**युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् ।**
**अयुक्तः कामकारेण फले सक्तो निबध्यते ॥ १२ ॥**

एवं कर्मयोगाचरणे क्रमेण मोक्ष ; तदकरणे बन्धश्च नियत इत्याह—युक्तः उक्तकर्मयोगनिष्टः कर्मफलं त्यक्त्वा कर्मफलापेक्षां विहाय तस्मादेव कारणात् नैष्ठिकीं स्थिरां शान्तिं मोक्षं आप्नोति प्राप्नोति । अयुक्तस्तु तादृशं कर्मयोगाख्यरहस्यमजानन्पुरुषः कामकारेण स्वेच्छाचारेण कर्म कुर्वन् फले तत्तत्कर्मफले सक्त आसक्तो निबध्यते बन्धपरवशो भवति । फलासक्त्या कर्म कुर्वन् कर्मीति व्यवह्रियते । फलाभिसन्धिं विना सर्वाण्यपि कर्माणि श्रद्धया ईश्वरप्रीत्यर्थमाचरंस्तु कर्मयोगीति व्यवह्रियते । तयोर्वैलक्षण्यमत्र निरूपितम् । कर्मी दुःखभाग्भवति ; कर्मयोगी तु नित्यतृप्तः सदा सुखी वर्तते । एवं सर्वे मानवाः कर्मयोगरहस्यं विदित्वा कर्मयोगिनो भवेयुरिति भागवानपेक्षते ॥१२॥

**सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी ।**
**नवद्वारे पुरे देही नैव कुर्वन्न कारयन् ॥ १३ ॥**

यस्तु तत्त्वदर्शी कर्मयोगी स तु सर्वकर्माण्यपि मनसा संन्यस्य स्वाभिमानरूपं संबन्धं त्यक्त्वा नवद्वारे पुरे चक्षुर्द्वयं, नासाद्वयं, मुखं, पायूपस्थे इति नवद्वारविशिष्टे पुरे भौतिकदेहे विद्यमानो देही देहस्वामी वशी जितेन्द्रियो जीवः नैव कुर्वन् स्वयं यत्किञ्चित्फलोद्देशेन किञ्चिदपि कर्म साक्षात्स्वयमकुर्वन् नैव कारयन्, परंपरया अन्यद्वारा वा तादृशकर्माणि अकारयन्नेव, सुखं निस्सङ्गत्वेन सुखदुःखादिद्वन्द्वपीडारहितत्वात् सुखेन शान्त्यैव आस्ते वसति । तादृशो जीवस्य न कदापि शान्तिभङ्गस्सञ्जायेत ; सुखहानिरपि न संभवेत् । अयमेव नित्यसुखयोग इत्यनुभविनो वदन्ति ॥ १३ ॥

**न कर्तृत्वं न कर्माणि लोकस्य सृजाति प्रभुः ।**
**न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥ १४ ॥**

'नैव कुर्वन्न कारयन्' इत्येतदेव विवृणोति । प्रभुः एतन्नवद्वारपुरस्य राजभूत आत्मा लोकस्य जीववर्गस्य कर्तृत्वं न सृजति, तैर्निरुह्यमानानि कर्माणि

वा न सृजति ; तथैव कर्मफलसंयोगं कर्मजन्यफलप्राप्तिं वा न सृजति वस्तुतस्तु विशुद्धोऽयमात्मा सर्वव्यापको निर्मलः परमात्मा न कस्यापि करणं संपद्यते। एवं चेत् लोके प्रवर्तमानस्य सर्वस्यापि कार्यजातस्य किं कारणं भवेदित्याशङ्कायां 'स्वभावस्तु प्रवर्तते' इत्यत्र समाधानमुच्यते। स्वभावो नाम प्रकृतिः, परमात्मनिष्ठा शक्तिर्मायाभिधा। परमात्मनः सान्निध्येन सा सर्वमपि कार्यं साधयति। "प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः। अहङ्कारविमूढात्मा कर्ताहमिति मन्यते" इति पूर्वमेव आत्मानः कुत्रापि स्वतः कर्तृत्वं न वर्तत इत्युक्तम्। प्रकृतिगुणाः सत्त्वादयः भगवदिच्छानुरोधेन सर्वमपि कार्यं साधयन्तीति भावः। परमात्मा देहस्थोऽपि प्रकृतिकार्यस्य प्रेक्षको भूत्वा उदासीनतया वर्तते ; जीवात्मा तु प्रकृतिसंबद्धस्सन् स्वमेव सर्वस्यापि कर्तारं भावयति। अयमेव प्रकृतिसङ्गो यथार्थविवेचनशून्यतया जीवं बध्नाति। अविवेकमूलोऽयं बन्धः सर्वस्याप्यनर्थस्य मूलम् ॥ १४ ॥

नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः।
अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥ १५ ॥

विभुरयं परमात्मा कस्यचिदेकस्य स्वांशभूतस्यापि प्रकृतिसंबन्धात्सहजतया भिन्नस्य कस्यापि जीवस्य। जीवानामानन्त्यात् कस्यापीति निर्दिश्यते। पापं तेनाभिमानेन कृतं नादत्ते न स्वीकरोति। सर्वत्रोदासीनतयैव साक्षिरूपेण तिष्ठन् सः जीवेन सह सर्वेष्वपीन्द्रियेषु वर्तत एव। तथापि सः सहजतया जीवकर्मणः फलं न किञ्चिदप्यादत्ते। तर्हि लोके दृश्यमानः सर्वोऽपि व्यवहारः किन्निबन्धन इत्यत्राह अज्ञानेनेति। ज्ञानं देहे परमेश्वरः स्वस्मिन्नन्तर्यामितया वर्तत इत्याकारकज्ञानं विवेकः अज्ञानेन प्रकृत्युत्पादिताहङ्काराभिमानमूलकाऽविवेकेन आवृतमाच्छादितं वर्तते। देहोऽहंभावनैवात्राज्ञानम्। चिदानन्दस्वरूपो जीवः त्रिगुणात्मकमात्मानं मनुते। अतः संसारचक्रभ्रमणनिरताः प्राणिनः मुह्यन्ति "अहं करोमि, कारयामि, भोक्ष्ये, भोजयामि, ददामि, दापयामि", इत्येवमादिरूपतया मोहपरवशा भवन्ति। "मया कृतं कार्यमिदं त्विहेति

संचिन्तयन्वै लभते शिवाग्रहम् । लिङ्गेऽर्पितं यन्न च वाच्यमेतद्वर्धिष्णुना लिङ्गपदाभिकांक्षिणा ॥ यदर्पितं जङ्गम एव भक्त्या तदप्यवाच्यं शिवभक्तिकामिना । अहं ह्यकार्षं किल कार्यमेतदित्येव चित्ते न निवेश्यते चेत् ॥ इष्टं प्रदद्यात्खलु सङ्गमेशः शिष्टाय चेष्टाय चरात्मकाय ॥" इति शरणगीता जीवेषु कर्तृत्वभावनां परिहर्तुं निरहङ्कारतामुत्पादयितुं स्वैः सह स्वोद्धारार्थं तिष्ठते परमेश्वराय सर्वं कर्मफलं भक्त्या समर्पयितुं च तान् हृदयङ्गमया रीत्या प्रेरयति । एवं विवेकिनः कर्तृत्वभावनां परित्यज्य परमात्मसङ्गं मनसि भावयित्वा तत्प्रीतये युक्त्या रीत्या व्यवहर्तुं निपुणा वर्तन्ते । तादृशां शिवानुभविनामनुभवामृतं सर्वदा शृण्वन्तो मानवास्तदादर्शं सम्यक् विदित्वा तथैवाचरन्तः सुखिनो भवेयुरिति भगवानपेक्षते ॥ १५ ॥

**ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।**
**तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥ १६ ॥**

येषां जन्तूनां जीवानां आत्मनः स्वस्य स्वान्तर्गतस्य परमेश्वरस्य च अज्ञानं देहात्मभावनामयः स्वरूपवैलक्षण्यसंबन्धाऽपरिचयः ज्ञानेन तयोर्वैलक्षण्यपरिचयपूर्वकानुभवेन नाशितः परिहृतो भवति तेषां तत् ज्ञानं परं तत्त्वं देहे विराजमानस्य परमात्मनः स्वरूपं आदित्यवत् सर्वप्रकाशकसूर्यवत् सूर्यो लौकिकान् सर्वान् पदार्थान् प्रकाशयति तद्वत् प्रकाशयति परतत्त्वपरिचयं संपादयति । "नायमात्मा प्रवचनेन लभ्यः न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष विवृणुते तनूं स्वाम् ॥" इति कठोपनिषदि श्रूयते । यः कोऽपि पुरुषः हठादेवाविवेकेन आत्मज्ञानं लब्धुं न पारयति । यः निर्मलेन मनसा, प्रशान्तया बुद्ध्या च निर्मले हृदये गुरुकृपया अन्वेषयति तस्यैव परमात्मा स्वस्वरूपमावेदयति । यः स्वं स्वनियामकं च जानाति स एव स्वानुभवेन मोदते । "अनुभूतिं विना मूढः वृथा ब्रह्मणि मोदते" इत्यभियुक्तोक्त्या यः गुरुप्रसादलब्धज्ञानः स्वयमेव स्वहृदयं प्रविशति तस्यैव ईश्वरानुग्रहः सिद्ध्यति । स एव फलं विन्दते च । तदानीमेव

उक्तपरमार्थतत्त्वं सम्यग् ज्ञातं भवति साधकेन । नो चेत् स इहपरज्ञानविमूढ सर्वतो भ्रष्टो भवति । अतः साधकेन स्वावरणभूतमलपाशरूपमज्ञानं प्रथमं परिहर्तव्यम् । तदर्थमेव तेन आत्मसाक्षात्कारवान् कश्चन गुरुरन्वेषणीयः। तदुपदेशं विना न कोऽपि जीवः देहे परतत्त्वं ज्ञातुं प्रभवेत् ॥ १६ ॥

**तद्बुद्धयस्तदात्मानः तन्निष्ठास्तत्परायणाः ।**
**गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥ १७ ॥**

स्वपरज्ञानमेवात्र प्रशंसति । तद्बुद्धयः तस्मिन् उक्ततत्त्वज्ञान एव विद्यमाना बुद्धिर्येषां ते, तदात्मानः तस्मिन् तत्त्वज्ञान एव विद्यमानः आत्मा अन्तःकरणं येषां ते, अत एव तन्निष्ठाः तस्मिन्नेव निष्ठा श्रद्धा येषां ते, अत एव च तत्परायणास्तदेकप्रवणाः, ते ज्ञाननिर्धूतकल्मषाः उक्ततत्त्वज्ञानेन नाशितसर्वपापाः एवं निर्मलाः । "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन" इति शिवज्ञानस्य सर्वमलपाशरूपाज्ञाननाशकत्वं प्रतिपादितमेव । अपुनरावृत्तिं मोक्षं गच्छन्ति प्राप्नुवन्ति ; तादृशो ज्ञानिनोऽत्रैवास्मिन् प्रसादकाये निर्मलमनो-बुद्धियुक्ते हृदये आत्मप्रकाशमनुभवन्ति । तादृशप्रकृतिपुरुषविवेकदर्शिनामेव पुनर्जन्मनिवृत्तिः सुगमा भवेत् । नो चेत् देहमेवात्मानं भावयित्वा येऽहङ्कारेण देहसौख्यमेव जीवितध्येयं परिकल्प्य लोके व्यवहरेयुस्ते पुनः पुनः जनन-मरणरूपसंसारचक्रे भ्रमन्त्येव । अतो विवेकं लब्धुं स्त्रीभिः पुरुषैश्च श्रद्धया प्रयतितव्यमित्याशयं स्पष्टयति भगवान् ॥ १७ ॥

**विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि ।**
**शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥ १८ ॥**

आत्मज्ञानिनां स्थितिप्रकारमत्र निवेदयति । पण्डिताः उक्तविवेक-वन्तः स्त्रीपुंदेहान्तर्गता जीवाः विद्याविनयसंपन्ने विद्यया विनयेन च युक्ते श्रेष्ठे ब्राह्मणे ब्रह्मज्ञानिनि, गवि परमपवित्रायां धेन्वां, हस्तिनि महाबले गजे वा, शुनि अत्यन्यनीचे प्राणिनि श्वपाके मांसाहारिणि अत्यन्तनीचे मनुष्ये

वा समदर्शिनः समवर्तिनः समाह्वयस्य च परमात्मनो दर्शनवन्तो भवन्ति । जीवजीवभेदस्य प्रकृतिकृतत्वात् सहजत्वेऽपि परमात्मनस्तु सर्वत्र समदृष्ट्या अवस्थानात् तस्यैव दर्शनमधिगम्यते पण्डितैः । अतिनीचेष्वत्युत्तमेषु च प्राणिषु परमेश्वरोऽङ्गुष्ठपरिमित एव वर्तते । साधुषु पापिष्वपि सः समानदृष्ट्यैव निवसति । "न मे द्वेष्योऽस्ति न प्रियः" इति स एव वदति । एवं ये समभावेन स्थितं परमशिवमेव सर्वत्र पश्यन्ति त एव ज्ञानिन उच्यन्ते । तेषु आत्मौपम्यदृष्टिः सहजतया विलसति । एवं यो लोके व्यवहरति स निर्लिप्त एवास्ते । तस्य तावत् स्वदेहे परमात्मविलासस्तु एवमनुभूयते । अन्तःकरणे बुद्धिः, चित्तं, अहङ्कारः, मनः, जीवः इति चिदचिदात्मकं वस्तुपञ्चकं सर्वेष्वपि वर्तते । तेषु पञ्चस्वपि परमात्मप्रकाशः सुसंघटित एव वर्तते । तत्सान्निध्यादेव तानि सर्वाणि कार्यव्यापृतानि भवन्ति । तेषु सदा निलिप्ततया अव्यक्ततया च विराजमानः परमात्मा एक एव । सूत्रे मणिगणा इव तस्मिन्नेकस्मिन्नेव तानि पञ्च संघटितानि वर्तन्ते । तथा वर्तमानस्य परमात्मनोऽनुभव एवात्र समदर्शनमिति निर्दिश्यते कृष्णपरमात्मना । ब्राह्मणपदेन बुद्धिः, गोपदेन चित्तं, हस्तिपदेन अहङ्कारः, श्वपदेन मनः, श्वपाकपदेन जीवः इत्येतानि अन्तःकरणचतुष्टयं जीवश्चात्र पञ्च निर्दिश्यन्ते । तेषु सर्वेष्वप्यनुस्यूततया वर्तमानस्य परमात्मनो दर्शनेन ज्ञानिनः संसारपाशान्मुच्यन्ते । इयमेवाध्यात्मदृष्टिर्यदि व्यावहारिकैर्जनैः संपाद्येत तदा जीवनं निरामयं सुन्दरं च भवेदिति कृष्णस्याशयः । यः स्वदेहे एवं परमात्मानं पश्यति स इतरेष्वपि तमेव पश्यति । यः स्वस्मिन् परमात्मपरिचयं न संपादयति स न कुत्रापि तं लभेत । "इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः" इति चान्यत्र श्रूयते । अत एव देहात्मविवेकेन मानवैर्व्यवहर्तव्यमिति श्रीकृष्णपरमात्मना यन्निरीक्ष्यते तत्साध्वेव भातीति सर्वं समञ्जसम् ॥ १८ ॥

**इहैव तैर्जितः सर्गः येषां साम्ये स्थितं मनः ।**

निर्दोषं हि समं ब्रह्म तस्मात् ब्रह्मणि ते स्थिताः ॥ १९ ॥

येषां पण्डितानां मनः साम्ये उक्तरीत्या समत्वभावनायां स्थितं तैरिहैवास्मिन्नेव जन्मनि सर्गः संसारो जितो भवति। तेषां तु पुनर्जन्म न विद्यत एव। हि यस्मात् ब्रह्म आत्मतत्त्वं सर्वत्र विद्यमानं निर्दोषं स्वतः सर्वविधदोषरहितं, अत एव समं समानं सर्वत्र। तस्मात्ते उक्तसमदर्शिनो ब्रह्मणि स्थिताः ब्रह्मनिष्ठा भवन्ति। ब्रह्मनिष्ठानां च पुनर्जन्म नास्तीति प्रसिद्धमेव ॥ १९ ॥

न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियम्।
स्थिरबुद्धिरसंमूढो ब्रह्मविद्ब्रह्मणि स्थितः ॥ २० ॥

तादृशब्रह्मनिष्ठस्य स्वरूपमाह। ब्रह्मवित् उक्तरीत्या परमात्मतत्त्ववित् परशिवस्वरूपानुभवी ब्रह्मणि परशिवब्रह्मनिष्ठ एव सन् स्थिरबुद्धिरचञ्चलमनाः असंमूढो विवेकी च यः सः प्रियमिष्टं वस्तु प्राप्य न प्रहृष्येत् प्रहर्षं न कुर्यात्। एवमेव अप्रियमनिष्टं च दुःखादिकं प्राप्य नोद्विजेत् विषादं न कुर्यात्। तस्य निन्दास्तुती सुखदुःखे चेत्यादिकं द्वन्द्वजातं समानार्थकमेव शोभते। शरणगीतायां बसवार्यस्य समदृष्टिः सम्यगुपवर्णिता दृश्यते। सः स्वीयां भावनामेवं निवेदयति। "अवैमि चाक्रोशकमेव बन्धुं अवैमि पीडाकरमेव रक्षकम्। अवैमि मातापितरौ विनिन्दकं अवैमि मत्पालितमेव पालकम् ॥ मद्दूषकं चैव हि जन्मबन्धुं अवैमि मत्स्तावकमेव देव। सुवर्णशूलोपरि निक्षिपन्तं तदेतदाकर्णय सङ्गमेश ॥" इति। एवं शत्रुमित्रयोः स्तुतिनिन्दयोः समदृष्टिर्यस्मिन्दृश्यते स एव ब्रह्मज्ञानीत्यनुभविनो भावयन्ति। परंतु बसवार्यः गुरौ सङ्गमार्ये शरणागतो भूत्वा तदनुगृहीतं स्वीयं प्राणरूपमिष्टलिङ्गं श्रद्धया समर्चयन् समधिगतं स्वीयं शान्तं जीवनमेवमावेदयति। "संहन्यते चेदिह हन्य एव विनिन्द्यते चेदिह निन्द्य एव। प्राग्जन्मकृत्यं न विचिन्त्यमेव तथैव भोगोऽद्यतनस्तु हस्ते ॥ संप्राप्यते कूडलसङ्गमेश फलं भवत्पूजनतश्च हस्ते ॥" इति। एवं भगवदाराधनेन मानवे समभावना सहजतया स्फुरति। विस्मृतोऽपि सः अस्मान विस्मरति। असम्भं यद्दातव्यं तत्सर्वमपि सः ददात्येव।

तस्य परिचयोऽपि तदनुभविनां सन्तोषणादेवास्माभिरधिगम्यते। अयमाशयः शरणगीतायामेवं वर्ण्यते। "अभिषेकान्न लिङ्गस्य सार्द्रता वा क्वचिद्भवेत्। न म्लानता विस्मृतेर्वा लिङ्गस्य परिदृश्यते॥ फलं नास्ति फलं नास्ति जङ्गमा-राधनं विना। किन्तु जङ्गमसन्तुष्ट्या लिङ्गमार्द्रं तथा मृदु। भवेत्सङ्गमदेवेश इति निश्चितधीरहम्॥" इत्येवं लिङ्गप्राणभूतस्य महाप्रकाशरूपस्य चेतनस्य संप्रीणनं विना केवललिङ्गपूजा नहि सफला भवेत्। एवमेव सर्वेऽपि साधकाः समदृष्ट्या भगवादाराधनसमकाल एव भगवद्भक्ताराधनेऽपि निरता भवेयुरिति कृष्णपरमात्मात्रोपदिशति। तादृश एव साधकाः प्रियाप्रिययोः समदृष्टिमधि-गच्छन्तीति भावः॥ २०॥

**बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत्सुखम्।**
**स ब्रह्मयोगयुक्तात्मा सुखमक्षय्यमश्नुते॥ २१॥**

एवमेव बाह्येषु स्पर्शरूपरसागन्धादिविषयेषु असक्तात्मा असक्त आसक्ति-रहितः आत्मा मनो यस्य सः। आत्मनि यत्सुखं विन्दति अनुभवति सः ब्रह्मयोग-युक्तात्मा ब्रह्मणि योगः परमात्मविषयकयोगः हृदये तेन सह मिळनरूपस्संबन्धः, तत्र युक्त आसक्तस्तत्रैव मोदमानः आत्मा मनो यस्य सः तादृशस्सन्, सः अक्षय्यं नाशरहितं शाश्वतं सुखं मोक्षमश्नुते प्राप्नोति। रूपरसादिबाह्यवस्तूनां नश्वरत्वात् तदधीनं सुखमपि नश्वरमेव। आत्मसुखं आत्मनस्तु नित्यत्वात् आनन्दमयत्वात् तदनुभवजन्यं सुखमपि नित्यमेवेत्यर्थः। तच्च आत्मरूपो जीव एवानुभवितुं शक्नोति। न हि जडभूतो देहः आत्मसुखमनुभवेत्। जीवोऽपि चेतनात्मकस्त्य परमात्मनः अंशत्वात् परमात्मनो भिन्नोऽपि भेददृष्टिं परिहाय अभेदानन्दमनुभवितुं पारयति। न ह्यात्मासंबन्धो देहः आत्मनः आश्रयप्रदाने-नापि आत्मसखं अनुभवेत्। अत एव चेतनो जीवः स्वीयमूलवस्तुनः परिचयेन स्वीयाज्ञानरूपं मलावरणं परिहृत्य आनन्दमयो भवत्येवेति भगवान् उपदिशति॥

**ये हि संस्पर्शजा भोगा दुःखयोनय एव ते।**
**आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः॥ २२॥**

आत्मानन्दं विहाय बाह्यसुखे यो रमते सः नित्यसुखं न लभत एवेति निर्दिशति। हि यतः संस्पर्शजाः विषयेन्द्रियसंपर्कजन्या ये भोगा वैषयिकसुखानि ते दुःखयोनय एव दुःखस्यैवोत्पादकानि, दुःखस्वरूपाणि, दुःखमूलानि दुःखपर्यवसायीनि चेत्यर्थः। न तावत्मात्रं, अपि च आद्यन्तवन्तस्ते भोगास्सर्वेऽनित्या एव। तेषामुत्पत्तिर्यथा वर्तते तथैव तदवासानमपि विद्यते। अवसन्नं दुःखं पुनरप्युत्पद्यते। एवं दुःखमिश्रं लौकिकं सुखं यद्वर्तते तत्र केवलमविवेक्येव रमते आसक्तो भवति न तु विवेकी देहात्मविवेकमधिगतवान् ज्ञानीत्यर्थः ॥ २२ ॥

**शक्नोतीहैव यः सोढुं प्राक् शरीरविमोक्षणात् ।**
**कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ॥ २३ ॥**

एवमात्मसुखापेक्षी प्रागिन्द्रियजयाय प्रयतेत। नो चेन्महती विपत्तिः संभवेदित्याह। यः बुद्धिमान् इहैव जीवन्नेव शरीरे स्थित्वा व्यवहरन्नेव भोगमनुभवन्नेव शरीरविमोक्षणाप्राक् एतच्छरीरत्यागात्पूर्वमेव कामक्रोधोद्भवं वेगं, कामो विषयाभिलाषः, क्रोधस्तन्मूलश्चित्तविकारस्तदुद्भवस्तज्जन्यो वेगः अन्तःकरणोद्वेगः तं सोढुं प्रसहितुं, तेन स्वस्य क्षोभः, कापि हानिर्वा यथा न स्यात् तथा स्थातुं शक्नोति समर्थो भवति। यः कामक्रोधावेशं सहते स एव नित्यसुखी संपद्येत। स एव मुक्तः योगी भवितुमर्हति। स एव नरः बुद्धिमांश्च भवेत्। नो चेत् तस्य जन्मान्तरं संसारचक्रभ्रमणं च अवर्जनीयं भवेत्। कामक्रोधसमाविष्टः न केवलमैहिकं किन्तु पारलौकिकमपि सुखं विन्दते। तेन कृतं देवार्चनमपि व्यर्थमेव भवेत्। सद्वर्तनशील एव यदि देवमर्चयेत् तदा तदर्चनमेव देवेन स्वीक्रियेत। मनसि क्रोधं द्वेषं च परिकल्प्य यो देवमर्चयेत् तदा देवस्याग्रहेण सः नित्यदुःख्येव भवेत्। बसवार्यः पापिन अर्चनमेवं दूषयति। "क्रोधाविष्टः स्नापयत्यंबिकेशं तच्च स्नानं रक्तधारासरूपम्। पापात्मा चेत्पुष्पभारोपहारं कुर्यादेतत्खड्गधारत्राणं स्यात् ॥" इति। एवं सच्चारित्र्यं विना यः ख्यातिलाभदृष्ट्या पूजादि-

क्रमाचरति सः इतो भ्रष्टस्ततो भ्रष्टश्च भवेदेव । तादृशान् डांभिकभक्तानवलोक्य बसवार्य एवमुपदिशति । "हे मानवाः संशृणुतोक्तिमेतां जलेऽवगाहात्किमु लभ्यते वः । परस्त्रियं संपरिहाय दूरे तथैव वित्तं परिहाय चान्यं । जलावगाहेन च सा विशुद्धिः स्यादेव सत्यं न हि तत्पुरस्तात् ॥" इति डांभिकभक्तान् दृष्ट्वा मनसि व्यथामनुभवन् बसवार्यो यत्तदानीमवदत् तदद्यापि सर्वान् जागरयति । प्रतिदिनं देवदर्शनार्थं देवालयं गत्वा देवस्य पुरः स्थित्वा बाह्ये विसृष्टयोः पादुकयोः स्मरणं अनेकैरधुनापि क्रियमाणं दृश्यते । तादृशो भक्तान् शरणगीता एवं निर्दिश्य तेषु सत्स्फूर्तिमुत्पादयति । "लिङ्गाभिषेकार्चनमग्नमानवाः सर्वे च शृण्वन्तु मदीयवाक्यम् । बहिर्विसृज्य स्वपदोरुपानहौ देवालयं प्राप्य नमस्करोति ॥ तदात्मनः पादुकयोर्निरन्तरं ध्याने वशो ध्यायति न प्रभुं स्वम् । तस्माच्च वित्तं न निधत्त मानवा निधीयते तर्हि भवोऽनिवार्यः ॥ वित्तं च संपादितमेव सर्वं सङ्घर्याभक्तेषु समर्पणीयम् ॥" इति भक्तान् सद्वर्तनशीलान् कामक्रोधविदूरांश्च कर्तुं बसवार्यः वीर्यवत्तरया वाण्या स्वीयमाशयमावेदयति ॥ २३ ॥

**योऽन्तस्सुखोऽन्तरारामस्तथान्तर्ज्योतिरेव यः ।**
**स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥ २४ ॥**

यः अन्तस्सुखः अन्तरात्मन्येव सुखं न तु इन्द्रियेषु यस्य तादृशः सः । अत एव अन्तरारामः आत्मन्येव आरामः क्रीडा विहारो यस्य सः । तथा अन्तरेव ज्योतिः प्रकाशो यस्य सः तादृशो योगी आत्मन्येवासक्तो विहरंश्च ब्रह्मभूतः परशिवब्रह्मस्वरूपी सन् ब्रह्मनिर्वाणं कैवल्यानन्दं दुःखमध्य एवानुभवति । संसार एव दुःखमूलम् । एतादृशे मलपङ्के निमग्नः पशुजीवः परमात्मावलंबनेनैवात्मानमुद्धरेत् । परमात्मन एव सारभूतस्य वस्तुन अत्रावस्थानादयं संसारः सार्थकः संपद्यते । शरणगीता शिवयोगिवर्यस्य बसवार्यस्यात्मशोधनमार्गमेवं निर्दिशति । "पङ्के निमग्नस्य पशोर्हि दृष्टा पादस्य घाताद्गतिरत्र नान्या । नष्टोऽस्मि शंभो गिरिशास्मि नष्टः उद्धृत्य मां

त्वद्धृदये निधेहि ॥ पशुस्त्वहं त्वं च पशोरधीशस्ततो दयस्वात्मनि वत्सल त्वम् । यावच्च मां हिंस्र इति प्रतीत्या संगृह्य संहन्युरमी मनुष्याः ॥ तावत्प्रभो पश्य तथात्मनीनं यथा न निन्देयमहं भवन्तम्" इति । एवं संसारसागरमग्नाना-मुद्धरणाय परमात्मैव प्रधानं साधनमिति भाव्यतेऽनुभविभिः । अत एव आनन्दमयं परमात्मानं ज्ञात्वा तेन सह समाविष्टा भवन्तु सर्वे मानवा इति भगवान् आत्मसुखं भवरोगौषधरूपतया प्रयुङ्क्ते ॥ २५ ॥

लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः ।
छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताः ॥ २५ ॥

क्षीणकल्मषाः उक्ततत्त्वज्ञानेन नाशितसर्वपापाः, छिन्नद्वैधा संछिन्न-संशयाः, यतात्मानः संयतेन्द्रियाः सर्वभूतहिते रताः जातिमतकुलगोत्र-सूत्रादिकं विनैव सर्वेषामपि भूतानां हिते आसक्ताः ; कस्यापि प्राणिनो हिंसा-मकुर्वन्त इत्यर्थः । एतादृशाः ऋषयो ब्रह्मनिर्वाणं परमशिवाभिधं निर्वाणं अमूर्तस्थितिं लभन्ते इहास्मिन्नेव प्रसादकाये अनुभवन्ति । देहे स्थित्वा व्यवहरन्तोऽपीतरे मानवा अपि शिवज्ञानेन तथैव निर्लिप्ता भवेयुरित्याशय-माविष्करोति भगवान् ॥ २५ ॥

कामक्रोधवियुक्तानां यतीनां यतचेतसाम् ।
अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मनाम् ॥ २६ ॥

एतादृशानां मुक्तिरत्रैव सिध्यतीत्याह । कामक्रोधवियुक्तानां उक्तरीत्या इहैव जन्मनि कामात् क्रोधाच्च विमुक्तानां, यतचेतसां संयतान्तःकरणानां विदितात्मनां विज्ञातात्मतत्त्वानां यतीनां साधकानां ब्रह्मनिर्वाणं परशिवैक्यरूपो मोक्षः अभितो वर्तते सर्वत्र संभवति ; न केवलं मरणानन्तरं किन्तु अद्याप्यत्रैव शिवानन्दमनुभवन्ति ते । एवं कर्मयोगिनां सर्वत्र सर्वदा ब्रह्मनुभवस्संभवतीत्याशयमावेदयति भगवान् ॥ २६ ॥

एवं योगिनां प्रभावमुक्त्वा अनन्तराध्याये योगप्रक्रियां विस्तरेणो-पदेष्टुमिच्छन् तस्य संग्रहेणोपक्षेपं करोति—

स्पर्शान्कृत्वा बहिर्बाह्यान् चक्षुश्चैवान्तरे भ्रुवोः ।
प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ॥ २७ ॥
यतेन्द्रियमनोबुद्धिः मुनिर्मोक्षपरायणः ।
विगतेच्छाभयक्रोधो यस्सदा मुक्त एव सः ॥ २८ ॥

बाह्यान् स्पर्शान् शब्दस्पर्शादिबाह्यविषयान् बहिः कृत्वा तेभ्यः अन्तरवकाशमदत्त्वा तेष्वनासक्तः सन् चक्षुश्च भ्रुवोरन्तरे मध्ये कृत्वा, नासाभ्यन्तरचारिणौ नासायाः अभ्यन्तरयोर्द्वारयोः संचरन्तौ प्राणापानौ च समौ कृत्वा यतेन्द्रियमनोबुद्धिः यताः इन्द्रियाणि चक्षुरादीनि, मनो बुद्धिश्च यस्य सः । इन्द्रियाणि विवेकेन सुव्यवस्थितया रीत्या उपयुञ्जन्, मोक्ष एव संरक्तः, पाशविमोचनेन निर्मलो भूत्वा शक्तिविकासमधिगन्तुमभिलषन् । विगतेच्छाभयक्रोधः विगताः इच्छा कामः, भयं अनिष्टदर्शनाज्जायमानं, क्रोधश्च इच्छाभङ्गाज्जायमानः यस्य सः, सदा समचित्त इत्यर्थः । एतादृशो यः मुनिस्साधको यतिः सः सदा सर्वस्मिन्नपि काले इह परत्र च मुक्त एव । एवमिहैव हृदये महाप्रकाशरूपे महादेवे एकीभावमुपेतो योगी मरण-भयाद्विदूरो देह एव नित्यानन्दमनुभवति । यथालाभसन्तुष्टः स योगी सर्वान् शिवभावनया प्रीणयन्, सर्वेषां हितमेव कारयंश्च दुःखाकरे संसारे स्थित्वापि सारवत्तरस्यानन्दमयस्येश्वरस्य दर्शनात् कृतकृत्यो भवति । एतदृशी अध्यात्म-भावना यस्य हृदये विलसति सः सर्वदा समाहितचित्तस्सन् लोके वसन्नपि अलौकधर्मा विराजते ; यतः लोकस्वभावं विदित्वा तदीयौ अनुरागविरागौ द्वावपि परिहाय सः सावधानेन मनसा स्वीयं कर्तव्यं निर्वहन् असंस्पृष्टलोक-विहारो मुग्ध इव निवसति । एतादृशां योगिनां पावनमादर्शभूतं जीवनं शरणा अभिनन्दन्तोऽव्याजप्रेम्णा लोकमवलोक्यैवमुपदिशन्ति । “गृहं विरच्यैव गिरौ मृगाश्रये कुतो हि बिभ्येन्नु मृगेभ्य एषः । समुद्रतीरे शरणं विरच्य कुतो नु बिभ्येत्खलु तत्तरंगात् ॥ वसन् विपण्यां खलु तद्भवाद्रवात् कथं विभीयादिह जीवलोकः । लोके जनित्वा स्तुतिनिन्दयोर्द्वयं प्राप्यापि

चित्ते कुरु मा क्रुधं बुध ॥ समाहितस्त्वं भव नित्यमेव तदेतदाश्रावय मल्लिकार्जुन ॥ ” इत्येवमध्यात्मसुखनिष्णाता अक्कमहादेवी लोके वसन्तो जनाः समाधानचित्ताः सन्त्विति हृत्पूर्वकमपेक्षमाणा तदर्थं स्वेष्टदेवे गुरु-मल्लिकार्जुने भक्त्या प्रार्थयते । “ सर्वेषु जीवेषु हिताभिशंसकाः सज्जार्य-भक्ताः कुलजाः प्रकीर्तिताः ” इत्येवं सद्भक्तानेव सार्वजनिकहितचिन्तनेन योग्यवर्तनेन च सत्कुलप्रसूतान् भावयति भक्तावतंसः श्रीबसवार्यः ॥

**भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।**
**सुहृदं सर्वभूतानां ज्ञात्वा मां शन्तिमृच्छति ॥ २९ ॥**

एवं लोके सर्वसहिष्णुतया समाधानचित्तेन च जीवितुं, दुःखमध्ये सुखमनुभवितुं, कामक्रोधयोरभिनिवेशं निरोद्धुं, स्वीयं सद्वर्तनं यथा मित्रैः शत्रुभिश्चानुमोद्येत तथात्र वसितुं यदि मानवो जानाति तदैव तस्य जननं सार्थकं संपद्येत । तथा भूत्वा मानवः स्वान्तरङ्गे विराजमानस्य परमात्मन परिचयमधिगन्तुं यथाशक्ति प्रयतेत । तदीयानां समस्तानां समस्यानां परिहाराय स्वान्तरङ्गस्थेश्वरभक्तिरेव दिव्यसञ्जीविनी भवितुमर्हति । परमेश्वरो यद्यपि हृदये प्रकाशरूपतया गोप्यमेव निवसति । तथापि मानवः स्वीयं भोगं तेनैवार्पितमिति ज्ञात्वा यदि तस्मै भक्त्या समर्पयति तदा तं सन्तोषेण स्वीकृत्य भुङ्क्ते । अतः स एव पूर्वोक्तानां सर्वेषामपि यज्ञानां तपसां च भोक्ता स्वीकर्ता भवति । यद्यद्भक्त्या समर्प्यते तत्सर्वं सः भुक्त्वा दात्रे भक्ताय शेषं प्रसादरूपेणानुगृह्णाति । एतत्प्रसादभोगेन मानवस्य सर्वदुःख-हानिः सञ्जायते । प्रसादभोग एव सर्वरोगनिवारकं भैषज्यमित्यनुभविनो वदन्ति । एवं च सर्वहृदयेषु उदासीनवदासीनः परमेश्वरः भक्त्या दत्तं पत्रपुष्पादिकं स्वीकृत्य ततोऽप्यधिकं ऐहिकमामुष्मिकं वा सुखं ददाति । अतः स एव सर्वेषां पूज्यतम इत्यनुभविनोऽभिप्रयन्ति । अत एव सः सर्वलोक-महेश्वरः सर्वेष्वपि लोकेषु विद्यमानानां ईश्वराणामपि ईश्वरो नियामक इति परिगणितः । लोकव्यवस्थापकानां त्रिमूर्तिनामपि परमकारणमिति श्रुतिर्निर्दिशति ।

न केवलं सः सर्वफलभोक्ता, सर्वनियामकश्चैव अपि तु सर्वप्राणिनां स एव सुहृदित्यनुभविनो भावयन्ति। एवं सर्वलोकहितरक्षकत्वादेव परमात्मा शिव इति श्रूयते। सर्वेषां प्रकाशकत्वादाश्रयत्वाच्च स एव देव इत्याहूयते। स एव देवः सर्वेषां सर्वदा बन्धुरित्यत्र न कस्यापि विरोधोऽस्ति। सर्वाभ्युपगतोऽयं विषयः। अयमाशयो बसवार्येण सम्यगभिधीयते। "चन्द्रोदयादुच्चयमेति वार्धिस्तस्यास्तकाले परिहीयते सः। मुनिर्यदापः पिबति स्म वार्धेः किमागतोऽब्धेः सहकर्तुमिन्दुः॥ यदा तु राहुर्ग्रसते हि चन्द्रं तदा समुद्रः किमु याति मध्ये। न कोऽपि देव! प्रददाति रक्षां त्वमेव दाता जगदेकबन्धुः॥" इति। एवं सर्वस्यापि लोकस्य परमात्मैक एव बन्धुरिति सर्वे अनुभविन आहुः। एवं सदा हितकरं मां न केवलं मानुषं किन्तु परमात्मनि समरसतया विलीनं साक्षात्परमात्मानमित्येव यो जानाति सः तादृशेन ज्ञानेन प्रेरितः सद्भक्तिरूपां क्रियमाचरन् तत्परिणामेन इहैव शान्तिं नित्यसुखरूपं मोक्षं ऋच्छति प्राप्नोति। एवं सर्वस्यापि मूलं भगवदनुग्रह एवेति सिद्धम्। सोऽपि भगवान् सर्वत्र व्याप्तोऽपि सर्वजीवदयापरतया हृदये निवसतीति विश्वस्य तत्सेवां यः आचारते सोऽत्रैव परमसौख्यमनुभवन् देहानन्तरमपि तदेव नित्यमनुभवति। अत्र परमात्मनो यज्ञभोक्तृत्वेन. निर्देशोऽन्वर्थतया शोभते। निर्मलेन जीवेनानुष्ठितो गुरुजङ्गमाराधनरूपो यज्ञः हृदयस्थिताय परमेश्वराय यदि भक्त्या समर्प्यते तदा सोऽवश्यं तं स्वीकृत्य भुनक्ति इति प्रागेवोक्तम्। कथं सः भक्त्युपहृतं यज्ञफलं स्वीकरोति? देहे सः कुत्र कथं वसति? यज्ञो नाम कीदृशः? तदीयं फलं कथं समर्पणीयम्? एते विषया अत्र पर्यालोचनीयाः। भगवते मूर्तिमते अमूर्तभावनया यत्क्रियतेऽर्चनार्पणरूपेण तत्सर्वमपि यज्ञ एव। जलेनाभिषेचनं, षोडशोपचारपूजा बाह्यफलादिनिवेदनं इत्येषः सर्वोऽपि यज्ञ एव। भगवत्स्वरूपेभ्यः श्रीगुरुजङ्गमेभ्य अन्नपानाद्यर्पणेन सन्तोषणमपि यज्ञ एव। तथैव गृहमागतेभ्यः भिक्षुकेभ्यो भिक्षाप्रदानं, गृहे वसभ्यः बन्धुभगिन्यादिभ्यः अशनवस्त्रादिविनियोगः एषः सर्वोऽपि यज्ञ एव।

गुरुजङ्गमेषु, भिक्षुकेषु बन्धुषु सर्वेषुपि विराजमानः प्रभुरेक एव। स एवास्माकं शत्रुष्वपि वर्तते। अतस्तेष्वपि शत्रुत्वं विहाय प्रेमदृष्ट्या समीक्षणं च भगवदाराधनमेव। एतादृशमर्चनं यैराचर्यते तदेव यज्ञशब्देन व्यवह्रियते। एवं कृतस्यैव यज्ञरूपस्य तपसः फलं परमेश्वरो भुनक्तीत्याशयं कृष्णोऽभिव्यनक्त्यत्र। देहे पञ्चस्वपीन्द्रियेषु तस्यैवावस्थानान् सः भक्त्यपहृतं पदार्थमवश्यं स्वीकरोत्येव। यज्ञेऽर्पणीयेषु वस्तुषु गन्धः, रसः, रूपं, स्पर्शः, शब्दः इति पञ्च विषया वर्तन्ते। तान् स्वीकर्तुं परमात्मापि पञ्चप्रकारैः देहे विराजते। चेतनरूपस्य वशीकृतमायाशक्तिकस्य परमेश्वरस्य एककालेऽनन्तरूपैः अनेकेषु स्थलेषु अवस्थानं युज्यते। तेन सह तदंशभूतो जीवस्तत्तद्विषयसमर्पणाय तत्रैव निवसति। परमात्मविनोदाश्रयत्वात् सः अङ्गमिति कथ्यते। यः दीक्षया सुसंस्कृतो वर्तते स एव अङ्गशब्दवाच्यो भवति। अयमङ्गनामकः शुद्धजीवः स्वभोग्यानां विषयाणां परमात्मने त्यागात् त्यागाङ्गमिति, तदुपभुक्तशेषप्रसादभोगात् भोगाङ्गमिति च व्यवह्रियते। अनया त्यागभोगसमन्वयदृष्ट्या सर्वाभिमानपरिहारात् जीवः परमसात्त्विकस्सन् परमेश्वरस्यातीव प्रियो भवति। त तश्च मलदोषविनिर्मुक्तः परमनिर्मलो जीव ईश्वरेण सहयोगात् योगाङ्गमिति कथ्यते। त्यागाङ्गेन समर्पितस्य वस्तुनः स्वीकारसमये परमेश्वरः इष्टलिङ्गमिति, भोगाङ्गेन समर्पितस्य तु स्वीकारार्थं प्राणलिङ्गमिति, योगाङ्गेन समर्पितस्य तु स्वीकाराय भावलिङ्गमिति चानुभविभिः कथ्यते। एवं च त्यागाङ्गनामको जीवः नासिकायां निवसन् भक्त इति, रसानायां निवसन् माहेश्वर इति कथ्यते। जीवस्तावत् परमेश्वरचेतनांशः, अत एव तस्य सर्वत्र स्थातुं शक्यत इति च प्रागेव कथितम्। तथैव भोगाङ्गनामको जीवः नेत्रद्वये निवसन् प्राणलिङ्गीति च कच्यते। तथैव भोगाङ्गनामको जीवः नेत्रद्वये निवसन् प्रसादीति, देहावृते चर्मणि सर्वत्र निवसन् प्राणलिङ्गीति च कच्यते। तथैव योगाङ्गनामको जीवः श्रोत्रद्वये निवसन् शरण इति, शिरसि विराजमानेन भावलिङ्गेन एकीभावात् ऐक्य इति च कथ्यते। तथैव ईश्वरोऽपि

नासिकायां निवसन् आचारलिङ्गमिति, रसनायां निवसन् गुरुलिङ्गमिति, नेत्रयोर्निवसन् शिवलिङ्गमिति, चर्मणि सर्वत्र निवसन् चरलिङ्गमिति, श्रोत्रद्वये निवसन् प्रसादलिङ्गमिति, हृदये निवसन् महालिङ्गमिति चानुभविभिर्भाव्यते। श्वासोच्छ्वासक्रियाचरणाय प्रेरकत्वात् नासिकस्य आचारलिङ्गमिति, जीवस्य तत्क्रियाचरणात् भक्त इति च नाम्नी सार्थके वर्तेते। रसनाद्वारा भक्तायोपदेशयोग्यत्वात् तत्रत्येश्वरस्य गुरुलिङ्गमिति, तेन सहैव तत्र तिष्ठते जीवाय उपदेशग्रहणयोग्यत्वात् माहेश्वर इति च नाम्नी सार्थके वर्तेते। तथैव नेत्रयोर्वर्तमान ईश्वरः सर्ववस्तुप्रकाशनात् शिवलिङ्गमिति, तत्रैव स्थित्वा सर्वेषां वस्तूनां प्रसादरूपतया अवलोकनात् प्रशान्तचित्तो निर्मलहृदयो जीवः प्रसादीति च कथ्यते। चर्मणि सर्वत्र व्याप्य निर्लिप्ततया वर्तनात् ईश्वरः चरलिङ्गमिति, तत्रैव सर्वत्रापि प्राणभावनया परमात्मसमाश्रयणात् जीवः प्राणलिङ्गीति च कथ्यते। तथैव श्रोत्रस्थ ईश्वरः शब्दं गृहीत्वा जीवाय प्रसादरूपेणानुगृह्णाति अत एव सः प्रसादलिङ्गमिति कथ्यते। तत्रत्य एव जीवः प्रसादस्वीकारार्थं अनन्यभक्त्या ईश्वरे शरणागतस्सन् शरणमित्यभिधीयते। एवं शरणागतो जीवः हृदये विराजमानेन महालिङ्गेन एकीभावमनुभवन् ऐक्य इत्यभिधीयते। ईश्वरस्य महालिङ्गमिति, जीवस्य ऐक्य इति च नाम्नी अन्वर्थे वर्तेते। अनेन क्रमेण भक्तः आचारलिङ्गाय गन्धं, माहेश्वरः गुरुलिङ्गाय रसं च यद्यर्पयति तदा जीवस्य यद्भोग्यं वस्तुजातं तत्सर्वमपि ईश्वराय समर्पितं भवेत्। एवं यद्यर्प्यते तदैव तत्सर्वमीश्वरः स्वीकरोति भुनक्ति च। अयमेवाशयः "भोक्तारं यज्ञतपसा" इत्यत्राविष्कृतः। एवं शेषप्रासद भोगादेवः भक्तः लिङ्गभोगोपभोगीति कथ्यतेऽनुभविभिः। अयं प्रसादस्वीकारक्रमः षट्स्थलसंप्रदाय इति भाव्यते। अयं विषयो विस्तरेण निरूपितः शक्तिविशिष्टाद्वैतदर्शनस्य द्वितीये भागे। शुद्धजीवेन नित्यं व्यवहारकाले निर्लिप्ततया क्रियमाणः प्रपञ्चभोगानुभव एव प्रसादजीवनमिति, लिङ्गाङ्गसामरस्यमिति, शक्तिविकास इति चानेकैः पदैरभिधीयतेऽनुभविभिः।

एतद्विज्ञानेनैव मानवः स्वीयां सत्त्वरजस्तमोमयीं प्रकृतिं सच्चिदानन्दात्मकतया परिवर्तयितुं प्रभवति। एतादृशः परिणामः गुरुजङ्गमप्रसादादेव तस्मिन् सञ्जायते। गुरुस्तु तत्त्वोपदेशेन जीवे अव्यक्तं शिवप्रकाशं उद्दीपयति। "उत्तिष्ठत जाग्रत, प्राप्य वरान्निबोधत" इत्येतादृशेनोपदेशेन जीवेषु सुप्तां भक्तिं उत्थापयति। अमूर्तस्य शिवस्य भावनां तस्मिन् द्रढीकर्तुं तदन्तरङ्गस्थमेव प्रकाशरूपं चैतन्यं सुसंस्कृते अङ्गुष्ठपरिमिते लिङ्गे समाविश्य समर्चनार्थं बहिः स्थापयति सः। तदेव लिंगं प्राणावत्प्रियत्वात् प्राणलिङ्गमिति इष्टलिङ्गमिति च भक्तेन भाव्यम्। एवं भक्तिर्यदोत्थाप्यते गुरुणा तदा तद्विकसनद्वारा स्थिरीकर्तुं जङ्गमस्तत्र प्रविशति। स तु सर्वत्र गच्छन्नपि लौकिकाभिमानशून्यस्सन् निरञ्जन इति निराभारी इति च कथ्यते। तस्य दर्शनादेव भक्तहृदये निर्लेपनाभिधं वैराग्यं दृढीक्रियते। एवं मानवः गुरोः सकाशाद्वैभवं, जङ्गमस्य सकाशात् वैराग्यं च समधिगच्छति। वर्धिष्णूनां सर्वेषामपि अन्तर्वैभवं बहिर्वैराग्यं एवमुभयमपि आवश्यकम्। अमूर्तस्य शिवस्य परिचयसंपादनद्वारा तत्प्रसादसमर्पणाय प्रपञ्चोऽयं गुरुजङ्गममय एव वर्तते। यदर्प्यते तत्सर्वमपि तद्रूपी शिव एव भुनक्तीति कृष्णस्याशयः। अत एव सः शिवतादात्म्यभावनया "मां" इति आत्मानं निर्दिशति ॥ २९ ॥

—o—o—o—

## षष्ठोऽध्यायः

पूर्वाध्यायान्ते 'स्पर्शान् कृत्वा बहिर्बाह्यान्' इत्यादिनोपक्षिप्तं शिवयोगं विस्तरेण निरूपयितुं, तत्पीठिकतया फलसङ्गत्यागपूर्वककर्मानुष्ठानरूपं कर्मयोगं प्रशंसति भगवान्—

**अनाश्रितः कर्मफलं कार्यं कर्म करोति यः।**
**स संन्यासी च योगी च न निरग्निर्न चाक्रियः॥ १ ॥**

कर्मफलं कर्मणः फलं अनाश्रितः अनपेक्षमाणः, कर्मफलापेक्षारहित इत्यर्थः। तादृशो यः कार्यं कर्तव्यत्वेन प्राप्तं नियतं कर्म करोति निर्वर्तयति स एव यतिः प्रयत्नशीलः संन्यासी ईश्वराय स्वदेहस्थाय पूर्वोक्तेन षट्स्थलोपासनमार्गेण कर्मफलमर्पयितुं शक्तः संन्यासीति व्यवह्रियते। स एव च कर्मयोगी इत्यभिधीयते। न तु निरग्निः अग्निहोत्रादि वैदिकं कर्म परित्यक्तवान् पुरुषः संन्यासी भवितुमर्हति। तथैव अग्निस्वरूपस्येष्टलिङ्गस्यार्चनादिकं यः परित्यजति सोऽपि संन्यासी भवितुं नार्हति। अतो ज्ञानिनापि नियतं सर्वमपि कर्म भगवदाराधनरूपतया करणीयमेव। तथैव न वा अक्रियः अर्पणादिक्रियामकुर्वन् पुरुषश्च योगी भवेत्। अत्र पुरुषपदेन स्त्रीपुंदेहरूपे पुरे शयनयोग्यो जीवो निर्दिश्यते। एवं पुमांसः स्त्रियश्च ज्ञानकर्मसमन्वयात्मिकया दृष्ट्या सर्वं व्यवहारं शिवार्चनरूपतया निर्वहणात् दुःखमध्य एव नित्यसुखमनुभवन्त्विति भगवानेवं स्पष्टतयात्रोपदिशति ॥ १ ॥

यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव।
न ह्यसंन्यस्तसङ्कल्पो योगी भवति कश्चन ॥ २ ॥

"स संन्यासी च योगी च" इत्यत्र हेतुमाह। उक्तरीत्या कर्मफलत्यागरूपो ज्ञानयोगः, कर्तव्यभावनया कर्माचरणरूपः कर्मयोगश्चेति उभयोरपि समानत्वात् यं संन्यासमिति फलसमर्पणमिति प्राहुरनुभविनः तमेव कर्मयोगं विद्धि जानीहि। कर्मानुष्ठानकालेऽपि स्वार्थत्यागरूपचातुर्यज्ञानं आवश्यकमेव। अतस्तयोः परस्परं संबन्धो वर्तते। हे अर्जुन, हि यस्मात् असंन्यस्तसङ्कल्पः असंन्यस्तः अपरित्यक्तः संकल्पः फलविषयकाभिमानः येनः सः। फलापेक्षावात् स्वार्थीत्यर्थः। तादृशो जीवः न योगी कर्मयोगी भवितुं हर्हति। अतः संन्यासं यं प्राहुस्तमेव योगं प्राहुरनुभविनः ॥ २ ॥

आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते।
योगारूढस्य तस्यैव शमः कारणमुच्यते ॥ ३ ॥

एवं कर्मयोगं प्रशंस्येदानीं कर्मयोगस्य ध्यानयोगसाधनत्वं दर्शयति। योगं ध्यानयोगमारुरुक्षोः आरोढुमिच्छोर्मुनेः कर्म कारणमुच्यते। चित्तशुद्धिमन्तरा ध्यानयोगस्य कर्तुमशक्यकत्वात् तस्य कर्माचरणमावश्यमित्यर्थः। तस्यैव तु योगारूढस्य ध्यानयोगनिष्ठस्य शमः शान्तिः सर्वप्रवृत्तिभ्यो निवर्तनमेव कारणमुच्यते। बाह्यप्रवृत्तिनिष्ठेन न हि ध्यानयोगः कर्तुं शक्य इत्यर्तः ॥३॥

**यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते ।**
**सर्वसंकल्पसंन्यासी योगारूढस्तदोच्यते ॥ ४ ॥**

इदानीं योगारूढस्य लक्षणमाह—इन्द्रियार्थेषु इन्द्रियाणां चक्षुरादीनां अर्थाः शब्दस्पर्शरूपरसगन्धाः तेषु, कर्मसु तदर्थव्यापारेषु च यदा हि पुरुषः नानुषज्जते अनुषङ्गं आसक्तिं न कराति तदा सः सर्वसङ्कल्पसंन्यासी ऐहिकामुष्मिकफलेच्छास्सर्वा अपि त्यक्तवान् योगारूढ इत्युच्यते। ऐहिकामुष्मिकफलदायकेषु कर्मसु सर्वथा अप्रवर्तमानः, मनसापि तादृशान्यल्पफलान्यनिच्छन् यः स एव योगारूढ इत्यर्थः ॥ ४ ॥

**उद्धरेदात्मानात्मानं नात्मानवमसादयेत् ।**
**आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥ ५ ॥**

योगारूढस्य लक्षणमुक्त्वा तस्य कर्तव्यमत्राह—आत्मानं संसारमग्नं स्वं आत्मना स्वयमेव उद्धरेत्। आत्मकल्याणं ज्ञानक्रियासमन्वयदृष्ट्या गुरूपदिष्टेन क्रमेण स्वयमेव साधयेत्। स्वयमलसश्चेत्तस्य अन्यः को वा किं कुर्यात्? य एव उत्साहेन विज्ञाय कुर्वीत स एव श्रेयः प्राप्नुयात्। स्वस्मिन् गोप्यतया विलसत्परमात्मतत्त्वं केवलेन ज्ञानेन केवलया क्रियया वा नानुभूयते साधकैः। य स्वस्मिन्नेव परमात्मनोऽवस्थानं गुरुजङ्गमसकाशात् ज्ञात्वा मनइन्द्रियादिकं तत्सेवार्थं श्रद्धया विनियुङ्क्ते स एव परतत्त्वमनुभवितुं शक्नोति। अत एव परमात्मज्ञानाय आत्मरक्षणमावश्ययम्। अतश्चात्मानं न कदाप्यवसादयेत् न अधः पातयेत्। आत्मोद्धरणमात्मविनाशश्चेत्युभयमपि स्वस्यैव हस्ते

वर्तत इत्यर्थः। तदेवाह आत्मैवेति। हि यस्मान् आत्मैव आत्मनो बन्धुः। एवं च इतरबन्धवस्तु केवलदेहसंबन्धिन एव ; न ह्यात्मबन्धवो भवितुमर्हंति। एवमेव आत्मैव स्वस्य रिपुः प्रतिकूलः। यदि आत्मा स्वबन्धुं परमात्मानं जानीयत् तदा स एव तस्य हितावहो भवेत्। यदि आत्मा स्वात्मानं न जानीते तदा स एव स्वस्य प्रतिकूलो भवेत्। अत एव स्वस्मिन् स्वयमेव विचिन्त्य गुरूपदिष्टक्रमेण यः प्रयतेत स एव स्वानन्दमनुभवितुं पारयेत् ॥५॥

बन्धुरात्माऽऽत्मनस्तस्य येनात्मैवात्मना जितः।
अनात्मस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ॥ ६ ॥

पूर्वोक्तं विव्रियते। तस्य आत्मा आत्मनः स्वस्य बन्धुरनुकूलो भवति। यः मन इन्द्रियादिकं स्वान्तर्गतपरमात्मसेवार्थं विनियुङ्क्ते तदा तानि सर्वाणि करणानि परमात्ममयान्येव भवेयुः। एवमध्यात्मनिष्ठया आत्मसौख्यं यस्साधयति स एव स्वस्य अनुकूलस्सञ्जायते। अनात्मनस्तु एवं स्वयं स्वतः संयमादिकमननुतिष्ठतस्तु आत्मैव शत्रुवत् बाह्यशत्रुवदेव शत्रुत्वे शत्रुभावे वर्तेत। अतस्सर्वेषामप्यात्मसंयम आवश्यक इत्यर्थ ॥ ६ ॥

जितात्मनः प्रशान्तस्य परमात्मा समाहितः।
शीतोष्णसुखदुःखेषु तथा मानापमानयोः ॥ ७ ॥

आत्मसंयमवन्तं वर्णयत्यत्र। जितात्मनः स्वाधीनान्तःकरणस्य, अत एव प्रशान्तस्य प्रसन्नचेतसो जीवस्य निर्मले हृदये परमात्मा समाहितः सुव्यवस्थया अवतिष्ठते। प्रशान्तहृदय एव परमात्मा अनुभूयत इत्यर्थः। स्वाधीनप्रकृतिकस्य जीवस्य आत्मा परं अत्यन्तं समाहितो सुव्यवस्थितो भवेदिति वाऽन्वयः। तस्य त्वात्मा तादृशः पुरुषः इत्यर्थः। सः शीतोष्णसुखदुःखेषु तथा मानापमानयोः एतादृशद्वन्द्वेष्वपि कदापि विकारपरवशो न भवेदेव। यदा देही देहं विशोध्य तत्रैव यदि निर्मलेन मनसा वसेत् तदाऽऽत्मसुखमनुभवन् सुखदुःखादिद्वन्द्वदर्शनेनापि निर्विकार एव वर्तेत। देहिनस्तादृशं पवित्रं

जीवनमेवं वर्णयति शरणगीता। "उत्पाट्यते यद्यहिदन्तपङ्क्तिस्तदा च तेनैव रमेत मानवः। तथैव देही विषपाप्मनश्च निष्कासनेनात्र वसेदबाधम्॥ मातैव चेद्राक्षसभावयुक्ता शिशुर्न रक्ष्येत तथैव लोके। तथैव काये विकृतिस्तु जाता जीवं न रक्षिष्यति सत्यमेतत्। य एव देहे गुरुमल्लिकार्जुन त्वयानुगृह्येत स एव धन्यः॥" इति भगवती अक्कमहादेवी देहशोधनेन शिवप्रियं पावनं जीवनं यथा सर्वेऽपि मानवा इहैव निर्वहेयुस्तथा वीर्यवत्तरया वाण्या तेषु समभावनाया आवश्यकत्वमुपपादयति। स्त्रीयप्रकृतेस्सत्परिणामेन सर्वेऽपि साधका एवमेवाध्यात्मप्रगतिं साधयेयुरित्याशयमाविष्कुर्वन्ति सर्वे दार्शनिकाः। आध्यात्मविकासं विना न कोऽपि व्यावहारिकः पुरुषः शान्तिं लभेत। स च विकासस्समचित्तवृत्तिमवलंबते। इयमपि वृत्तिर्वैविध्यदर्शनादेव सुगमा भवेत्। प्रतिदिनं यः सुखं दुःखं च पश्येत् तस्मिंस्तुकतिपयेष्वेव दिवसेषु तयोस्समत्वबुद्धिरुदेत्येव। अत एव दुःखमध्य एव वसन् सः दुःखदर्शनेन लब्धविवेकः धैर्यं प्रकाशं च सहजतया विन्दते। एवं जीवने दुःखदोषानुदर्शनमावश्यकमिति सर्वेऽनुभविनो वदन्ति। तमेवाशयमनुमोदयन् कृष्णोऽत्र समबुद्धेर्वैशिष्ट्यं प्रतिपादयति॥ ७॥

**ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः।**
**युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः॥ ८॥**

ज्ञानविज्ञानतृप्तात्मा-ज्ञानं शास्त्रजन्यं परमात्मज्ञानं; तत्परिणामभूतस्य प्रपञ्चस्य च ज्ञानं, विज्ञानं शास्त्रतः ज्ञातानां स्वानुभवगोचरीकरणं, ताभ्यां तृप्त आत्मा अन्तःकरणं यस्य तादृशः। शिवज्ञानेन चिदचिदात्मकस्य प्रपञ्चस्य परिचयेन च लब्धविवेको मानवः दुःखमग्नोऽपि सुखमयो वर्तते। अत एव विजितेन्द्रियः विजितसर्वेन्द्रियः। न तु इन्द्रियार्थान्वेषको भवतीत्यर्थः। अत एव कूटस्थः अप्रकम्प्यो निर्विकारो वसेत्सः। समलोष्टाश्मकाञ्चनः लोष्टाश्मकाञ्चनानि समानानि भावयन् यः युक्तः समाहितो भवति स एव शिवयोगीत्युच्यते॥ ८॥

**सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु।**
**साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥ ९ ॥**

सुहृत् प्रत्युपकारमनपेक्ष्यैव उपकुर्वन्। मित्रं स्नेहितः। अरिः शत्रुः। उदासीनः यः न मित्रं नापि शत्रुस्तादृशः। मध्यस्थः पक्षद्वयस्यापि हितैषी। द्वेष्यः आत्मनोऽप्रियवर्तनवान्। बन्धुः स्वसंबन्धी। एषु च साधुष्वपि शास्त्रोक्तकर्मानुष्ठातृषु सद्वर्तनशीलेषु, पापेषु शास्त्रप्रतिषिद्धकर्मकारिषु एतेषु सर्वेष्वपि समबुद्धिः समताभावनावान् 'शुनि चैव श्वपाके च पण्डिताः समदर्शिनः' इति पूर्वमेवोक्तम्। एतादृशसमभाववान् विशिष्यते सर्वेभ्योऽपि श्रेष्ठो भवति। प्रपंचे विद्यमानं कर्मानुगुणं विजातीयं सुखदुःखादिकं द्वन्द्वं विलोक्यापि तस्य वैचित्र्यस्य कारणं विज्ञाय तत्रैव निर्विकारतया तिष्ठन्तं एकविधं परमात्मानमेवावलोकयन् मानवः सर्वेभ्यो विलक्षण एव वर्तेत। तस्यैव स्थितिः "लोकेषु भूतोऽस्मि न लोकधर्मा" इत्यत्रोपवर्णिता। तथात्रावस्थानमेव मानवजीवनस्यान्तिमं ध्येयम्। अयमेव योगस्य महान्परिणाम इति भगवता निर्दिष्टः ॥ ९ ॥

**योगी युञ्जीत सततमात्मानं रहसि स्थितः।**
**एकाकी यतचित्तत्मा निराशीरपरिग्रहः ॥ १० ॥**

एवं योगारूढस्य प्रशंसां कृत्वा योगप्रकारमधुना विस्तरेण निवेदयति। योगी ध्यानयोगं कुर्वन्, रहसि एकान्तप्रदेशे स्थितः, तत्रापि एकाकी असहायः नेतरेषां साहाय्यमपेक्षमाणः, यतचित्तात्मा यतः संयमितः चित्तं अन्तःकरणं आत्मा देहश्च येन तादृशः। देहेन्द्रियादिकं व्यवस्थया उपयुञ्जन् इत्यर्थः। निराशीः बाह्यविषयकतृष्णाविरहितः; अपरिग्रहः शय्यासनादिसुखपरिकररहितः, नाधिकसुखापेक्षी यदृच्छालाभसन्तुष्टः येन केनचित्सौकर्येणाधिगतसमाधान इत्यर्थः। तादृशो भूत्वा आत्मानं सततं युञ्जीत अन्तरङ्गस्थेश्वरस्य चिन्तनरूपे ध्याने प्रवर्तयेत्। हृदये परमात्मनोऽवस्थानं विश्वस्य तत्रैव मतिं

निधाय तत्साक्षिकतया यो व्यवहरेत् तस्य मनः अस्थाने न प्रवर्तेत। हृदयं यदि कलुषितं भवेत् तदा प्राणपतिस्तत्र विद्यमानोऽपि नानुभूयेतैव। अतः हृदयशुद्धिस्सर्वदाऽवश्यं संरक्षणीयेत्यनुभविनो वदन्ति। "हृदा मनीषा मनसाभिक्लृप्तः" इति श्रुतिरपि परमात्मनः निर्मलहृदयवेद्यत्वं उपदिशति। अत एवात्र भगवानेवं वर्धिष्णूनां सर्वेषामपि सार्वजनिकजीवनमिवैकान्तवासमप्यवश्याचरणीयतयोपदिशति ॥ १० ॥

शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः।
नात्युच्छ्रितं नातिनीचं चेलाजिनकुशोत्तरम् ॥ ११ ॥
तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः।
उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये ॥ १२ ॥

एकान्तस्थलेऽपि शुचौ परिशुद्धे प्रदेशे आत्मनः आसनं स्थिरं अचलं यथा तथा नात्युच्छ्रितं नातीवोन्नतं, नातिनीचं नातीव निम्नं च चेलाजिनकुशोत्तरं—चेलं वस्त्रं, अजिनं कृष्णाजिनं, कुशाः दर्भाः, तदुत्तरं तैः क्रमशः कल्पितं प्रतिष्ठाप्य स्थापयित्वा, तत्र आसने उपविश्य, मनः एकाग्रं सर्वेभ्यो विषयेभ्य उपसंहृत्य तदेकमात्रपरं कृत्वा, यतचित्तेन्द्रियक्रियः यताः संयताः चित्तस्य इन्द्रियाणां च क्रियाः येन तादृशः। आत्मविशुद्धये आत्मनोऽन्तःकरणस्य विशुद्ध्यर्थं योगं युञ्ज्यात् कुर्यात्। एवमेकान्तप्रदेशे युक्तमासनं परिकल्प्य साधकः तत्रोपविश्य समाहितमना भूत्वा स्वीये प्राणलिङ्गे सर्वेन्द्रियाणां चित्तस्य च वृत्तीः समाविश्य तल्लिङ्गनिरीक्षणेन प्राणपतिं अनुभवेत्। साधकः शिवदीक्षासंस्कृतस्सन् स्वीयं प्रकाशं गुरोः सकाशात् बहिरर्चनाय लब्ध्वा सततं तन्निरीणपूर्वकमर्चनेन स्वीयमान्तरङ्गिकमेव प्रकाशमनुभवति। एतादृशानुभवाधिगमायैव बहिरपि परमात्मसंबन्धः परिकल्पनीयः। अयमाशयः 'तेषां नित्याभियुक्तानां' इत्यत्राविष्कृतः। बहिरर्चनं विना हृदिस्थः प्रकाशो न ज्ञायेत। क्रियां विना काष्ठाद्वह्निरपि न बहिः स्फुरति। एतां क्रियामनुष्ठातुमेव साधकः एकान्तप्रदेशे स्थिरमतिः योग्यासने उपविशेदित्युपदिशति भगवान् ॥

**समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।**
**संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥ १३ ॥**
**प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः ।**
**मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ॥ १४ ॥**

शिवपूजार्थमुपविष्टो योगी कथमुपविशेत्, किं वा कुर्यात् इत्येतं प्रकारमत्र निर्दिशति । कायशिरोग्रीवं कायो देहः, शिरः, ग्रीवा कन्धरः एतान् । समाहारद्वन्द्वेऽत्र प्राण्यङ्गत्वात् 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' इत्येकत्वम् । समं एकरूपं कृत्वा, देहः शिरो ग्रीवा च समावस्थायां यथा तिष्ठेयुस्तथा व्यवस्थापयित्वा, तथैव अचलं चलनरहितं च धारयन्, स्थिरः स्थिरो भूत्वा स्वं नासिकाग्रं संप्रेक्ष्य स्वनासाग्रे भ्रूमध्ये दत्तदृष्टिर्निहितेक्षणो भवेत्साधकः । करपीठे गुर्वनुग्रहीतं स्वेष्टलिङ्गं निक्षिप्य तत्रैव नेत्रदृष्टिं केन्द्रीकृत्य सः तल्लिङ्गं अनिमेषया दृष्ट्या निरीक्षेत । एतादृशं लिङ्गनिरीक्षण-मेव शिवयोग इति प्रकीर्त्यते । एतच्छिवयोगसाधक स्तु प्रथमं अभ्यास-सौकर्याय यथावसरमेकान्तप्रदेशे एकाङ्गी सन् भ्रूमध्यनिरीक्षणं कुर्यादिति भगवत आशयः । एवं भ्रूमध्यनिरीक्षणेन दृष्ट्यां मनसः, प्राणावायोः, तदनु-सरतो जीवभावस्य च समावेशेन साधकः चित्तनैश्चल्यं प्राप्नोति । एवं निश्चलं चित्तं दृशोः पुरो हस्तपीठे विराजमाने स्वेष्टलिङ्गे यदि समाविश्यते तदा तल्लिङ्गे महाप्रकाशः परिदृष्टः हृद्गतेन प्रकाशेन च एकीभवति । तदा अन्तर्बाह्ययोर्भेदमजानन् साधकः देहे सर्वत्र स्वेष्टलिङ्गस्पर्शेन प्राणरूपस्य महाप्रकाशस्य परिचयमधिगच्छति । अयमेव प्राणलिङ्गानुभावः योगारूढे सर्वदा विराजते । परं तु साधकैः अभ्यासानुसारेण क्रमशः अयमनुभवः प्राप्यः । तेषां दृष्टिर्यथाऽन्यत्र न प्रधावेत् तथाभ्यसितुं स्वसन्निहित एव करपीठे स्वप्राणरूपस्यांगुष्ठपरिमितस्यैव प्राणलिङ्गस्यार्चनं ब्रह्मसूत्रे श्रुतौ च विधीयते । अनेन च साधनेन साधको दिशः इतस्ततः अनवलोकयन् अपश्यंश्च प्रशान्तात्मा प्रकर्षेण शान्तः आत्माऽन्तःकरणं यस्य तादृशोऽस्ति । तस्य मनः

शिवानुग्रहेण प्रसन्नं भवति । अस्यां दशायां साधकः विगतभीः गतभयः अकुतोभयः सन् , ब्रह्मचारिव्रते स्थितः ब्रह्मचारिणो यत् व्रतं भैक्ष्याचरणादि-नियमः तत्रास्थितः मनः सयम्य इतरविषयेभ्यो मनः निवर्तयित्वा मच्चित्तः मय्येव अन्तरङ्गस्थे परमप्रकशरूपे प्राणलिंगे चित्तं कुर्वन् मत्परः मामेव प्राणलिंगमेव परमप्राप्यं च कुर्वन् । युक्तः तादृशशिवयोगनिष्ठः आसीत । एवं केन्द्रीकृतदृङ्मनोवृत्तिः निश्चलचित्तः लिंगनिरीक्षणसमकाल एव स्वान्तर्विराज-मानं चित्प्रकाशमनुभवेत् । अयं शिवपूजाप्रकारः शङ्करसंहितायां एवं निर्दिश्यते व्यासमहर्षिणा । " यो हस्तपीठे निजमिष्टलिंगं विन्यस्य तल्लीन-मनःप्रसारः । बाह्यक्रियासंकुलनिस्पृहात्मा संपूजयत्यंग सा वीरशैवः " इति । यः साधकः हस्तपीठे, " अयं मे हस्तो भगवानयं मे भगवत्तरः " इति रुद्राध्याये लिंगाश्रयत्वात् हस्तस्यापि पूज्यत्वसूचनार्थं भगवत्पदप्रयोगः श्रूयते । एतादृशे हस्तपीठे निजं स्वमिष्टलिंगं स्वस्मादभिन्नं स्वीयं प्राणलिंगं विन्यस्य तस्य सततनिरीक्षणेन तल्लीनमनोवृत्तिः बाह्यक्रियास्वनासक्तः सन् श्रद्धयोत्साहेन स्वप्राणवत्प्रियतमं तदिष्टलिंगं समर्चयन्साधकः स्वीयं प्रकाशं पश्येत् । अत एवेदं गुर्वनुगृहीतमिष्टलिंगं पाणौ अर्चनार्थं निक्षिप्य सर्वदा मननादात्मानं मलकर्मभ्यस्त्रायत इति पाणिमन्त्रमिति, धारिणमर्चकं सर्वदा पावयतीति पावनमिति चानुभविभिर्भाव्यते ॥ १३–१४ ॥

**युञ्जन्नेवं सदात्मानं योगी नियतमानसः ।**
**शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥ १५ ॥**

पूर्वोक्तस्य शिययोगस्य फलम वेदयत्यत्र । योगी नियतमानसः संय-मितमनाः एवमात्मानं सदा अविच्छेदेन युञ्जन् योगे प्रवर्तयन् हृदये विराजमानेन आनन्दरूपेण प्राणलिंगेन समावेशयन् । भ्रूमध्यस्थेष्टलिंगस्य च समावेशेन जीवात्मा हृदये विलसता प्राणलिंगेन, शिरसि विराजमानेन सद्रूपेण भावलिंगेन च समरसतया विलीयते । अयमेवात्र योग इति कृष्ण-परमात्मना निर्दिष्टः । एतादृशयोगाय मानवदेहोऽत्यन्तोपकारकः । योगा-

यैवायं देहोऽनुग्रहीतोऽस्माकं भगवता। एवं योगनिष्ठस्य पुरोवर्तमानास्सर्वेऽपि जीवाः परमात्मभावनयैव गृह्यन्ते। एवं गृह्णन्नेव जीवः शान्तिं सर्वोपरतिरूपां निर्वाणपरमां निर्वाणः शिवसायुज्यरूपं कैवल्यं तदेव परमा निष्ठा यस्याः शान्तेस्तादृशीं कैवल्यपर्यवसायिनीमित्यर्थः। एतादृशीं मत्संस्थां परमात्मनि विद्यमानां मदधीनामित्यर्थः। तां अधिगच्छति प्राप्नोति। इह जीवितकाले त्रिगुणात्मकपाशाऽसंस्पर्शतया जीवितुं साधकास्तदा प्रभवेयुर्यदा ते बहिरन्त-र्भेददृष्टिं विहाय बाह्यमिष्टलिंगं प्राणभावनया अर्चयेयुः। एतादृशार्चनाय निर्दिष्टं शिवदीक्षासंस्कारमधिगतो जीवः स्वार्थत्यागपूर्वकमीश्वरार्पणदृष्ट्या लिङ्गार्चने श्रद्धाभक्त्या प्रवर्तमानः भक्त इति भाव्यतेऽनुभविभिः। अयमेव भक्तः भक्तिविकासेन निरभिमानस्थितिमधिगम्य हृदयस्थेश्वरस्य सन्निहितः प्रियश्च भूत्वा माहेश्वर इति व्यवह्रियते। अयमेव माहेश्वरः सर्वं प्रपञ्चं शिवमयं भावयन् शिवदृष्ट्या प्रसन्नचेता भूत्वा प्रसादीति कथ्यते। अयमेव प्रसादी एकान्तप्रदेशे उपविश्य भ्रूमध्ये अव्यक्ततया, करपीठे व्यक्ततया विकासमानमिष्टलिंगं समरसीकृत्य बहिरन्तश्चानुभवात् प्राणलिङ्गीति कथ्यते। अयमेव प्राणलिंगी योगारूढ इति भगवतात्र निर्दिष्टः। एवं च प्राणलिंगी देहाभिमानं परित्यज्य निर्लिप्ततया वसन् स्वदेह एव कैवल्यानन्दमनुभवितुं शक्नोति। एतादृशोऽनुभवः योगमार्गादेवाभ्यासेन साधनीयः। अयमेव अयनाय विहितो मार्गः। एतं विहाय नान्येन मार्गेण, हृदयं विहाय नान्यत्र शिवानुभवो लभ्येत। इम क्रमं विहाय नान्यथा शान्तिर्लभ्येत। शान्तिं विना दुःखमद्ये सुखं नानुभूयेत। अनेनैव क्रमेण जीवाः स्वीयमज्ञानं संशयं विमरीतभावनां च परिहातुं प्रभवेयुः॥

**नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः।**
**न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन॥ १६॥**

अत्र शिवयोगनिरतेनानुष्ठीयमानान् नियमानाह। हे अर्जुन, अत्यश्नतः अधिकं भुञ्जतः योगः नास्ति न सिध्यति। एवमेव एकान्तमत्यन्त

मनश्चतः अभुञ्जतोऽपि योगो न सिध्यति । एवं अतिस्वप्नशीलस्य सदा निद्रां कुर्वतोऽपि योगो न घटते । एवमेव सदा जाग्रतोऽपि पुरुषस्य हृदयस्थेनेश्वरेण सामरस्यरूपो योगः न संभवति । अतः आहारविहारयोरतिरेकं विसृज्य यः सावधानचित्तः प्रयतते तस्यैव शिवयोगः सिध्यति । स एव नियमसहिष्णुः योगमभ्यसेदित्यर्थः ॥ १६ ॥

युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥ १७ ॥

कीदृशः पुरुषो योगाभ्यासाय प्रभवेदित्यत्राह । युक्ताहारविहारस्य युक्तः नियतः, व्यवस्थित इत्यर्थः । तादृशः आहारो भोजनं विहारः चलनवलनादिकर्म यस्य सः तस्य । आहारविहारादिकं व्यवस्थयोपयुञ्जन्नेव साधकः शिवयोगमभ्यसेत् । कर्मसु क्रियमाणास्वपि युक्तचेष्टस्य परिमितव्यापारस्य । शरीरक्लेशमकुर्वत इत्यर्थः । अत्यायासकराणि कर्माण्यनुतिष्ठतस्तु देहश्रमेण शिवयोगो विफलस्सञ्जायते । अतो व्यवहारा अपि यथाशक्त्येव निरूह्याः । युक्तस्वप्नावबोधस्य स्वप्नजागरणयोरपि नियतप्रमाणस्यैव योगः दुःखहा दुःखाणि सर्वाणि हन्तीति दुःखहा सर्वदुःखविनाशको भवति । एवं च आहार-विहारयोः स्वप्नजागरणयोश्च यो नियमितः स एव त्यागभोगसमन्वयदृष्ट्या योगमार्गमनुसर्तुं प्रभवति । अतिनिद्रालुरतिजागरूको वा अतिभोगी अभोगी वा, एवमेव अतिव्यवहारी वा योगाभ्यासाय न प्रभवति ॥ १७ ॥

यदा विनियतं चित्तं आत्मन्येवावतिष्ठते ।
निःस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥ १८ ॥

विनियतमेवंप्रकारेण विशेषतः संयमितं व्यवस्थापितं उद्वेगावेशाभि-निवेशरहितं चित्तं अन्तःकरणं यदा आत्मन्येव केवलमवतिष्ठते स्थितिं करोति आत्मन अनुकूलं भवेत् तदा सर्वकामेभ्य ऐहिकामुष्मिकसर्वफलेभ्यो निस्पृहः इच्छारहितः साधकः युक्तः परशिवेन समाहितो भवति । चित्तमपि परमात्म-

निष्ठायाः प्राणरूपिण्याः चित्शक्तेः संकुचिता त्रिगुणात्मिका पराशक्तिरेव। चिच्छक्तिः चेतनात्मिका सच्चिदानन्दरूपिणी, चित्तशक्तिस्तु जडभूता सत्त्वरजस्तमोमयी। अयमेव तयोर्विशेषः। परमात्मा यदि चिच्छक्तिविशिष्टोऽस्ति तदंशो जीवात्मा तु चित्तशक्तिविशिष्टो वर्तते। इयमेव चित्तशक्तिः जीवस्य निरन्तरपरमात्मचिन्तनेन, धारणेन, अर्चनेन च सच्चिदानन्दरूपतया परिणमते। अयमेव शक्तिविकासः अभ्यासेन साधनीयः। तदानीमेव जीवः सद्भक्त इति कथ्यते। शक्तिसङ्कोचावस्थायां यः शिवात् भिन्न आसीत् स एव शक्तिविकासेन शिवेनाभिन्नो भवति। अयमेव शिवयोगः सर्वैरपि साधकैर्निररन्तरं शिवसंपर्काधानेनावश्यं संपादनीयः। नो चेत् , जीवः शिवांशोऽपि सन् शिवाद्भिन्न एव स्थित्वा चित्तशक्तिवशंगतः जननमरणचक्रे भ्रमणं सार्वत्रिकतया प्राप्नोति। अत एव देहेन्द्रियसहकारेण सर्वे साधकाः स्वान्तरंगे विराजमानेन परमशिवेन योगमधिगन्तुं प्रयतेरन्निति भगवानपेक्षते। आत्मसुखात्परतरं सुखमेव न कुत्रापि लभ्यते। सर्वोऽपि व्यवहारः आत्मसुखप्राप्तय एव निरूह्य इति भगवत आशयः सर्वैरपि ज्ञातव्यः ॥ १७ ॥

**यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।**
**योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ॥ १९ ॥**

एतादृशस्य शिवयोगिनो निदर्शनमाह। निवातस्तः निवाते वायुरहितप्रदेशे वर्तमानो दीपो यथा नेङ्गते न चलति सा दीप्तिः आत्मनः स्वस्य योगं शिवेन सामरस्यं युञ्जतः साधयतः यतचित्तस्य संयतान्तःकरणस्य शिवयोगिनः उपमा निदर्शनं स्मृता। सः दीपः यथा निश्चलो भासते तथा शिवध्याननिष्ठो योगी निश्चलां दृष्टिं भ्रूमध्यस्थेष्टलिंगे तद्रूपे च करपीठस्थेष्टलिंगे समरसतया विलीनां करोति। यः सदा शिवचिन्तनेन सुखदुःखयोः समभावनया सर्वमपि व्यवहारं कायकदृष्ट्या स्वकर्तव्यमिति चिन्तयित्वा निर्वहति तस्य चित्तं सहजतया स्वीयां दिव्यप्रकृतिमधिगच्छति। एवं यतचित्तस्यैव पुरुषस्य शिवयोगः सिध्यति। सर्वदा शिवस्मरणमेव चित्तसंयमहेतुः। चित्तसंयम एव

शिवयोगसाधनम् । एतत्सर्वमपि जीवात्मनः सत्संगेन साध्यते ॥

**यत्रोपरमते चित्तं निरुद्धं योगसेवया ।**
**यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥ २० ॥**

**सुखमात्यन्तिकं यत्तत् बुद्धिग्राह्यमतीन्द्रियम् ।**
**वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥ २१ ॥**

**यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।**
**यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते ॥ २२ ॥**

**तं विद्यात् दुःखसंयोगवियोगं योगसंज्ञितम् ।**
**स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ॥ २३ ॥**

तादृशशिवयोगसिद्धेः निष्कृष्टं स्वरूपमाह । योगसेवया शिवयोगाभ्यासेन निरन्तरशिवचिन्तनेन चित्तं अन्तःकरणं निरुद्धं विषयेभ्यो विनिवृत्तं सत् यत्र यस्यां दशायां उपरमते उपरतिं गच्छति, यत्र च दशायां आत्मना अन्तःकरणेन आत्मानमेव पश्यन् योगी चेतनात्मकस्य शिवस्य दिव्यं प्रकाशं अनुभवन् आत्मन्येव तुष्यति तृप्तिं भजते, यत्तत् बुद्धिग्राह्यं बुद्ध्यैव निर्मलया प्रशान्तया च बुद्ध्या केवलं ग्राह्यं न तु इन्द्रियग्राह्यं, अत एवातीन्द्रियं आत्यन्तिकं सुखं अनवधिकसुखस्वरूपं परमात्मानं यत्र च यस्यामवस्थायां स्थितो योगी वेत्ति जानाति, यत्र स्थित्वा अयं योगी तत्त्वतः तत्त्वस्वरूपात्परमात्मनः नैव चलति न कदापि प्रच्यवते, यस्मिन्ननुभूते पुनश्चाञ्चल्यमेव यो न कदापि विन्दत इत्यर्थः । यं आत्मदर्शनं लब्ध्वा च अनुभूय अपरं लाभं ततोऽप्यधिकं न मन्यते तदपेक्षया प्राप्तव्यन्यन्नास्तीति यो जानाति, यस्मिन्नात्मतत्त्वे स्थितो योगी गुरुणापि दुःखेन शस्त्रपातादिलक्षणेनापि न विचाल्यते न चलितो भवति तं दुःखसंयोगवियोगं दुःखैः संयोगः अनुभवः तस्माद्वियोगं योगसंज्ञितं योग इति संज्ञया वाच्यं विद्यात् जानीयात् । सः एतादृशः शिवयोगः निश्चयेन नियतमेव निर्विण्णचेतसा

निर्वेदसहितेन चेतसा प्रयोक्तव्यः कर्तव्यः। क्षणकालकरणमात्रेण फलालाभे सति निर्वेदमकुर्वता पुरुषेण दृढनिश्चयेन आत्मविश्वासेन अयं शिवयोगः साधनीयः। परं तु निरन्तराभ्याससाध्यः। "गच्छत्पिपीलिकापक्तिः समुद्रमपि सन्तरेत्" इत्यभियुक्तोक्त्या निरन्तरसाधनेन व्यवस्थितो यतिरात्मकल्याणं साधयितुं प्रभवेत्। हृदये विराजमानेन शिवेन सामरस्यं यः प्राप्नोति स एव धन्यः सुखी बुद्धिमान्, कुशलश्च संपद्यते। नो चेत् तस्य निरतिशयं ऐहिकं वैभवं सर्वमपि स्मशानपुष्पमिव व्यर्थं भवेत्। अतो निर्वेदस्यावकाशमपरिकल्पयन् साधकः सर्वदा गच्छन् तिष्ठन् भुञ्जन् श्वपन् एवं सर्वव्यवहारेष्वपि युक्त एव स्यादिति भगवत आशयः। तत्साधनाय न केवलं नैरन्तर्यं अपि तु आत्मनिश्चयोऽप्यावश्यकः। आत्मभूतो जीव एव परमात्मयोगं साधयितुमनुभवितुं च प्रभवेत्। न हि अनात्मवस्तु परमात्मानुभवमधिगन्तुं प्रभवेत्। किन्तु यः आत्मानन्दमनुभवति सः अनात्मवस्त्वपि देहादिकं आत्मसान्निध्येन आत्मवदेव भावयति। तस्य सर्वमप्यात्मैव दृश्यते। सन् हृदयप्रकाशस्तेन योगिना सर्वदा सर्वास्वप्यवस्थास्वनुभूयते। प्रापञ्चिकः स्थूलं बाह्यं रूपं यदि पश्यति शिवयोगी सूक्ष्ममान्तरं चित्प्रकाशमेव पश्यति। अयमेव तयोर्विशेषः। एवं ध्यानयोगस्वरूपमुपवर्णितं भगवता ॥ २३ ॥

सङ्कल्पप्रभवान् कामांस्त्यक्त्वा सर्वानशेषतः।
मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥ २४ ॥

शनैः शनैरुपमेत् बुद्ध्या धृतिगृहीतया।
आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत् ॥ २५ ॥

पुनरपि तस्यैव शिवयोगस्यादरातिशयादुपदेशः क्रियते। सङ्कल्पप्रभवान् सङ्कल्पो मानसं कर्म, तज्जन्यान् विषयाभिलाषादीन् सर्वानशेषतः कार्त्स्न्येन त्यक्त्वा मनसा बाह्यं भोग्यविषयं लेशतोऽप्यचिन्तयन्। एवं मनसो निर्व्यापारत्वे सिद्धे तेनैव मनसा इन्द्रियग्रामं चक्षुरादीन्द्रियसमुदायं समन्ततः

सर्वप्रकारतो विनियम्य सन्निरुध्य धृतिगृहीतया धृत्या धैर्येण गृहीतया युक्तया बुध्या दृढनिश्चयेन शनैः शनैः क्रमशः उपरमेदुपरतिं कुर्यात्। किं च मनः अन्तःकरणं आत्मसंस्थं आत्ममात्रविषयकं कृत्वा अन्यत्किञ्चिदपि वस्तु न चिन्तयेत्। एवं साधकः मनोनिश्चयेन बुद्धिं प्रसन्नां कृत्वा यथालाभसन्तुष्टः विषयव्यामोहं सत्सङ्गप्रभावेण सन्निरुध्य क्रमेण उपरतिं गच्छेत्। "शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा आत्मन्यात्मानमनुचिन्तयेत्।" इत्येव भगवती श्रुतिरपि वदति। एवमुपरतिरवश्यं साधनीयेति भगवत आशयः वर्धिष्णुभिर्नित्यं स्मरणीयः ॥ २५ ॥

**यतो यतो निश्चरति मनश्चञ्चलमस्थिरम्।**
**ततस्ततो नियम्यैतत् आत्मन्येव वशं नयेत् ॥ २६ ॥**

चञ्चलं स्वभावत एव चपलं, अस्थिरं कुत्रापि सहजतया न तिष्ठत् मनः यतो यतः यस्माद्यस्मान्निमित्तात् निश्चरति बहिर्गच्छति वशे न याति ततस्ततः तत्तन्निमित्तात् एतन्मनः नियम्य विवेकबलेन निरुध्य आत्मन्येव वशं नयेत्। परमात्मस्वरूपं केवलं यथा चिन्तयेन्मनस्तथा तस्य आनुकूल्यं संपादयेत्। मनस्सहकारेणैव जीवात्मपरमात्मनोः संयोगः सुसंघटितो भवेत्। अत एवात्र मनोनियमनमुपदिशति भगवान्मलदोषनिवारणद्वारा अध्यात्म-तत्त्वविकासाय ॥ २६ ॥

**प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम्।**
**उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥ २७ ॥**

पूर्वोक्तस्य शिवयोगस्य फलं निर्दिशत्यत्र। प्रशांतमनसं प्रशान्तं रजः रजोगुणः तमोगुणश्च यस्य तादृशं, एवमकल्मषं ब्रह्मभूतं परशिवैक्यङ्गतं योगिनं उत्तमं निरतिशयं लोकेऽन्यत्राननुभूतं सुखं परमानन्दः उपैति प्राप्नोति। शिवैक्यसुखात्परमं वस्तु न कुत्राप्यस्ति। तादृशं सुखं उत्तमसाधका एव निर्मलेन मनसा निर्मल एव हृदये लभन्ते ॥ २७ ॥

**युञ्जन्नेवं सदाऽऽत्मानं योगी विगतकल्मषः ।**
**सुखेन ब्रह्मसंस्पर्शं अत्यन्तं सुखमश्नुते ॥ २८ ॥**

अभ्यासतारतम्यानुगुणतया तादृशसुखेऽपि तारतम्यमस्तीति कथयत्यत्र। योगी आत्मानमेवं उक्तप्रकारेण सदा अविरलतया युञ्जन् योगं कुर्वन् तेन च विगतकल्मषः विगतसर्वमलपाशरूपपापः सुखेनानायासेन ब्रह्मसंस्पर्शं ब्रह्मणा सह सामरस्योत्पादकं अत्यन्तं सुखं मोक्षसुखं परशिवब्रह्मानुभवसुखं अश्नुते प्राप्नोति ॥ २८ ॥

**सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।**
**ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥ २९ ॥**

एतादृशयोगविपाकस्य फलं निर्दिशत्यत्र। आत्मानं स्वं सर्वभूतस्थं सर्वेषु भूतेषु समस्तप्राणिषु विद्यमानं निर्लिप्ततया अव्यक्ततया च तिष्ठन्तं, तथा सर्वभूतानि सकलप्राणिवर्गं आत्मनि स्वस्मिन् योगयुक्तात्मा योगे शिवसामरस्यरूपे योगे युक्तं मनः अन्तःकरणं यस्य तादृशः, एवं सर्वत्र उक्तसर्वभूतेषु समदर्शनः सर्वत्र ब्रह्मात्मैकत्वदर्शनवान् ईक्षते अनुभवति । सर्वं स्वस्मिन्, स्वं सर्वस्मिंश्च पश्यति शिवयोगी । शिवज्ञानिनः सर्वेऽप्येवमेव सर्वत्र शिवप्रकाशमेव पश्यन्ति । अतः एकविज्ञानेन सर्वविज्ञानश्रुतिस्तैः शिवयोगिभिर्महर्षिभिः प्रतिश्रुता विराजते । यः स्वहृदये विराजमानं परमात्मानं प्रथमं पश्यति योगसाधनेन सः तमेव महाप्रकाशं सर्वत्र पश्यति । मलकर्मसंपर्केण प्रतिजीवं भेदे सत्यपि तदन्तर्गते परमशिवे तावद्भेदो नास्त्येव । आत्मज्ञानी सदा आत्मदर्शन एव निरतो वर्तते । एतादृशेन योगेन सर्वे व्यावहारिकाः लोके वसेयुरिति भगवान् निरीक्षते ॥ २९ ॥

**यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।**
**तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥ ३० ॥**

तादृशस्यात्मैकत्वदर्शनस्य फलं निर्दिशत्यद्य। यः उक्तयोगी मां

परमात्मानं सर्वत्र पश्यति, एवं सर्वं च जगत् मयि परमात्मन्येव पश्यति तस्य तादृशः आत्मैक्यदर्शनवतः शिवयोगिनः अहं न कदापि प्रणश्यामि नश अदर्शने इति धात्वर्थगतां परोक्षतां अदर्शनस्थितिं न कदापि उत्पादयामि। तथैव सोऽपि मे न प्रणश्यति न हि परोक्षः संपद्यते। सः मां सदा पश्यति; अहमपि तं सदा पश्यामि मदर्थं यः सर्वान् प्रीणयति सः न कदापि विनाशं गमिष्यति। लोके विद्यमानं कामिनीकाञ्चनादिकं विविधं वस्तुजातं दृष्टमपि ज्ञानिनः एकमेव परमात्मप्रकाशं सर्वत्र पश्यन्ति। शरणगीता बसवार्यस्य पवित्रं जीवनमेवं निर्दिशति। "यद्यद्धि पश्यामि तदेव नित्यं मनो मदीयं स्मरतीति चिन्ता। मा भूच्च ते कूडलसङ्गमार्य मद्वर्तने त्वं प्रमथाश्च मानम्॥ परस्त्रियः शर्ववधूस्वरूपा इत्येष एवास्ति विनिश्चयो मे।" इति। एवमात्मनिश्चयस्तेषामध्यात्मदर्शनेऽस्मानाधुनिकानधुनापि प्रबोधयति ॥ ३० ॥

सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः।
सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥ ३१ ॥

स योगी शिवानुभववान् शिवयोगसिद्धः एकत्वं शिवैकत्वमास्थितः सम्यक् जानन् मां परमात्मानं सर्वभूतेषु प्राणिवर्गेषु विद्यमानं परमात्मानं भजते सेवते सः योगी सर्वथा वर्तमानोऽपि सर्वप्रकारैः स्थितोऽपि मय्येव परमात्मनि वर्तते। सदा परमात्मन्येव मग्नचित्तो भवति सः। तस्य सर्वसमभावनां आत्मौपम्यदृष्टिमेवमुपवर्णयति शरणगीता। 'एकैव भूमिः परिदृश्यते हि शिवालयस्य श्वपचालयस्य। ग्रामस्य मध्ये द्विजवासभूमिर्ग्रामाद्बहिश्च श्वपचस्य भूमिः॥ किमेवमस्ति प्रविभाग एषः त्वां सर्वतो दृष्टवतो जनस्य। अन्तर्धिभेदात्खलु नामभेदः तन्नाशकालेऽन्तरबाह्ययोर्न॥ भेदस्समस्तीति विभावयन्तः सर्वत्र पश्याम भवद्विभूतिम्।" इति शुच्यशुचिषु सर्वेष्वपि वस्तुजातेषु वस्तुतो निर्लिप्ततया वर्तमानं परमात्मानमेव पश्यन्तः शरणाः मानवेष्वपि तादृशीमेव दृष्टिमुत्पादयन्ति। एतादृशाः महापुरुषाः स्त्रियश्च लोककल्याणायैव जाताः लोके सर्वत्र लोकपतिमेव पश्यन्तस्सदैव शान्त्या

निवसन्तः सामान्यजीविष्वपि सर्वसामान्यं परमात्मानमेव द्रष्टुं उद्बोधयन्ति ॥

आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।
सुखं वा यदि वा दुःखं स योगी परमो मतः ॥ ३२ ॥

एतादृशस्यैव योगिनः सर्वश्रेष्ठत्वं प्रतिपादयति । एवं सर्वत्र आत्मैक्य-भावनायाः सत्त्वात् शिवयोगिनः आत्मौपम्येन आत्मसादृश्येन सर्वत्र सर्व-भूतेष्वपि सुखं वा यदि वा अथवा दुःखं उभयमपि सममेव । सर्वेषां सुखं स्वस्य सुखमिव, सर्वेषां च दुःखं स्वदुःखमिव च यः पश्यति जानाति, हे अर्जुन, स एव योगी परमः सर्वश्रेष्ठो मतोऽभिमतः । मानवान्सर्वानपि सम-दृष्ट्या भावयतां शिवयोगिनामादर्शं जीवनं शरणगीतायामेवं निर्दिश्यते । "रजो विना बिन्दुसमागमो न जलस्य बिन्दोश्च समानपातः । आशामिषाद्या विषयास्समानाः श्रुत्वा पठित्वा फलमेव किं स्यात् ॥ सप्तधातुसमं पिण्डं सम-योनिसमुद्भवम् । आत्मजीवसमुत्पन्नं वर्णानां किं प्रयोजनम् ॥ अयः प्रताप्य स्वयमेव जातोऽयस्कारनामा रजकश्च धावनात् । तन्तुं वयित्वा च कुविन्द-नामा वेदं पठित्वा द्विज एक आसीत् ॥ कर्णेऽभिजातः क इहास्ति लोके योनेर्हि जाता इति सिद्धमेतत् । य एव देहे सुविराजमानं लिङ्गं विजानाति स एव धन्यः ॥" इत्येवं विशालभावनया शरणाः लोके सर्वत्र शिवमेवावलोकयन्तः विभिन्नस्वभावेष्वस्मास्वपि तादृशीमेवात्मौपम्यदृष्टिमुत्पादयन्ति । लोके दृश्य-वस्तुषु सर्वेष्वपि सुन्दररूपत्वात् कामिन्येव सर्वेषामपि मोहकारिणीति जना वदन्ति । तादृश्याः कामिन्याः स्वरूपं विवेचयन्तः शरणास्तु मानवान्सर्वानपि सम्यक् प्रबोधयन्ति । कामिनीविषये तैराचरितं समदर्शनमाधुनिकानां सर्वेषामपि मार्गदर्शकं वर्तते । तदीया अमरवाणी यूनां मनसि सर्वदा यदि विराजेत तदा भूमिः स्वर्गायेत । तदीया दिव्या वाणी एवं विलसति । "स्वयं कृता सा वनिता स्वयंभुवः शिरस्समारुह्य समास्थिता पुरा । तथैव तत्सृष्टिमुपेत्य लक्ष्मीर्हरेर्हृदन्ते विजहार पूर्वम् । तस्माच्च योषिन्न हि योषिदेव न राक्षसी किन्तु पराऽस्य शक्तिः ॥" इति । एवं सहनशीलायां स्त्रियां पराशक्तिभावना

मानववर्गस्यैव श्रेयस्करा सुखावहा च वर्तते। एवं जगद्व्यापकेषु भूसुवर्ण-कामिन्यादिषु यथा मनो नानुषज्जेत्, यथा च तेष्वेव निर्विकारतया तिष्ठति परमात्मप्रकाश एव मनोऽनुरज्जेत् तथा वीर्यवत्तरया वाण्या आत्मौपम्यदृष्टिं सर्वेषामनुष्ठानायोपदिशति भगवान् ॥ ३२ ॥

एतादृशस्य शिवयोगस्योत्कृष्टफलत्वेऽपि कर्तुमशक्यत्वं मन्वानोऽर्जुनः अशक्यार्थस्य तत्वस्योपदेशेन लाभाभावात् कस्तत्रोपाय इत्याशयेन पृच्छति–

**योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन ।**
**एतस्याहं न पश्यामि चञ्चलत्वात्स्थितिं स्थिराम् ॥ ३३ ॥**

अर्जुन उवाच । हे मधुसूदन कृष्ण, साम्येन सर्वत्र समताभावना-विशिष्टतया योऽयं योगः इदानीं त्वया प्रोक्त उपदिष्टश्चाञ्चल्यात् योगस्य सिद्धिं नाहं पश्यामि । मन एव मे चाञ्चल्यात् योगं ज्ञातुं आचरितुं च न प्रभवति । मनसः स्वत एव चाञ्चल्यात् एतादृशी दुरवस्था मे संजाता । एतस्यास्य तुच्छस्य मे मनसः स्थिरां निश्चलां स्थितिं न पश्यामि । यदि स्थिरं स्यादिदं मनः तदा तवायमुपदेशः सफलो भवेदेव । एवमर्जुनः सामान्यमानव इव तदीयं दौर्बल्यं स्पष्टयति ॥ ३३ ॥

**चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम् ।**
**तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥ ३४ ॥**

मनश्चाञ्चल्यमेव विवृणोत्यत्रापि । हे कृष्ण, मे मनो हि मनस्तावत् चञ्चलं सहजतया चपलमित्येतत् प्रसिद्धमेव । परन्तु मे मनः न केवलं चञ्चलस्वभावं, किञ्च प्रमाथि प्रमथनशीलं चक्षुरादीन्द्रियाणि प्रमथ्य स्ववशी-करणसमर्थं च वर्तते । बलवन्तमिन्द्रियग्रामं स्वाधीनं कर्तुं हतमिदं मे मनः प्रभवति । एवं बलवत्त्वात् न सुलभतया नियन्तुं शक्यम् । न केवलमेवं बलवत् अपि च दृढं बिसतन्तुना गज इव न बन्धयितुं शक्यम् । एतादृशस्य तस्य निग्रहं निरोधं वायोरिव सुदुष्करं सुतरां दुस्साध्यं अहं मन्ये । अतो

भवतोपदिष्टं योगं कः कर्तुं समर्थः? अथवा मनोनिग्रहे को वा उपायोऽस्ति? अस्ति चेत् तन्मे उपदिशतु भवान् इत्यर्जुनः कृष्णं ययाचे ॥ ३४ ॥

**असंशयं महाबाहो मनोदुर्निग्रहं चलम् ।**
**अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥ ३५ ॥**

एवमर्जुनेनोक्तमङ्गीकृत्य तस्योत्तरं भगवानुवाच। हे महाबाहो अर्जुन, असंशयं भवदुक्तार्थे संशयो नास्त्येव। सत्यमेव मनः चलं चञ्चलं दुर्निग्रहं निगृहीतुमशक्यं च। तत्र न कस्यापि विप्रतिपत्तिर्वर्तते। सर्वाभ्युपागतोऽयं विषयः। तु परन्तु कौन्तेय, हे अर्जुन, अभ्यासेन प्रतिदिवसं अभ्यास-करणेन, तन्मूलतया वैराग्येण च आत्मव्यतिरिक्तविषयेषु अनासक्त्या च गृह्यते निबध्यत इदं मनः। एवं च यावत्पर्यन्तं मनः विषयाभिलाषं भवति तावत्पर्यन्तं मनसो जयः असंभव एव। मनसो निर्विषयत्वमधुना साधयित-व्यम्। मनो यदा प्रापञ्चिकानेव विषयान् परमात्मप्रीत्यर्थं विनियोक्तव्यान् भावयेत् तदा मनः महाविषये परमात्मन्येवासक्तं भवेत्। परमात्मा तु निरा-कारस्सच्चिदानन्दमयो वर्तते। तदासक्तं मनोऽपि निराकारस्थितौ रममाणं सत् सच्चिदानन्दमयमेव भवेत्। मनः निरन्तरं यं विषयं चिन्तयेत् तादृशमेव रूपं तदधिगच्छति। विषयचिन्तनेन तदेव प्रापंचिकं भवति; ईश्वरचिन्तनेन पारमार्थिकं संपद्यते। अत एव ज्ञानिनः मनः पिकत्वेन शुकत्वेन च रूपयन्ति। शरणगीता शरणानां मनोनिग्रहप्रकारमेवं निर्दिशति। "मनःशुकस्यार्तनिनाद-मेतं निशामय श्रीगुरुसङ्गमार्य। संपीडितोऽसौ भवरोगदुःखादितस्ततो भ्राम्यति मोहदृष्ट्या॥ निर्बध्य चैतं शिवभक्तिपञ्जरे दिव्यामृतं प्राशय वत्सभावात्। तथा कुरु त्वं सदयं तथायं ह्युच्चारयेदद्य शिवेति शब्दम्॥" इति। एवं शरणाः शिवभक्तिपञ्जरे मन इदं निगृह्य शिवमयस्यास्य प्रपञ्चस्य सेवायै नियुञ्जन्तः तथैव सर्वे व्यावहारिकाश्च कुर्युरिति सौम्येन मनसा लोककल्याणस्य दिव्यमा-दर्शं तेषां पुरो निदधति ॥ ३५ ॥

**असंयतात्मना योगो दुष्प्राप इति मे मतिः ।**
**वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ॥ ३६ ॥**

असंयतात्मना अभ्यासवैराग्याभ्यां अजितमनसा योगः उक्तयोगः दुष्प्रापः प्राप्तुमशक्य एवेति मे मम मतिः निर्णयः । वश्यात्मना तु जितमनसा तु यतता प्रयत्नं कुर्वता उपायतः उक्तवैराग्याद्युपायात् योगमवाप्तुं शक्यते । मनोजयादेव साधकः अध्यात्मक्षेत्रे प्रगतिमाप्नुयात् । यतो हि मनः सर्वाकार्षिण्याः मायाशक्तेः प्रधानमवलंबनमिति शिवानुभविनो वदन्ति । कामिनिकांचनादिकं मायेति अनेके अभिप्रयन्ति ; किन्तु शरणाः मानसीमाशामेव मायां परिकल्पयन्ति । अतो मनः महाविषये महादेवे यदि रमेत तदा तच्च महादेव एव भवेदित्यभियुक्ता वदन्ति । मनोमायाविजये सुगममुपायं निवेदयन्ति शरणाः । शरणाग्रगण्यो बसवार्य एवं वदति । "त्वदीयमाया गुरुकूडलार्य सर्वं जगत्सर्वत आवृणोति । तथा भवन्तं परितः स्तृणोति मनो मदीयं त्विदमत्र चित्रम् । प्रभुर्यदि त्वं जगतो हि देव तवाहमत्रास्मि विनोदभूमिः । करी यथा दर्पण एव लीयते तथा त्वमेवाद्य निलीयसे मयि ॥" इति बसवार्यस्तदीये मनसि परमात्मावस्थितिं स्पष्टयित्वा तदीयचिन्तनमेव मनोविजयहेतुत्वेन निर्दिशति । हृदये तिष्ठतः परमात्मनो नित्यस्मरणमेव सर्वव्याधिनिवारणोपाय इति सर्वे दार्शनिका अभिप्रयन्ति । निराकारं मनो न कदापि साकारस्मरणात्तृप्यति । निराकारस्येश्वरस्य चिन्तनादेव तदैक्यानुभवेन मनस्तृप्येत । जगति सर्वश्रेष्ठ इति परिगणितः परमेश्वर एव सद्भक्तस्य निर्मले हृदयेऽन्तर्भवतीति ज्ञानिनो वदन्ति । शरणगीता परमात्मावासभूतस्य सद्भक्तस्य महत्त्वमेवं वर्णयति । "घनः समुद्रः किमु ? नैतदेवं यतो हि भूमावयमेव लीनः । भूमिर्घना किम् ? न च युज्यते तथा यतो हि सा तिष्ठति नागमस्तके ॥ नागो घनः किम् ? न च तद्धि युज्यते यतो हि नागस्त्ववलंबते ह्युमाम् ? । उमा घना किम् ? न हि तच्च युज्यते शिवार्धभागे तु निवेशिता सा ॥ शिवो घनः किम् ? न च तद्भवेन्नु यतो ह्यसौ तिष्ठति सङ्गमार्य । त्वदेकनिष्ठस्य

हृदग्रभागे ह्यतश्च भक्तो भवदीयतेजः ॥" इति। एवं सद्भक्तानां सङ्गे स्थित्वा सद्विषयाकर्णनेन मनसि सद्भावनां यदि साधकः पदेपदे परिकल्पयति तदैव मनोनिग्रहः सुगमो भवेदित्याशयेन जितमनस एव साधकस्य योगसिद्धेः संभवमुपदिशति भगवान् ॥ ३६ ॥

एवं मनसो जयस्य अतीव क्लेशसाध्यत्वे भगवतैव प्रतिपादिते सति, यः कश्चित् योगाभ्यासं कर्तुं प्रवृत्तः तादृशमनश्चाञ्चल्यात् कदाचित् योगाद्यदि चलितो भवेत् तदा तस्य का गतिस्स्यादित्यर्जुनः पृच्छति—

**अयतिः श्रद्धयोपेतो योगाच्चलितमानसः ।**
**अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥ ३७ ॥**

अर्जुन उवाच—हे कृष्ण, श्रद्धया योगः साधनीय इति श्रद्धायुक्तोऽपि पुरुषः अयतिः मनश्चाञ्चल्यात् अभ्यासाद्यकरणेन यथोचितप्रयत्नविमुखः अत एव योगच्चलितमानसः योगमनुष्ठातुमशक्यमनश्शक्तिमान् योगसंसिद्धिं योगस्य फलं अप्राप्य तादृशः अप्राप्नुवन् साधकः कां गतिं कीदृशीं गतिं गच्छति? तस्योत्तरगतिः का? इत्यर्जुनप्रश्नस्याशयः ॥ ३७ ॥

**कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति ।**
**अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि ॥ ३७ ॥**

स्वप्रश्नाशयं स्वयमेव विवृणोति। हे महाबाहो कृष्ण, सः विमूढः विषयव्यामोहविशिष्टः ब्रह्मणः पथि परशिवसामरस्याधिगमावसरे अप्रतिष्ठः प्रतिष्ठाशून्यः योगभ्रष्टत्वात् परमात्मानुग्रहात् लोकविश्वासाच्च भ्रष्टः सन् कर्ममार्गात् योगमार्गाच्च पतितः छिन्नाभ्रमिव आकाशे मेघखण्ड इव न नश्यति कच्चित् नाशं न प्राप्नोति किम्? योगारूढः पुरुषः यदि कदाचित् योगभ्रष्टो जायेत तदा सः शिवयोगात् च्युतोऽपि लोके विषयभोगानुकूलात् कर्ममार्गादपि किं च्युतो भवेत्? योगाद्विदूरा ह्यनेके सदा भोगमार्गमेवावलंबमाना वर्तन्ते। तेषां विषये वक्तव्यं किञ्चिदपि नास्ति। ये तु योगमार्गनिरता यदि योगभ्रष्टा

भवेयुस्सदा ते जन्मान्तरे भोगमार्गमपि किं नाश्रयन्ते ? किं योगभ्रष्टः उभयभ्रष्टो भवेदिति ज्ञातुं अर्जुनः कुतूहली बभूव ॥ ३८ ॥

**एतन्मे संशयं कृष्ण छेत्तुमर्हस्यशेषतः ।**
**त्वदन्यः संशयस्यास्य छेत्ता नह्युपपद्यते ॥ ३९ ॥**

हे कृष्ण, मे मम एतं संशयमशेषतः संपूर्णतः छेतुं परिहर्तुं अर्हसि। यतः त्वदन्यः त्वद्व्यतिरिक्तः कश्चित् अस्य महतः संशयस्य छेत्ता परिहर्ता न भवितुमर्हत्येव । कोऽन्योऽस्ति त्वत्सदृशः अन्यः कश्चित् ज्ञानी ? त्वत्तोऽपि हितावहः अन्यः कश्चिन्नास्त्येव मे। अतस्त्वयैव मे संशयोऽयं निवारणीयः॥

**पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते ।**
**न हि कल्याणकृत्कश्चित् दुर्गतिं तात गच्छति ॥ ४० ॥**

एवं पृष्टः श्रीभगवानाह । हे पार्थ अर्जन तस्य तादृशस्य योगाच्छलितमनसः योगभ्रष्टस्यापि इहास्मिन्लोके वा अमुत्र परलोके वा विनाशः भवदुक्तविनाशो न विद्यते न संभवति । नाशो नाम विद्यमानजन्मनोऽपि हीनजन्मप्राप्तिः। तदपि तस्य न भविष्यत्येव। कुत इत्यत्राह नहीति। हे तात अर्जुन, कल्याणकृत् कश्चित् शुभकर्मकृत् मानवो यः कश्चिद्वा दुर्गतिं हीनावस्थां नहि गच्छति न कदापि प्राप्नुमर्हति । आत्मश्रेयस्साधनाय कृतः प्रयत्न एव शुभकर्मेत्यन्युभविनो भावयन्ति। तादृशशुभकर्मणि प्रवर्तमानः कदाचित् मायायाः वक्रदृष्टेः पात्रं भूत्वा यदि शुभकर्मणो भ्रष्टो भवेत् तदापि सः अशुभं फलं नैव प्राप्नुयात् ॥ ४० ॥

**प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः ।**
**शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥ ४१ ॥**

तर्हि योगभ्रष्टस्य किं भविष्यति इत्यत्राह । योगभ्रष्टः शिवयोगाच्चलितः पुण्यकृतां अश्वमेधादिमहापुण्यकृतां महापुरुषाणां लोकान् स्वर्गादीन् प्राप्य तत्र शाश्वतीः बह्वयः समाः संवत्सरान् उषित्वा वासं कृत्वा अनन्तरमपि

शुचीनां परिशुद्धात्मनां श्रीमतां निरतिशयैश्वर्यविशिष्टानां गेहे गृहे। वंश इत्यर्थः। अभिजायते पुनर्जन्म लभते। तथा च तस्य ऐहिके अमुष्मिके वा सुखे प्राप्तव्ये उत्कर्ष एव दृश्यते। उत्कृष्टफलप्राप्तिरेव तस्य संभवेदित्युक्तं भवति ॥ ४१ ॥

अथवा योगिनामेव कुले भवति धीमताम्।
एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥ ४२ ॥

श्रीमतां कुले जन्मप्राप्त्यपेक्षया उत्कृष्टजन्मप्राप्तिरपि योगभ्रष्टानां भवितुमर्हतीत्याह। अथवा श्रीमतां संपद्भरितानामेव संपन्नानां कुले अजननेऽपि धीमतां विवेकिनां योगीनामेव कुले अयं योगभ्रष्टो भवति जायते। यत् ईदृशं जन्म योगसिद्धानामेव कुले संभवति। एतत् लोके दुर्लभतरं अतीव दुर्लभम्। योगभ्रष्टस्यापि उत्कृष्टमेव जन्म संभवति अतो मानवैः योगनिष्ठैरेव भवितव्यम्। भोगमार्गावलंबिनः सदा स्वार्थपरायणाः मोहदृष्ट्या स्वीयं मूलभूतं परमात्मानमेव विस्मरन्ति। अत एव तेषां अधोगतिर्नियता। योगमार्गनिरतास्तु योगिश्रेष्ठस्य परमेश्वरस्यातीव प्रियतमास्सन्तः माहेश्वराभिख्यां लब्धवन्तः इहपरसुखशान्तिसमृद्धिमनुभवन्तः कदाचिद्योगभ्रंशेनापि अधोगतिं न प्राप्नुवन्ति। तेषां तु इह अमुत्र च सुखं विद्यतैव। एवं च शिवभूतास्सर्वेऽपि साधकाः शिवेन सह योगाय यथाशक्ति यथामति च प्रयतेरन्निति भगवानादिशति ॥ ४२ ॥

तत्र तं बुद्धिसंयोगं लभते पौर्वदैहिकम्।
यतते च ततो भूयः संसिद्धौ कुरुनन्दन ॥ ४३ ॥

तादृशोत्कृष्टकुले योगभ्रष्टस्य जनने वैशिष्ट्यमाह। हे कुरुनन्दन पार्थ, तत्र तस्मिन् कुले सः योगभ्रष्टः पौर्वदैहिकं पूर्वस्मिन् देहे भवं पूर्वजन्मसाधितं तादृशं बुद्धिसंयोगं समीचीनबुद्धिमत्तां लभते सहवासवशादेव प्राप्नोति। एवं च योगभ्रष्टे पूर्वजन्यकृतो योगः संस्काररूपेण वर्तत एव। तेन संस्कारेण

विशिष्ट एव सः जन्मान्तरं लभते। तस्मिन् जन्मनि पूर्वजन्मसंस्कार उद्बुद्धो भवति। तस्मात्कारणात् सः पुनरपि संसिद्धौ योगसंसिद्धिनिमित्तं यतते च प्रयत्नं करोत्येव। एवं च एकदा कृतस्य शिवयोगस्य भ्रंशः न कदापि संभवेदित्यर्थः ॥ ४३ ॥

पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः।
जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥ ४४ ॥

सः योगभ्रष्टः योगिनां कुले जातः तेनैव पूर्वाभ्यासेन पूर्वजन्मसंपादितयोगाभ्याससंस्कारबलेन अवशोऽपि अप्रयत्नोऽपि ह्रियते तदुन्मुखो भवति। योगस्य जिज्ञासुरपि योगस्वरूपं ज्ञातुमिच्छन्नपि सः योगभ्रष्टः पूर्वतनसंस्कारवशात् शब्दब्रह्म वेदोक्तकर्मकलापं अतिवर्तते अतिक्रम्य शिवयोगमार्गे एव वर्तते। तावतैव तस्य योगः सुसाध्यो भवतीत्यर्थः ॥ ४३ ॥

प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥ ४५ ॥

जिज्ञासोरपि योगो यदि सुसाध्यः स्यात् तदा प्रयत्नाद्यतमानस्तु योगी योगसाधनाय तीव्रं प्रयत्नं कुर्वंस्तु स योगी संशुद्धः अनेकेषु जन्मसु किञ्चित्किञ्चिदभ्यासजन्यसंस्कारोपचयवशात् शिवयोगस्य सिद्धिं प्राप्तः तत्फलतया परां गतिं शिवसायुज्यरूपं मोक्षं प्राप्नोति ॥ ४५ ॥

तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः।
कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥ ४६ ॥

सर्वापेक्षया शिवयोगिनः श्रेष्ठत्वं प्रतिपादयति। तपस्विभ्यः तपोनिष्ठेभ्योऽपि योगी शिवयोगनिष्ठः अधिक उत्कृष्टः। ज्ञानिभ्योऽपि शास्त्रजन्यपाण्डित्यवद्भ्योऽपि योगी अधिकः उत्कृष्टो मतः सम्मतः। कर्मिभ्यश्च अग्निहोत्रादिकर्मकर्तृभ्यः अविज्ञातशिवतत्त्वेभ्यः केवलकर्मनिरतेभ्यश्च योगी शिवेन सामरस्यमधिगतवान् योगसिद्धः अधिक उत्कृष्टः। हे अर्जुन,

तस्मात्कारणात् त्वमपि योगी योगनिष्ठो भव। एवमर्जुनव्याजेन सर्वान् व्यावहारिकान् जनान् स्वान्तरङ्गे विराजमानेनेश्वरेण संयुज्यैव लोके वसितुं तथैवेश्वरप्रकृतिमधिगन्तुं च प्रेरयति भगवान्। "गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्" इत्यस्मिन् ब्रह्मसूत्रे आत्मनोर्द्वयोरवस्थानं स्पष्टं निर्दिष्टम्। जीवात्मा शरीरस्वाम्यमधिगम्य स्वीयं प्रभुं परमात्मानं विस्मृत्यैव अहङ्कारेण व्यवहरन् दुःखपरंपरया बाध्यमानोऽपि तदेव सुखमिति बुध्वा तत्रैव मुह्यति। परमात्मा तु असंस्पृष्टसुखदुःख एव निर्लिप्तो वर्तते। तेन सह युक्तश्चेज्जीवः परमात्मप्रकृतिमानन्दमयीमेवाधिगच्छति। तेन वियुक्तस्सन् व्यवहारेण दुःखमश्नुते। स च वियोगः अहङ्कारभिमानपोषणेन जीवस्य दुःखं वर्धयति। योगस्तु शक्तिविकासेन सुखप्रकृतिं स्थिरयति। शिवेन सामरस्यानुभव एवात्र योगशब्दार्थः। अयमेव शिवयोगोऽत्र अभ्यासससाध्य इति निर्दिष्टः। एवं योगस्यानिवार्यतां भगवानुपदिशति। योगाभावे मानवजन्मैव व्यर्थं भवेदित्याशयः। तथा च शिवयोगसिद्धः शिवेन सह वसन् शिवप्रियो भूत्वा एकदिनं यदि वसेदिह तदेव जन्मसार्थक्यं संपादयतीति शिवयोगिनोऽभिप्रयंति ॥४६॥

**योगिनामपि सर्वेषां मद्गतेनान्तरात्मना।**
**श्रद्धावान् भजते यो मां स मे युक्ततमो मतः ॥ ४७ ॥**

सर्वेषां योगिनामपि आदित्यचतुर्मुखादीतरदेवताध्यानपराणां सकलविधयोगिनां मध्ये मद्गतेन हृदिस्थेश्वरासक्तेन तदेकपरेण आत्मना अन्तःकरणेन मां तदीयहृदये विराजमानं प्राणलिङ्गं श्रद्धावान् तदेकप्रवणो भक्तिमान् यः भजते सेवते स एव युक्ततमः सर्वयोगिष्वप्युत्तमो मे मतः सम्मतः। एवं योगिषु सर्वेष्वपि शिवयोग्येव उत्कृष्ट इति कृष्णः शिवतादात्म्यभावनयोपदिशति। तथा च योगोऽत्र प्राधान्यतया निर्दिष्टः। योगो नाम सामरस्यम्। पूर्णभिन्नयोः वस्तुनोः सामरस्यं न संभवति। पूर्णाभिन्नयोस्तु सामरस्यप्रतिपादनावश्यकतैव नोदेति। वस्तुतोऽभिन्नयोरेकरूपयोः योग एव त घटते। अतो जीवपरमयोः वस्तुतः चिद्रूपेणैकजातीययोः प्रकृतिसंपर्केण सहजतया

भिन्नयोर्योयोऽत्र भगवता उपदिश्यते। तिलतण्डुलवत्पूर्णभिन्नौ चेत् जीव-परमात्मनौ तदा तयोर्योगो न संभवत्येव। चेतनात्मकतया वस्तुत एकरूपयो-र्भिन्नप्रस्थाने निमग्नयोस्तु ज्ञानक्रियासमन्वयात्मिकया भक्त्या योगः सहजतया संघटते। एवं च योगः एकजातीययोरेव तत्रापि भिन्नशक्तिकयोः संभवति न तु भिन्नजातीययोः। जीवपरमात्मानौ चिज्जातीयावपि शक्तिवैशिष्ट्येन भिन्नौ वर्तेते। अत एव तयोः बद्धावस्थायां शक्तिभेद त् सहजतया भेदः, बुद्धावस्थायां चिदैक्यरूपोऽभेदश्च संभवतः। जीवः माययापहृतैश्वर्यः स्वीयशक्तेस्सङ्कोचेन क्षीणशक्तिकः अल्पः परिमितश्च वर्तते। परमात्मा तु पूर्णशक्तिकोऽपरिमितोऽखण्डश्च वर्तते। तन्निष्ठा इच्छाशक्तिः विशाला सर्वव्यापिका अपरिच्छिन्ना अनन्ता च वर्तते। जीवनिष्ठा तु सा शक्तिः स्वार्थमात्रपरा परिमिता च वर्तते। तथैव परमात्मनिष्ठा ज्ञानशक्तिरप्रतिहता निरर्गळा विश्वव्यापिका च विराजते। जीवनिष्ठा पु सा शक्तिरत्यल्पा, मितव्याप्तिका दुरभिमानपूर्विका च वर्तते। तथैव परमात्मनिष्ठा क्रियाशक्तिः वीर्यवत्तरा अप्रतिस्पर्धिनी अनवधिका अद्भुता अखण्डा च विराजते। जीवनिष्ठा तु सा शक्तिः स्वार्थसाधिका परिमिता देश-कालाद्यवधिका च वर्तते। एवं चिद्रूपेणैकजातीययोरपि जीवपरमयोः शक्ति-सङ्कोचविकासाभ्यां स्वाभाविकभेदो विलसति। अतस्तौ न संपूर्णमभिन्नौ। परंतु द्वावपि शक्तिविशिष्टावेव। एकस्य शक्तिरपरिमिता; अपरस्य तु परिमिता। परमात्मा चिच्छक्तिविशिष्टश्चेत् जीवात्मा चित्तशक्तिविशिष्टो वर्तते इति प्रागेवोक्तम्। एवं च चित्तशक्तिविशिष्टस्य जीवस्य चिच्छक्तिविशिष्टेन शिवेन सह अद्वैतं सामरस्यमत्र कृष्णपरमात्मनोपदिश्यते। एतादृशमद्वैतं अवश्यं संपादनीयमेव। मूलतः अभिन्नयोः शक्तिवैशिष्ट्येन भिन्नयोः तस्या एव शक्तेर्विकासेन अद्वैतं संघटते। एतादृशो योगः अभ्यासेन निरन्तरसाधनेन च अधिगन्तव्य इति भगवानुपदिशति।

नदीसमुद्रवत् मूलतोऽभिन्नावपि जोवेशौ सहजतया भिन्नावेव वर्तेते। तयोर्विवेचनमालोचनमारचनं च प्रत्येकं विभिन्नमेव वर्तते। जीवस्य

विवेचनं स्वार्थमूलं ; परमात्मनस्तु लोककल्याणायत्तं सर्वव्यापकं श्रूयते। तथैव जीवस्यालोचनं स्वस्य स्वसंबन्धिनां च हितावहम्, परमात्मनस्तु लोकहितासक्तमिति विश्रुतमेव। तथैव जीवस्य आरचनं तु स्वकुक्षिपूरकं स्वार्थैकप्रवणम् ; परमात्मनस्तु सार्वजनिकं अव्याजप्रेममयम्। एवं च तयोर्भेदः सहजतया सिद्धः ; न त्वौपाधिकः ; न वा यादृच्छिकः। तथा च प्रकृत्या भिन्नयोः चिदात्मकयोस्तयोः परस्परज्ञानेन तत्प्रयुक्तक्रियया च सामरस्यं उदेति। तथा तयोर्योगे न कोऽपि विरोधः स्फुरति। नदी समुद्रादेवोत्पन्ना तथापि नद्याः नदीत्वेनैव व्यवहारः न समुद्रत्वेन। यदा नदी समुद्रं गच्छति तदा तस्या नामरूपविलयनात् समुद्र इत्येव व्यवहारः संभवति। एवं च जीवः परमात्मचेतनांशोऽपि चित्तशक्त्याख्यस्य मलस्य नित्यसंपर्केण प्राकृत्तिकतया भिन्न आस्ते। यदि सत्त्वरजस्तमोमयं मनः शिवचिन्तननैरन्तर्येण सत्यज्ञानानन्दरूपेण परिणमेत तदा जीवः परमात्मना सह युज्यैतैव। एवं च योगः मनःपरिणामद्वारा संपादनीय इनि कृष्णस्य आशयः। यदा मानवी प्रकृतिः दैवीप्रकृतिकतया परिणमते तदानीमेव जीवपरमयोर्योगः संघटनीयः। एवं च शक्तिविशिष्टाद्वैतप्रतिपादको योगः कृष्णपरमात्मनोपदिष्टः चिद्रूपेणाभिन्नयोः शक्तिवैशिष्ट्येन भिन्नयोः जीवपरमात्मनोः सम्यगन्वेति। एवं च तादृशयोग एव सर्वदुःखनिवारणोपायः। एवं युक्तो जीवः यद्यदाचरति तत्तत्सर्वमपि लोककल्याणसाधकमेव भासते। " साधुस्वभावः पुरुषस्तु लोके शिवप्रियो ह्येकदिनं वसेन्नु " इत्यनुभविनामाप्तवाक्यमस्माकं परमप्रमाणं विराजते। अयमेव शिवयोगः अध्यात्मभावनामयः सामरस्योत्पादकोऽत्र जीवनाधारमिति गीतायामनेकवारं निर्दिष्टः। अत एव गीतायाः योगशास्त्रमित्येव नामधेयं विश्रुतं वर्तते। एवं च जीवं साक्षात्परब्रह्मेति भावयितुं न युज्यत इति सर्वविदितमेव।।' अनीशया शोचति मुह्यमानः " इति श्वेताश्वतरश्रुतिः जीवस्य अशक्तताप्रयुक्तौ शोकमोहौ निर्दिशति। एवं भयग्रस्तं शोकमोहपीडितं मलावृतं जीवं साक्षात् ब्रह्मैवेति संसारदशायां बद्धावस्थायां न कोऽपि

वदेत्। एवं भिन्नस्यैव जीवस्य प्रत्येकभावनां दूरिकर्तुं, तन्मूलभूते शिवे सामरस्यमयं योगमुत्पादयितुं च श्रीकृष्णभगवान् योगशास्त्रमुपदिशति। यदि जीवः स्वत एव परमात्मा स्यात् तदा योगस्योपदेश एव न प्रवर्तेत। सहजतया भिन्नयोरेव द्वयोर्योगः संभवेत्। एवं जीवपरमात्मनोः संसारदशायां भेदः स्वाभाविकतया वर्तते। तदानीं यः चिदैक्यरूपोऽभेदः अतीव सूक्ष्मोऽव्यक्तश्चासीत् स एव चिच्छक्तिपरिणामभूतायाः भक्त्याः प्रभावेण बुद्धावस्थायां व्यक्ततया बहिरन्तश्च विकसति। शक्त्या संसारे प्रवृत्तिमुपगतो जीवः भक्त्या निवृत्तिं संप्राप्य सर्वतोमुखेन आत्मकल्याणाख्येन शक्तिविकासेन परमशिवो भूत्वा लोककल्याणं साधयति। अतः सर्वेऽपि जीवाः मनस्संपर्केण भिन्ना अपि स्वेष्ववस्थितस्यैकविधस्य परमात्मनः परिचयेन परमां शांतिं लब्ध्वा परस्परं प्रेमभावनया वर्तेरन्निति भगवान् निरीक्षते। एवं सहजतया भिन्नयोः। योगप्रतिपादनात् गीताशास्त्रं केवलाद्वैतमतपरमिति न भ्रमितव्यं निवेकिभिः योगस्य शक्तिविकासपरत्वात् योगशास्त्रमिदं शक्तिविशिष्टाद्वैतमते यथाश्रुतया रीत्या अन्वेतीत्यनुभविनो भावयन्ति। इयं च भावना श्रुतियुक्त्यनुभवमूला च भासत इति सर्वमवदातम् ॥ ४७ ॥

—o—o—

## सप्तमोऽध्यायः

पूर्वाध्यायान्ते योगिषु सर्वेष्वपि शिवयोगनिष्ठ एव उत्तम इत्युक्तम्। तत्र कारणं विस्तरेणास्मिन्नध्याये सूचयति—

**मय्यासक्तमनाः पार्थ योगं युञ्जन् मदाश्रयः।**
**असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥ १ ॥**

श्रीभगवानुवाच—हे पार्थ अर्जुन। मयि वक्ष्यमाणविशेषविशिष्टे परमेश्वरे मयि आसक्तमनाः आसक्तं मनो यस्य तादृशः सन्, योगं युञ्जन् योगं कुर्वन्, मदाश्रयः अहमेव आश्रयोऽवलंबनं यस्य तादृशः त्वं असंशयं

संशयलेशमपि विना मां पुरोऽवस्थितं दिव्यरूपधारिणं परमात्मानं समग्रं संपूर्णं यथा ज्ञास्यसि तत्प्रकारं शृणु । तत्त्वोपदेशकं कृष्णं मर्त्यरूपधारिणमपि यथा परमात्मभावनया मानवः आदृत्य पुरस्कुर्यात्, परमात्मतत्त्वं च यथा तेन ज्ञायेत तथाधुना भगवान् न केवलमर्जुनाय किन्तु सकललोकाय च तत्त्वोपदेशमारभते ॥ १ ॥

**ज्ञानं तेऽहं सविज्ञानं इदं वक्ष्याम्यशेषतः ।**
**यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ॥ २ ॥**

अहं ते तुभ्यं इदं वक्ष्यमाणं ज्ञानं सविज्ञानं विज्ञानसहितं स्वानुभवयुक्तं, अशेषतः संपुर्णतया वक्ष्यामि उपदिशामि । यत् मया वक्ष्यमाणं ज्ञात्वा इह लोके भूयः पुनरपि अन्यत् ज्ञातव्यं पुरुषार्थसाधनं नावशिष्यते तत् तादृशं शिवतत्त्वज्ञानं वक्ष्यामि ॥ २ ॥

**मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।**
**यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥ २ ॥**

को विशेषः वक्ष्यमाणज्ञानस्येत्यत्र तादृशमेव अतिदुर्लभं इति प्रतिपादयति । मनुष्याणां मध्ये कश्चित् एक एव सिद्धये वक्ष्यमणज्ञानसिद्ध्यर्थं यतति प्रयत्नं करोति । एवं यततामपि प्रयत्नं कुर्वतां सिद्धानां सिद्धिं प्राप्तानां मध्येऽपि तेषु कश्चिदेव यः कश्चिदेव मां तत्त्वतः यथावत् वेत्ति जानाति । वक्ष्यमाणज्ञानप्राप्त्यर्थं प्रयत्नं कुर्वन्त एव विरलाः । अथ प्रयतमाना अपि पूर्णतया तत्त्वं जानन्तस्तु ततोऽपि विरला इत्यर्थः ॥ २ ॥

**भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।**
**अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ ४ ॥**

एवं वक्ष्यमाणं स्वस्वरूपविषयं तत्त्वज्ञानं प्रशंस्य अथ तदेवोपदेष्टुमुपक्रमते । भूमिः पृथिवी । आपः जलम् । अनलोऽग्निः । वायुः प्रसिद्धः । खं आकाशः । मनः, बुद्धिः, अहङ्कार इति त्रीणि तत्त्वानि । आहत्य अष्टौ ।

इत्येवं प्रकारेण इयं मे प्रकृतिः अष्टधा भिन्ना। एवं च परमात्मनः अचिद्रूपा जडा प्रकृतिः शरीरस्थानीया अष्टविधा वर्तत इत्यर्थः ॥ ४ ॥

अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्।
जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥ ५ ॥

एवं जडप्रकृतेरष्टधा विभागमुक्त्वा ततः चेतनप्रकृतिं निरूपयति। इयमुक्ता प्रकृतिः अपरा निकृष्टा संसारबन्धरूपेति भाव्यते। इतोऽस्याः अन्यां परां विशुद्धामुत्कृष्टां च जीवभूतां जीवस्वरूपां प्रकृतिमपि मे मदीयां मत्संबद्धां परमात्मप्राणरूपिणीं, चेतनरूपत्वात् तत्पत्नीस्थानीयां तत्प्रेमपात्रं विद्धि जानीहि। यया जीवरूपप्रकृत्या इदं सर्वं जगत् पञ्चभूतात्मकं जडस्वरूपं धार्यते धृतं भवति। एवं च परमात्मजातीयायास्तत्संबन्धिन्याः जीवशक्तेः संपर्कादेव हि जगतः स्थितिस्संभवतीत्यर्थः ॥ ५ ॥

एतद्योनीनि भूतानि सर्वाणीत्युपधारय।
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ ६ ॥

एतादृशप्रकृतिद्वयमेव सर्ववस्तूनां कारणमिति प्रतिपादयत्यत्र। एतद्योनीनि एते परापरे प्रकृती शरीरस्थानीये अद्योक्ते योनिः कारणं येषां तानि एतद्योनीनि सर्वाण्यपि भूतानि प्राणिजातानीत्युपधारय जानीहि। परन्तु एतावता तयोः स्वातन्त्र्येणैव सर्वकारणत्वमिति न भ्रमितव्यमित्यद्य प्रतिपादयति। एतदुभयप्रकृतिद्वारा अहमेव कृत्स्नस्य सर्वस्यापि जगतः प्रभवः उत्पत्तिकारणम्। तथा प्रलयः अन्ते महाप्रलये मय्येव सर्वस्य विलयनं च संभवति। एवमुत्पत्तिप्रलययोः कारणत्वे रक्षणकारणत्वमपि परमात्मन्येव संभवति। अत एव जीवः पञ्चभूतात्मकस्य प्रपञ्चस्य कारणभूतोऽपि न स्वातन्त्र्येण तस्य करणत्वं संभवति। तन्मूलभूतस्य परमात्मनः संकल्पादेव तदिच्छानुरोधेन तत्प्रेरणानुगुणतयैव जीवः पञ्चभूतैः सह व्यवहरन् वर्तते। एवं च जीवः चेतनरूपत्वात् कर्ता यद्यपि भवेदेव; तथापि परमात्माधीन-

कर्तृत्वमेव तस्मिन् अन्वेति । एवं च जीवः न हि स्वत एवाहङ्कारेण यत्र-कुत्रापि प्रवर्तेत ; तथैवौदासीन्यतया विरक्तो भूत्वा न कदापि निवर्तेत । तस्य प्रवृत्तिनिवृत्ती परमात्माधीने स्तः । अत एव सर्वमपि सर्वकारणेन परमात्मनैव क्रियत इति ताटस्थ्यं सः न वहेत् । तथैव सः सर्वस्यापि स्वमेव कर्तारं भावयित्वा स्वयमपि न प्रवर्तेत । एतदुभयमपि तस्मिन् न युज्यते । तस्य प्रवृत्तेर्निवृत्तेश्च परमात्मैव प्रधानं कारणम् । एवं च जीवः स्वांन्तःप्रकृति-भूतं मनः सर्वदा परमात्मचिन्तन एव विनियुञ्जन् स्वबहिःप्रकृतिं शरीरं स्वीयबन्धुभ्यः चेतनजीवेभ्यो नियुञ्जीत । एवमेव यदि सः जीवेत् तदानीमेव सः जन्मसाफल्यमधिगच्छेत् । नो चेन्महती विपत्तिः संपतेत् । मनसि स्वपितरं परमात्मानं विहाय सोदरसोदरीचिन्ताया यदि सः अवकाशं दद्यात् तदा तस्य मतिभ्रंशो नियत एव स्यात् । अत एव जीवात्मा परमात्म-संबन्धी भूत्वा पञ्चभूतानां सहकारेण मनसि स्वकारणं स्वरक्षकं परमात्मानं तमेव सदा चिन्तयन् तदिच्छानुरोधेन स्वसोदरवर्गस्य क्लेशपरिहारद्वारा सन्तोषणार्थं यदि प्रयतेत तदा सः परमात्मानुग्रहपात्रं भवेत् । एवं चिद्रूपतया सजातीये जीवे परमात्मना निक्षिप्तः लोककल्याणरूपो गुरुतरो भारः परमात्मने यथा सन्तोषः संभवेत् तथा जीवेन निरुह्यः ॥ ६ ॥

**मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय ।**
**मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥ ७ ॥**

मत्तः परमेश्वरात् सर्वकारणादपि परतरं अन्यत्कारणान्तरं किञ्चिदपि नास्ति । हे धनंजय अर्जुन, सर्वमिदं जगत् सूत्रे तन्तौ मणिगणा रत्नसमूहा इव मणिसमुदायवत् मयि परमेश्वरस्य साकारमूर्तौ तत्स्थानीये मयि प्रोतं ग्रथितम् । एव सर्वस्याप्यहमेवाधारभूतोऽस्मीत्यर्थः । कृष्णः यद्यपि सर्व-कारणस्यामूर्तस्य शिवस्य तादात्म्यभावनया अनेकेषु स्थलेषु अस्मत्पदं प्रयुङ्क्ते । तत्र न कोऽपि मिथो विरोध इत्युपक्रम एव विस्तरशो निरूपितम् । मामिति तस्य प्रयोगः अमूर्तपरमात्मन्येवान्वेति । एवं च सर्वाधिकरणत्वात्

परमात्मनः स्थलमिति अनुभविभिर्यदुच्यते तत्समञ्जसं भाति। एवमेव सर्वेषां भूतानां प्राणिवर्गस्य च लयगमनाश्रयत्वात् तस्याखण्डस्वरूपस्य लिङ्ग-मित्यभिधानं च युज्यते। एवं लिङ्गं स्थलं, ब्रह्म, रुद्रः, विष्णुः इत्यादिभिर्नाम-भिर्व्यवहार्यः परमात्मा सर्वस्यापि स्थलावकाशप्रदानेन स्वप्रभुत्वं पतित्वं च सार्थकं कुर्वन् विराजत इति विवेकिभिर्भाव्यम्। अयमेवामूर्तः परमात्मा जगद्रक्षणार्थं विष्णोः दिव्यं मूर्तं सौम्यं रूपं परिधत्ते ; जगत्संहारार्थं कालरुद्रस्य भीकरं रूपं स्वीकरोति। एवं च कारणरूपस्य मूलभूतपरमात्मनः दिव्यमूर्तरूपाणां कार्यकोटौ प्रविष्टानां त्रिमूर्तीनां च भेदो नास्ति। यदि वैष्णवाः शैवाश्च मिथो भेदं परिकल्प्य स्वसहोदरवर्गे परमात्मदर्शनं विहाय द्वेषमात्सर्या-दिकं प्रसारयेयुस्तदा ते मृतप्राया एव भवेयुः। मानवाः परमात्मांशभूताः मिथो विवादार्थमत्र नागताः ; किन्तु परस्परप्रेमसौहार्दप्रसारार्थमेवेमं पवित्रं देहमधिगतवन्त इति सर्वदा तैः विचिन्त्यमिति भगवत आशयः ॥ ७॥

**रसोऽहमप्सु कौन्तेय प्रभास्मि शशिसूर्ययोः।**
**प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥ ८॥**

मणिगणे सूत्रमिव जगति विद्यमानेषु सर्ववस्तुषु परमात्मा केन रूपेण निवसतीत्यत्र कानिचिन्निदर्शनानि ददाति। हे कौन्तेय, अहं अप्सु जलेषु रसः रसरूपोऽस्मि। जलस्य हि प्रधानो गुणः रस एव। एवं च शशि-सूर्ययोः चन्द्रसूर्ययोः प्रभा कान्तिरूपश्च अहमेवास्मि। सर्ववेदेषु सर्वेष्वपि वेदेषु प्रधानभूतः प्रणवश्च अहमेवास्मि। खे आकाशे शब्दोऽस्मि। आकाशस्य असाधारणो गुणः शब्दः। शब्दगुणकमाकाशमिति हि तल्लक्षण-मुच्यते नैयायिकैः। एवमेव नृषु पुंरूपमापन्नेषु जीवेषु यत्पौरुषं पराक्रमो दृश्यते तदप्यहमेव। एवं सर्ववस्तुषु यद्यत् वैशिष्ट्यं असाधारणधर्मस्थाने वर्तते तत्सर्वमपि परमात्मशक्तिरेवेति भाव्यम्। यत्र यत्र कश्चन विशेषो विलसति स सर्वेऽपि भगवत्प्रसाद एवेति फलितम् ॥ ८॥

पुण्यो गन्धः पृथिव्यां च तेजश्चास्मि विभावसौ ।
जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥ ९ ॥

पृथिव्यां पुण्यो गन्धः सुगन्धो योऽस्ति सः अहमेव। विभावसौ अग्नौ यत्तेजो दीप्तिस्तदहमेव । सर्वभूतेषु सर्वेष्वपि प्राणिषु यज्जीवनं नाम देहाधारो धर्मः सोऽप्यहमेव । तपस्विषु च तपः तपोरूपश्चास्मि । एवं यत्र यत्किञ्चित् श्रेष्ठत्वं विद्यते तत्सर्वमपि भगवत्स्वरूपमिति भावयित्वा तद्विशिष्टं प्राणिवर्गमात्मीयतया प्रीणयेत्सुधीरिति भावः । एतद्वर्तनेनैव भगवदनुग्रहो लभ्येत ॥

बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम् ।
बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥ १० ॥

हे पार्थ, सर्वभूतानां सर्मप्राणिनां सनातनं आदिकालादारभ्य प्रवर्तमानं बीजं च अहमेवेति जानीहि । बुद्धिमतां प्रज्ञाशालिनां च बुद्धिरप्यहमेव । तेजस्विनां यत्तेजः प्रागल्भ्यं तदप्यहमेव । एतद्रूपत्वादेव सर्वेष्वपि जीवेषु मदवस्थितेः यत्किञ्चिद्वैशिष्ट्यं विलसत्येव । एकं जीवं अपरस्मात् प्रत्येकयितुं समर्थः यः कश्चन विशेषो यो वर्तते एकैकस्मिन् जीवे स सर्वोऽप्यहमस्मि । अतो जीवाः परस्परं वैलक्षण्यं दृष्ट्वा द्वेषमात्सर्यादिना हृदयं न कलुषीकुर्युरिति भगवानादिशति । यः स्वभ्रातरं अन्यभावनया द्वेष्टि सः स्वमेव द्वेष्टि। जीवाः स्वकर्मानुसारेण विभिन्ना अपि स्वान्तर्नियामकस्यैकरूपत्वात् तत्प्रीत्यर्थं परस्परं प्रीणयेयुरिति भगवत आशयः। तथापि अविवेकेन यः द्वेष्टि तस्य आत्मविनाशो नियतः । य इतरान् जीवान् परमात्मदृष्ट्या प्रीणयति सः परमात्मानुग्रहेण नित्यसुखी संपद्यत इति भावः ॥

बलं बलवतामस्मि कामरागविवर्जितम् ।
धर्माऽविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥ ११ ॥

हे भरतर्षभ अर्जुन, बलवतां बलशालिनां कामरागविवर्जितं काम इच्छा, रागः प्राप्ते भाग्ये आसक्तिः, तदुभयवर्जितं बलं च अहमेव ।

बलिष्ठेषु यद्बलं अपेक्षासक्त्यादिकं विनैवानायासेन सहजतया स्फुरति तदह-मेवस्मि । अतो बलं सहजप्राप्तं सर्वेषु मदीयमिति भावयन् विवेकी मदनुग्रह लभते । भूतेषु प्राणिषु धर्माऽविरुद्धः धर्मस्य शास्त्रप्रतिपाद्यस्य अविरुद्धः अनुगुणो यः कामः । प्रणयो विषयाभिलाषः सोऽप्यहमेव । एवं धर्मानु-गुणतया संसारभोगानुभवोऽपि भगवत्सम्मत एव । अयमंशः अनुभविभिः सम्यक् प्रशंस्यते "संसारिणां भक्तिरियं शिवेष्टा भावैक्यरूपा यदि रामनाथ । एतादृशी भक्तिरनैक्यतायां सुधेव वर्ज्या गरळोपसृष्टा ॥" इति । धर्मानु-गुणतया कामानुभवः परमेश्वरस्य यथा प्रियो भवेदित्यंशस्तैः सम्यक् प्रतिपा-दितः । अयं भावैक्यमूलः कामो यथा सर्वरोगनिवारको भवेदित्यंश बसवार्यः समुचितया रीत्या वर्णयति । "अन्योन्यं यदि चित्त एकरसतां कन्यावरौ प्राप्नुयुः । तल्लग्नं शुभमित्युदीरयत मा चान्यथा कथ्यताम् ॥ ताराचन्द्रबले तथा ऋणमुखाः कूटाश्च राश्यादयः । सन्तीति प्रतिपाद्यताम् वरमयं घस्रः परस्ताद्दिनात् ॥ संसररचनायैवं उक्ते सति भवेद्ध्रुवम् । सङ्गमेशस्य पूजायाः फलमित्यभिधीयते ॥" इति । एतादृशं महत्त्वं धर्माविरुद्धस्य कामस्य परि-कल्पितं शरणैः । अतो व्यवहारिभिर्मानवैः सदा धर्मानुगुण्येनैव अर्थकामयो-रार्जने मतिर्निधेयेति भगवत आशयः ॥ ११ ॥

**ये चैव सात्त्विका भावा राजसास्तामसाश्च ये ।**
**मत्त एवेति तान्विद्धि न त्वहं तेषु ते मयि ॥ १२ ॥**

सर्ववस्तुषु मदवस्थानं किमु वक्तव्यमधिकतया ? अयमत्र संक्षेप इति निरूपयति । ये चैव सात्त्विका सत्त्वगुणमूलभूताः, ये च राजसा रजोगुण-मूलकाः, ये च तामसा तमोगुणमूलकाः सन्ति ते सर्वेऽपि मत्त एव मत्सका-शादेवोत्पद्यन्ते, मय्येव विलीयन्ते चेति तान्विद्धि जानीहि । यद्यपि ते मत्सकाशादेव जायन्ते अथापि नाहं तत्र कस्यापि फलस्य भागवानस्मि इत्यमुमाशयमधुना स्पष्टयति । अहं तेषु स्थित्वापि न तदधीनोऽस्मि ।

प्रत्युत ते त एव मयि वर्तन्ते । ते सर्वेऽपि सर्वदा मदधीना एव वर्तन्ते । तदीयकर्मणः फलं तत्रत्येन मया प्रेक्षकेन नोपभुज्यते । यदि जीवः यत्किञ्चिद्वस्तु भक्त्या मह्यं ददाति तदानीं तदहं सन्तोषेण स्वीकृत्य भुंजे । यदर्प्यते भक्त्या तदेव मया स्वीक्रियते । नो चेदहं जीवे उदासीनवदासीनः सर्वं तदीयं कर्म निरीक्षे । सः दुराशया यद्यत्करोति तत्सर्वमपि तस्मै न फलति । यद्यत्फलं तस्य प्राप्यं तदेव तस्मै ददामि । सः यद्यदिच्छेत् तत्सर्वमपि तस्मै नाहं दातुं प्रभवामि । सः प्राग्जन्मनि मह्यं सर्वान्तर्यामिणे यद्यददात् तदेवाद्य तस्मै ददामि । गृहगागतेभ्यः सर्वेभ्योऽपि मत्प्रीत्यर्थं सः यत्तदानीमेव सन्तोषेण अददात् तत्सर्वमपि तदीयमेव आसीत् ; तदेवाद्य तस्मै दीयते मया । एवं सर्वे जीवाः मदधीना एव वर्तन्ते ; नाहं तदधीनोऽस्मि । अत एवाहं पतिः प्रभुश्चास्मि सर्वेषाम् ॥ १२ ॥

**त्रिभिर्गुणमयैर्भावैरेभिस्सर्वमिदं जगत् ।**
**मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥ १३ ॥**

एतादृशं सर्वजगत्कारणं त्वां लोकस्तर्हि कुतो न जानातीत्याक्षेपं परिहरन्नाह । गुणमयैः सत्त्वरजस्तमोरूपैः एभिस्त्रिभिः भावैः रागद्वेषमोहादि-रूपैः पाशैः मोहितं बद्धं अत एव संपादिताऽविवेकमिदं सर्वं जगत् एभ्यः उक्तगुणमयभावपाशेभ्यः परं व्यतिरिक्तं मां नाभिजानाति । तादृशगुण-परत्वात् गुणातीतं मां ज्ञातुं जना न शक्नुवन्ति । पाशबद्धाः पशुसदृशा जीवा स्वान्तरङ्गे निर्लिप्ततया विलसन्तं परमात्मानं विश्वसितुं न जानन्ति । विश्वासाभावे तज्ज्ञानं दूरापास्तमेव । ज्ञानाभावे तदीयसेवायाः प्रसक्तिरेव नास्ति । " न विश्वसन्त्येव जनास्तु देवं तथापि तं नित्यमुपाह्वयन्ति । कर्तुं च विश्वासमपारयन्तस्तथापि मोहाद्विचरन्ति मन्दाः ॥ विश्वासपूर्वं यदि वाह्वयेत तदा कुतो नोत्तरयेच्च देवः । विश्वासहीनो यदि देवमाह्वयेत् सद्यः पतेत्तत्कृतनिग्रहांकुशः ॥ " इति शरणगीता पाशबद्धजीवस्य विश्वासदरिद्रयं वर्णयति । इदं सर्वमपि बन्धरूपस्य पाशस्य विरमः परिणामः । अत एव

जनाः परमात्मानं विस्मृत्य स्वोदरपूरण एव कालं यापयन्ति ॥ १३ ॥

**दैही ह्येषा गुणमयी मम माया दुरत्यया ।**
**मामेव मे प्रपद्यन्ते मायामेतां तरन्ति ते ॥ १४ ॥**

एतादृशमोहस्य नाशोपायं परमात्मा स्वयमेवोपदिशति । दैवी देवस्य मम परमेश्वरस्य संबन्धिनी एषा हि मदीया गुणमयी त्रिगुणात्मिका मायाख्या सर्वव्यामोहकारिणी सर्वाकर्षणयोग्या शक्तिः दुरत्यया दुःखेन अत्ययः अतिक्रमणं यस्याः सा । एवं च सा मदीयापि माया न हि जनैर्मदंश-भूतैरपि सुलभतया जेतुं शक्या । इदमेवात्र वैचित्र्यम् । जीवा अपि मदीयाः ; किन्तु मच्चेतनांशाः । तथैव तन्मोहकारिणी मायापि मदीया ; किन्तु मच्छक्त्यंशा । मच्चेतनांशः मच्छक्त्यंशेन सह युक्तः तदपहृतचैतन्यप्रभावः मां विस्मृत्य स्वाहङ्कारेण सर्वत्र प्रवर्तते । एवं च सः मायाया दासो भूत्वा तदाकर्षणभूतेषु रूपरसगन्धस्पर्शशब्देषु निमग्नः पशुरिवताननुभवन् अन्धस्सं-भूतः । अयमंशः शरणैः सम्यक् प्रतिपादितः । "रूपादिभोग्यान्विषयान्म-माग्रे देव प्रसारं कुरु मा कदापि । किमेष जनाति पशुस्तदानीं तृणाभिलाषं परिहाय नूनम् । तथैव कुर्वन्विषयैर्विहीनं भृत्यं हि पश्याद्भुतया हि दृष्ट्या । सद्भक्तिरूपं तृणमेव नित्यं यथेप्सितं भोजय मां त्वदीयम् ॥ तथैव मां सिञ्च सुबुद्धिवृष्ट्या याचे प्रभो कूडलसङ्गमार्य" इत्येवं बसवार्यः मायाप्रभाव-भूतान् भोग्यविषयान् ईश्वरानुग्रहेण तस्मै समर्प्य तत्प्रसादरूपतया तानुपभुज्य देह एव नित्यानन्दमनुभवितुं ईश्वर एव भक्त्या याचते । एवमेव भगवान् कृष्णोऽपि मायाया आनुकूल्यसंपादनाय परमात्मशरणागतिमेव प्रधानावलंबन-तयोपदिशति । अतः मामेव तादृशमायापतिं महेश्वरं मां ये प्रपद्यन्ते शरणं यान्ति त एवैतां मायां तरन्ति तर्तुं शक्नुवन्ति । एवं मायावाल्लभ्यसंपादनाय मायाकोलाहलः परमात्मैव मूलमिति भाव्यतेऽनुभविभिः । नो चेन्मायानु-सरणं अरण्यरोदनमेव भवेत् । मायाविजयाय परमात्मशरणागतिं विहाय नान्य उपायोऽस्ति । अयमाशयो बसवार्येणैवं स्वानुभवप्रामाण्येन विशदीकृतः ।

"त्वदीयमाया गुरुकूडलार्य सर्वं जगत्सर्वत आवृणोति । तथा भवन्तं परितः स्तृणोति मनो मदीयं त्विदमत्र चित्रम् ॥ प्रभुर्यदि त्वं जगतो हि देव तवाहमत्रास्मि विनोदभूमिः । करी यथा दर्पण एव लीयते तथा त्वमेवाद्य निलीयसे मयि ॥" इत्येवं मायाया वक्रगतिं निरोद्धुं भगवत्कृपैव दिव्य-सञ्जीविनीत्यमुमाशयं बसवार्योऽत्र स्पष्टयति । एवं सर्वेऽप्यनुभविनः, रेणुकाद्याचार्याश्च मायाप्रभावविलासानां प्रशमाय परमात्मसंबद्धं स्थिरभक्ति-योगमेव साधकेभ्य उपदिशन्ति । यतः परमात्मन एव सा माया समागत्य अस्मान् परीक्षमाणा वर्तते अतस्तं विना नान्येन साधनेन वयं मायावक्रगतेः विदूरा भवेम । अतो मायाविजयाय मायपतिरेवाश्रयणीयः ॥ १४ ॥

**न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ।**
**माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः ॥ १५ ॥**

भवदनुग्रहादेव माया निरोद्धव्या चेत्तर्हि सर्वेऽपि भवन्तं प्रपद्य कुतो मायापाशाद्विमोचनं न प्राप्नुवन्तीत्यत्राह । दुष्कृतिनः पापकर्माणः, अत एव मूढा विवेकहीना नराधमाः पुरुषेष्वतिनीचाः मायया उक्तदुरत्ययया त्रिगुण-मय्या मायाशक्त्या अपहृतज्ञानाः विनाशितयथार्थज्ञानाः, अत एव आसुरं भावं आश्रिता ये, ते मां न प्रप्रद्यन्ते न सेवन्ते । ये तु दैवीप्रकृतिसंपन्नास्त एव मां सेवन्त इति भावः । एतदेव च वक्ष्यति " महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः । भजन्त्यनन्यमनसा ज्ञात्वा भूतादिमव्ययम् " इति । एवं ये सद्वर्तनशीला हृदयशुद्धिमन्तस्त एव परमात्मनि विश्वसन्ति, तं प्रपद्यन्ते च । अन्येषां तु तत्र प्रवृत्तिरेव नोदेति । ये तु मायायाः शरणागता विषयभोग एव निष्णाता भवन्ति ते सर्वदा पाशबद्धा एव सन्तः परमात्मसंपर्कं न लभन्ते । तेषां दुरवस्थां शरणगीता एवं वर्णयति । " व्याघ्रास्यसंसक्तमृगो यथैव यथैव भेको भुजगास्यलग्नः । तथैव मायामृगबन्धिनीसितान् समीक्ष्य भीतः शरणं प्रपद्ये ॥ अतस्त्वमेवार्हसि रक्षितुं मामखण्डदेवाद्य दयां निधेहि " इत्येवं परमात्मशरणागत्यैव मायाया वाल्लभ्यं संपादनीयमिति

शरणास्स्वानुभवेन यद्वदन्ति तत्सर्वदा साधकैः स्मरणीयम् ॥ १५ ॥

**चतुर्विधा भजन्ते मां जनास्सुकृतिनोऽर्जुन ।**
**आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥ १६ ॥**

एवं परमात्मानं भजतामपि तारतम्यमस्तीत्याह । हे अर्जुन, सुकृतिनः पूर्वश्लोके उक्तस्य 'दुष्कृतिन' इत्यस्य विपरीततया स्थिताः पुण्यकर्माणस्तु चतुर्विधा चतुष्प्रकारा मां भजन्ते सेवन्ते । हे भरतर्षभ अर्जुन, तेषु च आर्तः बहिरन्तर्व्याधिपीडितः, संकटे पतित एकः । जिज्ञासुः ज्ञातुमिच्छुः तत्त्वज्ञानं प्राप्तुमिच्छुः स एकः । अर्थार्थी ऐश्वर्याद्यपेक्षावान् अन्यः । ज्ञानी परमात्मतत्त्वविच्च अपरः । एवं चतुर्विधा मां भजन्ते । सङ्कटपरिहारार्थं केचिन्मां भजन्ते । केचित्तु ऐहिकसुखसंपत्प्राप्तये, अपरे तु ज्ञानप्राप्तये मामाश्रयन्ति । प्राप्ततत्त्वज्ञानास्तु ज्ञानिनः मयि सामरस्यसुखमनुभवितुमेव मां भजन्ते । जीवानां मदंशत्वात् मय्येव एकीभावमधिगन्तुं सर्वैरपि प्रयतितव्यम् । तथापि केचिदेव मलदोषविनिर्मुक्ताः परमात्मनः प्रियाः साधकास्तस्मिन्नेव संयुक्ता नित्यानन्दमनुभवितुमिच्छन्ति । एतत्सर्वं मायायाः प्राबल्यमवलंबते । ये मायया यावत्प्रमाणं परित्यज्यन्ते तावत्प्रमाणं परमात्मना पुरस्क्रियन्ते । अतस्सर्वैरपि मायनिरोधाय प्रयतितव्यम् ॥ १६ ॥

**तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।**
**प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥ १७ ॥**

तेषां चतुर्णां मध्ये नित्ययुक्तः नित्यं सदा परमात्मन्येव संसक्तः तन्निष्ठ इत्यर्थः । अत एव एकभक्तिः मय्येकस्मिन्नेव निराकारपरमेश्वरे भक्तिर्यस्य सः । तेन प्राप्तव्यस्यान्यस्याभावात् परमेश्वरमेव अपेक्षमाणा इत्यर्थः । तादृशो ज्ञानी विशिष्यते ; इतरत्रयापेक्षया अतिरिच्यते । हि यस्मात् ज्ञानिनस्तस्य अहमेवात्यर्थमत्यन्तं प्रियः प्रीतिविषयः । तथैव मम च स एव प्रियः मदेकचित्तत्वात् । तस्मात्स एव सर्वापेक्षया श्रेष्ठ इति भावः । एवं ज्ञान्येव-

परमभक्त इति तस्य महत्त्वं प्रतिपादयति भगवान् । ज्ञानी सर्वदा निरहङ्कारस्थितौ भगवदनुग्रहमेवावलंव्य निमित्तमात्रं व्यवहरति । शरणगीता परमात्मविषये मानवस्य वर्तनमेवं वर्णयति "पुरस्तु सिंहस्य पराक्रमस्ते किं शोभते मानव चिन्तय त्वम् । संवर्तकाग्रे किमु पक्षिलीला अहस्कराग्रे किमु कीटनर्तनम् ॥ भवत्पदाग्रे कलिदेवदेव किं शोभते क्रीडितमस्मदीयम् ।" एवं परमात्मनि भक्तिनम्रतया शरणागतिं विना मायाविजयाय नान्यो मार्गोऽस्तीति शरणा भावयन्ति । तादृशं ज्ञानिनं भक्तं परमात्मा स्वसन्तोषार्थं अनेकैः प्रतारणैः परीक्षते । एतत्परीक्षाविधानं शरणगीता स्पष्टयति । "हरस्तु भक्तानटने नियोजयेत्सुवर्णपाषाणकशे समुल्लिखेत् । तथैव पिंष्याद्धरिचन्दनं यथा तथैव मर्द्यात्पुनरिक्षुदण्डवत् ॥ य एव भीतो न भवेत्कदापि तं रामनाथस्तु करेण धत्ते ।" इति । एवं सर्वविधपरीक्षणैरवञ्चित एव साधके भगवान् कृपां तनोति । एवं परीक्षितत्वादेव ज्ञानी परमात्मनोऽतीव प्रियो भवति । स एव तस्य प्राणस्थाने वर्तते ॥ १७ ॥

**उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ।**
**आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥ १८ ॥**

तर्हि ज्ञानिनः श्रेष्ठत्वे एवं स्थिरीकृते इतरत्रयाणां स्थितिः कीदृशी इत्यत्राह । सर्व एवैते त्रयोऽपि उदारा उत्कृष्टा एव । इतरदेवताभक्तापेक्षया परमात्मभक्तत्वात् ते सर्वेऽपि उत्कृष्टा एव । तु किन्तु ज्ञानी मे मम आत्मैव प्राणतुल्य एवेति मतं मम सम्मतम् । कुत इत्यत्राह—आस्थित इत्यादि । स हि ज्ञानी युक्तात्मा समाहितचित्तः मामेव परमात्मानं अनुत्तमां उत्तमा गतिर्न विद्यते यस्मात्तादृशीं गतिं प्राप्य आस्थितः निश्चितवान् । परमात्मापेक्षया प्राप्यं परमं स्थानं तस्य यतो नास्ति अतः सः मम परमात्मनः प्राणभूत इति भावः । एवं ज्ञानिनस्सर्वश्रेष्ठत्वं निर्दिशति भगवान् ॥ १८ ॥

**बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ।**
**वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥ १९ ॥**

तादृशस्तु ज्ञानिनः अतिदुर्लभत्वमाह । बहूनां जन्मनां अन्ते समाधौ बहुजन्मसु साधितसंस्कारविशेषादेवेत्यर्थः । वासुदेवः परमात्मप्राणरूपिण्याः पराशक्तेः पुरुषरूपः । 'स एव वासुदेवः सर्वमिदं जगत्' इति "सर्वं खल्विदं ब्रह्म" इत्यादिवत् सर्वात्मज्ञानवान् मां प्रपद्यते भजते । " सर्वो वै रुद्रः । इत्यत्र रुद्रपदं मूलतः पुरुषवाचकं ; एवं वासदेवपदं प्रकृतिवाचकं ज्ञेयम् । एवमेव सर्वं वस्तुजातं वासुदेव एवेति ज्ञेयम् । एतादृशज्ञानवानेव मां निराकारं परशिवं प्राप्नोतीति भावः । स एतादृशो महात्मा सुदुर्लभः सुतरामलभ्यः ॥

**कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः ।**
**तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥ २० ॥**

'उदारास्सर्व एवैते' इति स्वभक्तानां श्रैष्ठ्यमुक्त्वा इदानीमन्यदेवताभक्तानां निकृष्टत्वमाह । तैस्तैः कामैः अत्यल्पैः पुत्रपशुस्वर्गख्यात्यादिरूपैः कामैः हृतज्ञाना अपहृतविवेकाः, स्वया जन्मसिद्धया प्रकृत्या नियताः बद्धाः तं तं नियमं तत्तत्फलप्राप्तये उच्यमानं नियमं आस्थायानुष्ठाय अन्यदेवताः परमात्मातिरिक्तक्षुद्रदेवताः प्रपद्यन्ते सेवन्ते । परमात्मानं विहाय अन्या देवताः परिकल्प्य ऐहिकफलप्राप्तये ये उपासन्ते ते आत्मैक्यभावनां नाधिगच्छन्ति । तादृशः उपासकान् दृष्ट्वा शरणाः एवमुपदिशन्ति । "एको हि देवः खलु नाम नाना पतिव्रतायाः पतिरेक एव । नान्यं यदीप्सेत्स पतिस्तदा तु कर्णौ तथा प्राणमपीह छिन्द्यात् ॥ उपास्यदेवं परिहाय भिन्नं समर्चयेच्चेत्पतितो भवेन्ना । अनेकदेवोज्झितभक्षितारं शिष्टाः किमाहुः कथय प्रभो स्वयम् ॥" इति । एवं सर्वदेवपूजकः नैकनिष्ठो भवेत् । सर्वदेवातामयस्यैकस्य परमात्मनः समर्चनं विना भिन्नदेवतानामाराधने प्रवृत्तस्य न काचन व्यवस्था निरीक्ष्येतेत्यर्थः ॥ २० ॥

**यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ।**
**तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ २१ ॥**

अन्यदेवताराधनेऽपि यथार्थतत्त्वं ते न जानन्तीत्याह । यो यः

तत्तदल्पफलेच्छावान् भक्तः तत्तद्देवताभक्तः यां यां तनुं तत्तद्देवतामूर्तिं श्रद्धया भक्त्या अर्चितुं पूजयितुं इच्छति तस्य तस्य तत्तत्फलेच्छया तत्तद्देवतापूजकस्यापि तस्य तामेव तत्तदनुगुणामेव अचलां स्थिरां श्रद्धां अहमेव विदधामि । तत्तद्देवतामूर्तिष्वपि अन्तर्वर्तमानः अहमेव तेषां श्रद्धां पोषयित्वा, तदनुगुणफलमपि दत्त्वा तदीयां देवभक्तिं पोषयामि । एवं च अन्यदेवतापूजकैरपि परमात्मन एकस्यैव पूजा निर्वर्तितेति भावनां स एव तत्रान्तर्यामितया वर्तमानः परमात्मा नियतमेवोत्पादयति । एतादृशी भावना सर्वैरप्यर्चकैस्तदानीं परिकल्पनीयेति शब्दप्रमाणभूतं शास्त्रमुपदिशति । इयमेवात्मौपम्यदृष्टिस्सर्वैरपि साधकैराचरणीयेति भगवत आशयः ॥ २१ ॥

स तया श्रद्धया युक्तस्तस्या राधनमीहते ।
लभते च ततः कामान् मयैव विहितान् हि तान् ॥ २२ ॥

तया मदनुगृहीतया श्रद्धया युक्तस्सः तस्या एव देवतायाः राधनं आराधनमीहते करोति । ततस्तत्कारणात् मयैव हि साकारेण परमात्मना विहितान् दत्तान् तान् कामान् तत्तत्फलानि लभते च प्राप्नोति । एवं च अल्पमतीनामपि श्रद्धापोषणार्थं अहमेव मानवैरर्चितेषु सर्वदेवताविग्रहेषु अमूर्ततया स्थित्वा तेभ्यस्तत्तदनुगुणश्रद्धामप्युत्पाद्य तत्तदभीप्सितं फलमपि ददामि । भक्तो भक्त्या स्वेष्टदेवं स्वाभीप्सितेन नाम्ना आकारेण च यद्यर्चयेत् तदा तदीयार्चनमहमेव स्वीकरोमि । तादृशमर्चनमहमेव तस्मात्कारयामि, तस्यार्चनस्य समुचितं फलमप्यहमेव प्रदास्यामि । यत्र यत्रार्चनं करोति भक्तस्तत्र सर्वत्रापि परमात्मभावनयैव यदि प्रवर्तेत तदा तदर्चनं परमात्मनः प्रियं भवेत् । एक एव देवः अनेकान्याकाराणि नामानि च यतो धत्ते ततो भक्तस्सर्वत्र एकभावनयैव यदि प्रवर्तेत तदा तस्य मनसि शान्तिरुत्पद्येत । एतदेव वक्ष्यति भगवान् " अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ; न तु मामभिजानन्ति तत्त्वेन " इति ॥ २२ ॥

**अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ।**
**देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि ॥ २३ ॥**

अन्यभावनया आराधितैर्देवैर्दत्तं फलमशाश्वतमल्पमित्याह । अल्पमेधसां अल्पप्रज्ञानां अल्पफलेषु अपेक्षा हि विनाशकारिण्येव स्यात् । महति परमपुरुषार्थे येषां मतिः ते हि महामतयो, महात्मान इति चोच्यन्ते । परं तु क्षुद्रा अल्पप्रज्ञाः महता प्रयासेन अल्पमेव फलं लभन्ते । परमात्मैव महानिति परिगणितः । परमात्मभावनया अर्चयतस्तु महदेव फलं संपद्यते । तादृशी भावना यस्य न विद्यते तस्य तादृशेनार्चनेन अल्पमेव फलं लभ्यते । तेषां तत्तु फलं महता आयासेन संपाद्यमानमपि तत्फलं अन्तवत् नश्वरमेव भवति । देवयजः नश्वरान् परमात्मातिरिक्तान् देवान् ये पूजयन्ति ते तु देवान् तादृशो नश्वरानेव देवान् यान्ति प्राप्नवन्ति । मद्भक्तास्तु मत्पूजकास्तु मामपि मामेव यान्ति प्राप्नुवन्ति । परमात्मभावनया ये अर्चयन्ति ते परमात्मानमेव गच्छन्ति । एतादृश्यामपि स्थितौ मूर्खा मां भजित्वा शाश्वतं फलं न प्राप्नुवन्ति हीति शोचति भगवानेवम् । वक्ष्यति च ‘ आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन । मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते’ इति ॥

**अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ।**
**परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥ २४ ॥**

कुतः परमात्मानं ते सर्वे न प्रपद्यन्त इत्यत्राह । अबुद्धयो बुद्धिहीनाः मम यदीयमव्ययं व्ययरहितं अवतारदशायामपि सदा विद्यमानं अनुत्तमं सर्वोत्तमं, यदपेक्षया उत्तमं नास्ति तदेव परं भावं परमात्मभावं अजानन्तोऽनवगच्छन्तः । स्वतोऽव्यक्तं जन्मरहितं सन्तमपि, इदानीमेव नूतनतया व्यक्तिमापन्नं जन्म प्राप्तवन्तं मन्यन्ते जानन्ति ; इतरसामान्यजनवदेव मामपि मन्यन्ते । अत एव ते सर्वे माममूर्तपरमात्मानं न प्रपद्यन्ते । ये हि विशालमतय उदात्तभावनास्त एव महदाश्रयेण महत्फलमधिगच्छन्ति ।

अल्पास्त्वल्पमेव फलं लब्ध्वा पुनः पुनरुत्पद्यन्ते विलीयन्ते च । एतादृश-चक्रभ्रमणं परमात्मसामरस्यादेव परिहार्यम् । तत्तु न जानन्त्यविवेकिनः ॥

**नाहं प्रकाशः सर्वस्य योगमायासमावृतः ।**
**मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥ २५ ॥**

कुतो भवन्तं ज्ञातुं न शक्नुवन्ति सर्वे साधका इत्यत्राह । योगमाया-समावृतः योगस्त्रैगुण्यसंपर्कः । स एव मायासंबन्धः । "दैवी ह्येषा गुणमयी मम माया" इत्युक्तमेव प्राक् । तया समावृत आच्छादितोऽहं परमात्मा सर्वस्यापि जनस्य सामान्यतः न प्रकाशो न ज्ञातुमर्हः । ये तु मामेव प्रपद्यन्ते तेषामेवाहं प्रकाशो ज्ञेयो भवेयम् । अत एव मायया मूढः अज्ञोऽयं लोकः मामजं वस्तुतो जन्मरहितमव्ययं मरणरहितं च नाभि-जानाति नावगच्छति । एवं परमात्मनः सर्वव्याप्तिं सम्यक् ज्ञात्वा योऽर्चयति स एव परमात्मप्रेमभाजनं भूत्वा परमात्मनि सामरस्यं लभत इत्यर्थः ॥

**वेदाहं समतीतानि वर्तमानानि चार्जुन ।**
**भविष्याणि च भूतानि मां तु वेद न कश्चन ॥ २६ ॥**

सर्वक्लेशकारिणी माया परमात्मानं तु न कदापि मोहयेदित्याह । हे अर्जुन, अहं समतीतानि भूतकालिकानि, वर्तमानानि वर्तमानकालिकानि, भविष्याणि भविष्यत्कालिकानि च सर्वाणि भूतानि सर्वेषां स्थितिगतीः वेद जानामि । तु किन्तु मामेतादृशं मां कश्चन कोऽपि न वेद न ज्ञातवान् । मद्भक्त एव मन्निष्ठो मत्परायण एव मदाराधक एव मां जानीयादित्यर्थः ॥ २६ ॥

**इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत ।**
**सर्वभूतानि संमोहं सर्गे यान्ति परन्तप ॥ २७ ॥**

इदानीं मायाया मोहनप्रकारमाह । हे भारत भरतवंशोत्पन्न परन्तप अर्जुन, इच्छाद्वेषसमुत्थेन इच्छा च द्वेषश्च ताभ्यां समुत्थेन द्वन्द्वमोहेन सुखदुःखलाभालाभादिद्वंद्वरूपेण मोहेन सर्वभतानि सर्वप्राणिनोऽपि सर्गे

उत्पत्तिकाले संमोहं संमूढतामज्ञतां यांति प्राप्नुवंति । यदा जन्म तदा प्रकृतिसंबंधस्यावश्यकत्वात्, तन्मूलतया रागद्वेषादिना विमूढो जनः मां परमात्मानं न जानाति । अतः प्रथमं सत्सङ्गे स्थित्वा मानवः रागद्वेषादिकं परित्यजेत् । रागद्वेषपरिहाराय ज्ञानक्रिययोरुभयोरपि समन्वयदृष्ट्या अनुष्ठानमावश्यकम् । यः सम्यक् परमात्मव्याप्तिं ज्ञात्वा तस्य स्वदेहेऽवस्थानं च सद्भिरवगम्य तदुपदिष्टेन क्रमेण अर्चनादिकं करोति तस्य मनसि सर्वदा परमात्मप्रकाश एव जागर्ति । अयमंशः शरणगीतायामेवं निर्दिष्टः । "क्रियाविहीना मतिरत्र नेष्यते देहं विना प्राणधृतिर्न शक्यते । प्राणं विना नैव च देह आत्मा क्रियां विना नैव च ज्ञानमाप्यते ॥ ज्ञानं विनैवाचरणं न शोभते ज्ञानक्रियादीप्तिमुपेक्ष्य लिङ्गम् । निराश्रितं स्यादत एव लोके ज्ञानक्रियाभ्यां सहितोऽस्तु मर्त्यः ॥" इति । एवं ज्ञात्वा यः कुरुते स एव महाप्रकाशं स्वीयहृदयेऽनुभवितुं पारयति । नो चेत् सः न किञ्चिदप्युत्तमं फलं लभते । एतादृशसमन्वयदृष्टिरहितानामर्चनमेवं निर्दिषति शरणगीता । "पाथेयबन्धादुदरोर्ध्वभागे क्षुधो निवृत्तिः किमु दृश्यतेऽत्र । तथैव लिङ्गस्य हृदूर्ध्वभागे संधारणादेव किमद्य लभ्यम् ॥ वेण्वन्तरे केनचिदप्म दत्तं लिङ्गात्मतां गच्छति किं कदापि । तथैव वेणुर्न भवेद्धि भक्तः गुरुश्च किं क्षेपणतः शिलायाः ॥ एतादृशान्वीक्ष्य ममैव लज्जा सञ्जायते सत्यमहो गुहेश्वर ॥" इति । एवं अन्तर्बहिर्विराजमानयोः परमात्मप्रकाशयोरैकरूप्यमजानता साधकेन परमात्मनो नित्यसंपर्कसाधनाय बहिरात्मलिङ्गधारणमपि व्यर्थमेव भवेत् । अतो हृदये सहजतया शोभमान एव प्रकाशः गुर्वनुग्रहेण बहिर्गतः, जङ्गमप्रसादेन च प्रवर्धित इति यः स्वेष्टलिङ्गं भावयति स एव वस्तुतो वीरव्रतधारी शैव इत्यनुभविभिर्भाव्यते । नो चेत्तस्याधोगतिर्नियता । अत एव मानवैर्ज्ञानक्रियासमन्वयमार्ग आश्रयणीयः ॥ २७ ॥

येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम् ।
ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥ २८ ॥

एवं मायाया दुरतिक्रमत्वे तदीयमोहात्कदा मुक्तिः स्यादित्यत आह। पुण्यकर्मणां पुण्यशालिनां येषां जनानां तु पापमन्त्यगतं अन्तं नाशं गतं प्राप्तं समाप्तप्रायमित्यर्थः । ते द्वन्द्वमोहनिर्मुक्ताः द्वन्द्वरूपः पूर्वमुक्तो यो मोहः द्वन्द्वमोहस्तेन निर्मुक्ता दृढव्रताः 'परमात्मैव मम प्राप्यो नान्य' इत्याकारकदृढव्रतविशिष्टास्सन्तो मां परमात्मानं भजन्ते सेवन्ते। एवं द्वंद्वमोहविनिर्मुक्ताः श्रद्धावंत एव परमात्मनि एकीभवितुमर्हन्तीत्यर्थः ॥ २८ ॥

**जरामरणमोक्षाय मामाश्रित्य यतन्ति ये।**
**ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ॥ २९ ॥**

साधकाः किमर्थं मां भजन्ते इत्यस्योत्तरकथनव्याजेन उत्तरोपदेष्टव्यार्थस्यापि उपक्षेपं सूचयति। जरामरणमोक्षाय जरा मरणं च तेभ्यो मोक्षाय पुनर्जन्म यथा न स्यात् तादृशाय मोक्षाय मां साकारं परमात्मानं आश्रित्यावलंब्य ये यतंति ते तत् ब्रह्म निराकारं परब्रह्म विदुः ; कृत्स्नं समस्तं अध्यात्मं आत्मसंबंधिविषयमपि विदुः ; अखिलं समस्तं कर्म च कर्मस्वरूपं च विदुः । मामाश्रित्य मोक्षार्थं यतंतस्ते सर्वमपि रहस्यं स्वयमेव जानीयुरिति भावः । अतोऽमूर्तपरशिवब्रह्मानुभवाय सर्वैरपि साधकैः मूर्तरूपमाश्रयणीयमेव। मूर्तोपासनद्वारा अमूर्तैक्यमधिगंतुं महत्सौकर्यं वर्तते ॥ २९ ॥

**साधिभूताधिदैवं मां साधियज्ञं च ये विदुः ।**
**प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥ ३० ॥**

ये पूर्वोक्तास्साधकाः साधिभूताधिदैवं अधिभूतं भूतसंबंधिविषयः । अधिदैवं देवसंबंधिविषयः। अध्यात्मसंबन्धिविषयः पूर्वश्लोक एवोक्तः । अधिभूताधिदैवविशिष्टं एवं साधियज्ञं—यज्ञसंबन्धिविषयो ह्यधियज्ञं तद्विशिष्टं च मां ये विदुस्ते युक्तचेतसस्समाहितमनसस्सन्तः प्रयाणकाले च अन्तिमकालेऽपि च मां विदुः। कदापि ते मां न हि विस्मरेयुः ॥ ३० ॥

—o—o—o—

# अष्टमोऽध्यायः

'ये मां दिव्यमूर्तरूपं भजन्ते ते अमूर्तं ब्रह्म विदुः, अध्यात्मधिभूताधिदैवविशिष्टं च मां विदुः, अधियज्ञविशिष्टमपि मां विदुः, प्रयाणकालेऽपि देहत्यागसमयेऽपि मां विदुः' इति पूर्वाध्यायान्ते संग्रहेणोक्तं विस्तरेण ज्ञातुमिच्छन्नर्जुन उवाच--

**किं तद्ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम ।**
**अधिभूतं च किं प्रोक्तमधिदैवं किमुच्यते ॥ १ ॥**

**अधियज्ञः कथं कोऽत्र देहेऽस्मिन्मधुसूदन ।**
**प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः ॥ २ ॥**

हे पुरुषोत्तम कृष्ण, पूर्वं भवतोक्तं तद्ब्रह्म किं कीदृक्स्वरूपम् ? अध्यात्ममिति यदुक्तं तत्किम् ? कर्म इत्यनेनोक्तं च किम् ? अधिभूतमिति च किं प्रोक्तम् ? अधिदैवमित्यनेन च किमत्रोच्यते ? हे मधुसूदन, अत्र अधियज्ञशब्दनिर्दिष्टः कः ? कथं च वर्तते सः ? अस्मिन् देहे ? उतान्यत्रेति शेषः । एवं नियतात्मभिः समाहितचित्तैः प्रयाणकाले च अंतिमसमये च कथं त्वं ज्ञेयो ज्ञातव्योऽसि । एतेभ्यः प्रश्नेभ्य उत्तरं निरीक्षतेऽर्जुनः ॥

**अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ।**
**भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥ ३ ॥**

एतेषां प्रश्नानामुत्तरं यथाक्रमं श्रीभगवानुवाच । परमं सर्वोत्कृष्टं यदक्षरं न क्षरतीत्यक्षरं अव्ययं वस्तु तदेव ब्रह्म ब्रह्मशब्देनोक्तम् । स्वभावः उक्तस्य परब्रह्मणो यः स्वभावः स एव अध्यात्ममित्युच्यते । भूतभावोद्भवकरः भूतानां सर्वप्राणिनां भावो यस्स्वभावः तस्योद्भवकर उत्पत्तिहेतुभूतः यो विसर्गः देवतोद्देशेन द्रव्यत्यागरूपो यः स एव कर्मसंज्ञितः । यज्ञोऽपि कर्मपदवाच्यो भवति । परशिवब्रह्मविदां संतोषाय तदाराधनरूपं यद्यत् क्रियते तदपि यज्ञस्संपद्यते । तथैव क्लेशार्तानां जीवानां क्लेशपरिहाराय यद्यत्क्रियते तदपि

यज्ञ एव । एतादृशादेव यज्ञादेः वृष्ट्यादिक्रमेण सकलभूतानामप्युत्पत्तिः संभवति । अतः स एव कर्मपदवाच्यः संपद्यते ॥ ३ ॥

**अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ।**
**अधियज्ञोऽहमेवात्र देहे देहभृतां वर ॥ ४ ॥**

देहभृतां वर नरश्रेष्ठ हे अर्जुन ! क्षरो नश्वर यः पदार्थस्स एव अधिभूतं अधिभूतपदेन निर्दिष्टः । पुरुषश्च पुरुष एव अधिदैवतं अधिदैवत-शब्देन निर्दिष्टः । अधियज्ञः सर्वयज्ञाभिमानी देवता च या देहेऽस्मिन् वर्तते सापि अहमेव । " अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च " इति ह्युच्यते । परमात्मनः सार्वत्रिकीं स्थितिं शरणगीता स्पष्टं प्रतिपादयति । " त्वामर्चया-मीति विभाव्यते चेन्न चास्ति देहो भवतः पृथङ् मम । त्वां चिन्तयामीति विभाव्यते चेन्न चास्ति चित्तं भवतः पृथङ् मम ॥ वसन्भवत्येवमखण्डदेव ज्वलत्सुकर्पूर इवासि देहे ॥ " इति । एवं परमात्मैव देहे स्थित्वा सर्व-कार्याणि तत्सेवकसकाशात् निर्वाहयन् अनासक्ततयैव कर्मफलान्यप्यनुभूय सेवकाय तान्येव प्रसादरूपेणानुगृह्णाति । तथाप्येतत्सर्वं अनुभविभिरेव ज्ञायते ; न तु देहाभिमानिभिः । अधियज्ञस्वरूपं परशिवं ज्ञातुं कर्मिणो न प्रभवन्ति । एतद्रहस्यं ज्ञात्वा मानवः स्वदेह एवेश्वरं निरंतरं ध्यायन् नित्यसुखं अनुभवत्विति भगवत आशयः ॥ ४ ॥

**अन्तकाले च मामेव स्मरन्मुक्त्वा कलेवरम् ।**
**यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥ ५ ॥**

देहे जीवरक्षणार्थं स्थितं मामेव परमात्मानमेव सदा स्मरन् यो निर्लिप्ततया लोके व्यवहरति सोऽन्तकालेऽपि मरणकालेऽपि मामेव स्मरन् कलेबरं शरीरं मुक्त्वा त्यक्त्वा प्रयाति गच्छति । तादृशो भक्तः मद्भावं मदीयां स्थितिं अमूर्तावस्थां याति प्राप्नोति । अत्रास्मिन्नंशे संशयो नास्त्येव । अस्मिन्विषये शरणगीता एवमभिप्रैति । " यतत्स्वदीया तनुरित्यवैमि ततो ममान्या तनुरेव नास्ति । यस्मात्त्वदीयान्मनसो विभिन्नं मनस्तु नैवेति

विनिश्चयो मे ॥ यतस्त्वदीयं धनमेव सर्वं ततो विभिन्नं धनमेव नास्ति । ज्ञात्वा त्वदीयं त्रयमेतदेवं कथं नु विद्येत परो विचारः ॥" इत्ति बसवार्यः परमात्मनि स्वस्य सर्वार्पणभावमावेदयति । देहे स्थित्वैव यो देहाधिराजं परमात्मानं ज्ञात्वा तस्मिन्विलीयते तस्य अन्यो विचारो न विद्यत इत्येतत्सत्यमेव । तस्य इह परत्र चामूर्तस्थितिर्नियतैव भवेत् । इह या स्थितिरनुभूयते सैव शाश्वतिकतया अन्यत्र च विलसति ॥ ५ ॥

यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥ ६ ॥

कथमेवमित्यत्र अयं सामान्यो न्याय इत्याह । हे कौन्तेय अर्जुन ! यं यं वापि भावं यं कंचन भावविशेषं स्मरन् मानवः अन्ते मरणकाले कलेवरं त्यजति तं तं तादृशमेव भावं सदा सर्वकालेऽपि तद्भावभावितः तद्भावेनैव प्रभावितस्सन् एति प्राप्नोति । अतश्च अन्तकाले यो मां स्मरति सः मद्भावमेव यातीत्यत्र संशयो नास्ति । प्रयाणसमये कामिनीकाञ्चनचिन्ता यदि स्यात् तदर्थमेव जीवः पुनर्जायेतैव । यः देहवियोगावसरे परमात्मानमेव चिन्तयति सः परमात्मैव संपद्यते ॥ ६ ॥

तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च ।
मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयम् ॥ ७ ॥

एवमन्तिमसमये मम स्मरणं न सुलभं; किन्तु सतताभ्याससाध्यम् । अतः सदा न केवलं पूजासमय एव किन्तु व्यवहारकालेऽपि मां चिन्तयेत्यर्जुनाय भगवान् हितमुपदिशति । तस्मात्कारणात् सर्वेष्वपि कालेषु इदानीमारभ्यैव मामनुस्मर सततं चिन्तय । एवं मां स्मरन्नेव युध्य च कर्तव्यत्वेन प्राप्तं युद्धं च मद्वचनात्कुरु । एवं मय्येवार्पितमनोबुद्धिः अर्पितं निक्षिप्तं मनो बुद्धिश्च येन तादृशस्त्वं मामेव एष्यसि प्राप्स्यसि । असंशयमत्र संशयस्य अवकाश एव नास्ति ॥ ७ ॥

अभ्यासयोगयुक्तेन चेतसा नान्यगामिना ।
परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥ ८ ॥

अन्तिमस्मरणफलमुक्त्वा तदेवातिमुख्यत्वात् अध्यायशेषेण विवृणोति । हे पार्थ अर्जुन ! अभ्यासयोगयुक्तेन अभ्यास एव योगः तेन युक्तेन सहितेन नान्यगामिना अनन्यगामिना तदेकविषयेण चेतसा मनसा दिव्यं अप्राकृतं परमं पुरुषं परमात्मानं अनुचिन्तयन्ननुस्मरन् ध्यायन् साधकः परंजोतिस्स्वरूपं तमेवामूर्तशिवं याति प्राप्नोति ॥ ८ ॥

कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः ।
सर्वस्य धातारमचिन्त्यरूपमादित्यवर्णं तमसः परस्तात् ॥

सदा ध्यानयोगनिरतः कीदृशं परमात्मानं प्रयातीत्यंशमेव विवृणोति । कविं कान्तदर्शिनं, पुराणं चिरन्तनं, अनुशासितारं सर्वस्यापि जगतो नियामकं, अणोरणीयांसं सूक्ष्मादपि परमसूक्ष्मं सर्वस्य धातारं सर्वस्यापि जगतः स्रष्टारं अचिन्त्यरूपं चिन्तयितुमप्यशक्यं यद्रूपं तद्विशिष्टं, आदित्यवर्णं आदित्य-सदृशवर्णविशिष्टं, तमसः परस्तात् अज्ञानरूपात्तमसोऽतीत्य वर्तमानं अमूर्त-परमेश्वरं योऽनुस्मरेत् सः तादृशमेव परमं पुरुषं यातीति पूर्वेण संबन्धः ॥

प्रयाणकाले मनसाचलेन भक्त्या युक्तो योगबलेन चैव ।
भ्रुवोर्मध्ये प्राणमावेश्य सम्यक् स तं परं पुरुषमुपैति दिव्यम् ॥१०॥

पूर्वोक्तस्यैव विवरणमत्र क्रियते । प्रयाणकाले देहावसानकाले अचलेन दृढेन मनसा भक्त्या च युक्तः, अपि च तथैव योगबलेन योगस्य बलं तेन च युक्तो भ्रुवोर्मध्ये भ्रूमध्यस्थाने सम्यगप्रमत्ततया प्राणमावेश्य स्थापयित्वा यः योगी वर्तते सः तं उक्तं दिव्यं परं पुरुषं उपैति प्राप्नोति ॥

यदक्षरं वेदविदो वदन्ति विशन्ति यद्यतयो वीतरागाः ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण प्रवक्ष्ये ॥

पुनरपि योगिनः स्थित्यन्तरमाह । यत् अक्षरं अव्ययं सर्वाश्रयं

अखण्डलिङ्गरूपं परशिवब्रह्म वेदविदो ब्रह्मविदो वदन्ति ज्ञात्वा तत्स्वरूपं कथयन्ति । वीतरागा वैराग्यशीला यतयः संन्यासिनो यत् सर्वविश्रान्तिस्थलं परब्रह्म विशन्ति प्राप्नुवन्ति । यत् परब्रह्म इच्छन्तः प्राप्तुमभिलषन्तस्साधकाः ब्रह्मचर्यं गुरुकुलवासादिरूपं चरन्ति कुर्वन्ति तत्पदं दिव्यममूर्तं स्थानं ते संग्रहेण संक्षेपतः प्रवक्ष्ये तत्स्वरूपं वदिष्यामि ॥ ११ ॥

**सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ।**
**मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् ॥ १२ ॥**
**ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ।**
**यः प्रयाति त्यजन्देहं स याति परमां गतिम् ॥ १३ ॥**

सर्वद्वाराणि ज्ञानसाधनानि इन्द्रियाणि द्वारशब्देनोच्यन्ते । सर्वाण्यपीन्द्रियाणि । संयम्य विषयेभ्यो निगृह्य मनो हृदि निरुध्य नियम्य आत्मनः स्वस्य प्राणं मूर्ध्नि शिरसि तत्रत्ये भावलिङ्गे आधाय निक्षिप्य योगधारणां योगस्य धारणामास्थितो योगे दृढमंकुरितः ओमित्येकाक्षरं प्रणवरूपमविनाशि अद्वितीयं च ब्रह्म परशिवाख्यमखण्डलिङ्गं व्याहरन्नुच्चरन् मां च तद्वाच्यममूर्तं मां अनुस्मरन् मनसाध्यायन् देहं शरीरं त्यजन् यः प्रयाति देहाद्गच्छति सः परमां गतिं प्रकृष्टं स्थानं याति प्राप्नोति ॥ १२–१३ ॥

**अनन्यचेतास्सततं यो मां स्मरति नित्यशः ।**
**तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥ १४ ॥**

अन्तिमकालिकस्थितिमुक्त्वा अद्य इतरदेवताभक्तापेक्षया स्वभक्तस्य श्रैष्ठ्यं वदति । अनन्यचेताः नान्यस्मिन् चेतो मनो यस्य सः मदेकमनास्सन् । यो मां परमात्मानं नित्यशः सदा स्मरति ध्यायति, हे पार्थ अर्जुन ! नित्ययुक्तस्य नित्यं समाहितस्य तस्य योगिन एवाहं सुलभः सुखेन प्राप्यः ॥

**मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।**
**नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥ १५ ॥**

एवमनन्यचेतसः परमात्मैकनिष्ठाः अन्तिमां संसिद्धिं योगफलं गताः प्राप्ता महात्मानः महापुरुषाः मां परमात्मानमुपेत्य प्राप्य दुःखालयं दुःखानामाधारभूतं अशाश्वतमनित्यमिदं पुनर्जन्म नाप्नुवन्ति ; पुनस्तेषां संसारप्रसक्तिरेव न संभवति ॥ १५ ॥

**आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।**
**मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ १६ ॥**

इतरेषां तु पुनरावृत्तिरवर्जनीयैवेत्याह । हे अर्जुन ! आब्रह्मभुवनात् ब्रह्मणश्चतुर्मुखस्य भुवनं लोकस्तत्पर्यन्तं ये लोकास्ते सर्वेऽपि पुनरावर्तिनः पुनरावर्तनस्वभावा एव । ब्रह्मलोकपर्यन्तं प्राप्तानामपि योगिनां परशिवब्रह्मैक्यानवाप्तौ पुनरावृत्तिरस्त्येवेत्यर्थः । हे कौन्तेय ! मां परमात्मानमुपेत्य तु प्राप्य तु पुनर्जन्म न विद्यते । जले जलमिव तेषां तावत्पुनरावृत्तिर्नास्त्येव ॥

**सहस्रयुगपर्यन्तमहर्यद्ब्रह्मणो विदुः ।**
**रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः ॥ १७ ॥**

चतुर्मुखब्रह्मणोऽप्यनित्यत्वकथनेन ब्रह्मलोकस्यापि अनित्यत्वं प्रतिपादयति । सहस्रयुगपर्यंतं सहस्रं युगानि पर्यंतोऽवसानं यस्य कालस्य तावान् यो वर्तते सः ब्रह्मणः अहः दिवाकालस्य परिमाणं अहोरात्रविदो जना अहोरात्रप्रमाणज्ञा अनुभविनो विदुः ; एवमेव रात्रिमपि युगसहस्रांतां सहस्रयुगावसानां विदुः । अतश्च चतुर्मुखलोकोऽपि कालपरिच्छिन्न एवेत्यर्थः ॥

**अव्यक्ताद्व्यक्तयस्सर्वाः प्रभवन्त्यहरागमे ।**
**रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥ १८ ॥**

एतादृशेऽहनि रात्रौ च किं भवतीत्यत्राह । अहरागमे दिवाकाले प्राप्ते सर्वाः व्यक्तयः स्थावरजङ्गमादयश्च अव्यक्तात्प्रधानात् सर्वाधारात् अमूर्तपरमात्मनः प्रभवन्ति आविर्भवन्ति । तथैव रात्र्यागमे रात्रिकाले प्राप्ते तत्रैवाव्यक्तसंज्ञके परमात्मनि प्रलीयन्ते पुनर्लयं यान्ति । एवं च चतुर्मुखस्य दिवाकाले तु जगत्सृष्टिः ; रात्रौ च प्रलयो भवतीत्यर्थः ॥ १८ ॥

**भूतग्रामस्स एवायं भूत्वा भूत्वा प्रलीयते ।**
**रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे ॥ १९ ॥**

सर्वेषामपि प्रलये संपूर्णलये सति पुनः सृष्टिकाले नूतनप्राणिनामेव सृष्टिर्वक्तव्या । एवं सति तेषां परस्परतारतम्यं किंकृतम् ? इति शङ्कायां पूर्णलयाङ्गीकारमात्रेण निरवशेषतया जीवानामपि नाशः संभवेत्; किंतु अव्यक्ततया ते सर्वेऽपि तदानीं अमूर्तपरमात्मन्येव तिष्ठन्ति । सृष्टिकाले च त एव व्यक्तीभवंति । तथा च प्रलयेऽपि सूक्ष्मतया अव्यक्ततया च जीवानां स्थित्या, तेषां विचित्रकर्मसंस्कारविशिष्टानामेव पुनस्सृष्टिकाले उत्पत्त्या तादृशविचित्रकर्ममूलकमेव तारतम्यमिति न कोऽपि दोष इत्याशयेनाह । हे पार्थ ! स एवायं भूतग्रामः यः प्राणिसमुदायः इदानीमपि वर्तते स एव भूत्वा भूत्वा तदातदा उत्पद्य पुनः स एव रात्र्यागमे उक्तचतुर्मुखस्य रात्रिकाले प्राप्ते अवशः स्वत एव प्रलीयते प्रलयकाले । एवमेव अहरागमे उक्तचतुर्मुखस्य दिवाकाले प्राप्ते प्रभवति स एव पुनरुत्पद्यते । ततश्च जीवानां न संपूर्णो नाश इत्यर्थः ॥ १९ ॥

**परस्तस्मात्तु भावोऽन्योऽव्यक्तोऽव्यक्तात्सनातनः ।**
**यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥ २० ॥**

एवं जीवानामपि उत्पत्तिप्रलयपरवशत्वेन क्षरत्वमेवेत्युक्त्वा तद्विलक्षणस्य परमात्मनः सदा अक्षररूपत्वमाह । तस्मादुक्तादव्यक्तात् प्रलयकाले ऽव्यक्तभावमापन्नात् जीवादपि उत्कृष्टोऽन्यो यो भावः पदार्थः सनातनः सदैकरूपतया वर्तमानः अव्यक्तः सदैव चाव्यक्तरूपो ह्यमूर्तः परमात्मा अस्ति सः सर्वेषु भूतेषु नश्यत्स्वपि उक्तप्रळयकाले न विनश्यति ॥ २० ॥

**अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ।**
**यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥ २१ ॥**

अत एव सः अव्यक्तः परमात्मा अक्षरोऽविनाशीत्युक्तः । तमेवाक्षरं

अमूर्तं परशिवं सर्वेषां जनानां परमां गतिं परमप्राप्यमाहुः शिवानुभविनः । कुत इत्यत्राह यमित्यादि । यमक्षरं प्राप्य न निवर्तन्ते न पुनरावर्तन्ते पाशमुक्ता निर्मलाः सिद्धाः तत्परमं धाम उत्कृष्टं स्थानं मम मदीयमेवेति भगवानुपदिशति । अतस्स एव सर्वेषां परमप्राप्यः ॥ २१ ॥

**पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।**
**यस्यांतःस्थानि भूतानि येन सर्वमिदं ततम् ॥ २२ ॥**

परशिवब्रह्मप्राप्त्युपायमाह । हे पार्थ ! सः परः पुरुषः परमपुरुषः परमात्माऽहम् । 'अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः' इति परमात्मनः पुरुषोत्तमत्वं वक्ष्यते । अनन्यया अन्याऽविषयया मदेकमात्रविषयया भक्त्यैव लभ्यः प्राप्यः । यस्य परमात्मनः भूतानि सर्वाण्यपि अंतर्विद्यमानानि तदधीनान्येवेत्यर्थः । येन च परमात्मना इदं सर्वं जगत् ततं व्याप्तं सः परः पुरुषः मूर्तामूर्तस्वरूपः परमात्मेत्यर्थः ॥ २२ ॥

**यत्र काले त्वनावृत्तिं आवृत्तिं चैव योगिनः ।**
**प्रयाता यांति तं कालं वक्ष्यामि भरतर्षभ ॥ २३ ॥**

'आब्रह्मभुवनाल्लोकाः पुनरावर्तिनः' इति 'यं प्राप्य न निवर्तंते तद्धाम परमं मम' इति च परमात्मानं प्राप्नुवतां अपुनरावृत्तिरितरेषां पुनरावृत्तिश्च प्रतिपादिता । अथ तादृशानां तत्तदनुगुणो मार्गोऽपि भिन्न इति वक्तुं प्रथमं प्रतिज्ञामाह । हे भरतर्षभ अर्जुन ! योगिनो यत्र काले यादृशसमयविशेषे प्रयाता मृतास्सन्तः आवृत्तिं पुनरागमनं अनावृत्तिं चैव पुनरनागमनं वा यान्ति प्राप्नुवन्ति तं कालं वक्ष्यामि शृणु ॥ २३ ॥

**अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।**
**तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥ २४ ॥**

अग्निः कालाभिमानिनी देवता । ज्योतिस्तदभिमानिनी देवता । एवं अहः, शुक्लः शुक्लपक्षः, उत्तरायणं, षण्मासाः उत्तरायणत्वेन परिगणिताः

षण्मासाः, तत्र एतादृशे शुभे काले प्रयाता मृताः ब्रह्मविदः शिवानुभविनो ब्रह्म परशिवब्रह्मैव गच्छन्ति प्राप्नुवन्ति ; न पुनरावर्तन्ते ।संसारचक्रे ते न परिभ्रमन्ति । पुण्यशालिन एव तस्मिन् काले देहं त्यजंति ॥ २४ ॥

**धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।**
**तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥ २५ ॥**

धूम इत्यादावपि पूर्ववत् तत्तदभिमानिनी देवता अर्थः । रात्रिस्तथा कृष्णः कृष्णपक्षः, षण्मासा दक्षिणायनं, दक्षिणायनभूताः षण्मासाः । तत्र एतादृशे काले चान्द्रमसं चन्द्रमस्संबन्धिज्योतिः योगी परमात्मव्यतिरिक्तान्यदेवतासक्तो योगी प्राप्य तत्तल्लोकं च प्राप्य तस्मान्निवर्तते। अत्र मानवलोके जन्माधिगंतुं सः पुनरावर्तते ॥ २५ ॥

**शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।**
**एकया यात्यनावृत्तिं अन्ययावर्तते पुनः ॥ २६ ॥**

एते हि द्वे शुक्लकृष्णे गती मार्गद्वयं जगतो लोकस्य शाश्वते नित्ये वर्तेते । कदापि नास्य मार्गस्य व्यवस्थितस्य व्यत्ययः संभवेत् । तत्र एकया गत्या शुक्लगत्यप्रया ता अनावृत्तिं अपुनरावृत्तिं याति प्राप्नोति । अन्यया कृष्णगत्या प्रयाता तु साधकः पुनरावर्तते पुनरावृत्तिं प्राप्नोति । स तु संसारचक्रपरिभ्रमणमधिगच्छति ॥ २६ ॥

**नैते सृती पार्थ जानन् योगी मुह्यति कश्चन ।**
**तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन ॥ २७ ॥**

एतादृशमार्गद्वयोपदेशस्योद्देशमाह । हे पार्थ ! एते सृती एतन्मार्गद्वयं जानन् कश्चन योगी न मुह्यति मोहपरवशो न भवति । शुक्लगत्या गच्छतां अपुनरावृत्तिं, कृष्णगत्या गच्छतां पुनरावृत्तिं च यः जानाति स योगी पुनरावृत्तिमार्गं कथमिच्छेदित्यर्थः । तस्मात्कारणात्, हे अर्जुन ! सर्वेष्वपि कालेषु योगयुक्तो भव मत्प्राप्त्यनुगुणपुनरावृत्तिहेतुभूतमद्योगयुक्तो

भव ; न तु पुनरावृत्त्यनुगुणान्यदेवतायोगयुक्तो भव । यत्र कुत्रापि स्वामीप्सिते मूर्तरूपे परमात्मभावनयैव आसक्तः साधक शुक्लगतिमेवाधिगच्छति । यः स्वात्मानं परमात्मांशं विज्ञाय स्वान्तःस्थं परमात्मानमनुभवितुं तमेव प्राणभावनया वहिरर्चयन् नित्ययोगमधिगच्छति सोऽपि शुक्लगत्यैव गच्छन् तमेव पूर्वानुभूतं शिवयोगमनुसरति । एतादृशं योगमिहैव यो न जानाति नाचरते च सः अव्यवस्थितचित्तः स्वदेहतुष्ट्यै यां कामपि देवतां तत्तत्कालानुगुणां परिगृह्य तत्र सर्वात्मकं परमात्मानं न भावयति । सः स्वात्मस्थं अमूर्तं देवमजानन् बाह्यसुख एवासक्तः देहावसानकाले कृष्णगत्यैव चन्द्रलोकपर्यंतं गत्वा पुनरिहैव प्रतिनिवर्तते । एवं शुक्लकृष्णगत्योरन्तरं विज्ञाय विवेकी शुक्लगत्यधिगमायाभिलषितं ज्ञानक्रियासमन्वयमार्गमेव समाश्रयेत् । " बाह्यार्चनादेव सुखं न लभ्यते फलं न किञ्चित्परिणामतश्च " इति वदन्तः शरणाः स्वान्तःशिवयोगविरहितां बाह्यार्चनां विनिन्दन्ति । बाह्यार्चनकाल एव यस्य हृदयविकासेन गुहेश्वरार्चनं सदा लीलयैव प्रवर्तेत स एवात्र नित्यसुखी वसन् देहवियोगकाले शुक्लगतिमेवाश्रयन् शिवैक्यसुखमेव सार्वत्रिकतया अनुभवति । हृदयविकासेन यः प्रपञ्चं पश्यति स सर्वत्र सर्वदा परमात्मप्रकाशमेवानुभवति । तस्यार्चनं शरणगीतैवं निर्दिशति । तदीयानि अष्टविधानि पुष्पाणि परमात्मनः अतीव प्रियाणि वर्तन्ते । " समस्तजीवेषु विनैव हिंसां संप्रीणनं स्यात्प्रथमं हि पुष्पम् । सर्वेन्द्रियग्रामविनिग्रहो वै द्वितीयपुष्पं हृदये निवेश्यम् ॥ अहंममेत्यादि विसृज्य शांत्या सद्वर्तनं स्याच्च तृतीयपुष्पम् । विहाय दुर्भावमसह्यतावहं सद्भावयोगस्सुमनस्सु पञ्चमः । भुक्त्वोपवासी शिवयोगनिष्ठः संतिष्ठते चेत्कुसुमं च षष्ठम् । सदुक्तिरेवानृतविप्रयोगत्संभाव्यते सप्तमपुष्पमेषा ॥ सर्वप्रपंचे शिवभावनैव संकीर्त्यते त्वष्टमपुष्पमेव । एतादृशे ह्यष्टदळाख्यपुष्पे सहस्रपूजां विरचय्य लोके ॥ शरणाश्च ते कूडलचन्नसङ्ग वसन्ति नित्यं तव बिंबभावे ॥ " इत्येवमनुष्ठिता शरणानामर्चना यैराश्रियते तेऽवश्यं शिवयोगनिष्ठाः शुक्लगतिमेवाधिगच्छन्ति । एतादृशपरमफल-

सिद्धये साधकैः सर्वदा शिवयोगनिरतैर्भवितव्यमित्युपदिशति भगवान् ॥

**वेदेषु यज्ञेषु तपस्सु चैव दानेषु यत्पुण्यफलं प्रदिष्टम् ।**
**अत्येति तत्सर्वमिदं विदित्वा योगी परं स्थानमुपैति चाद्यम् ॥**

एतादृशपरमात्मयोगनिष्ठान् प्रशंसयति भगवान् । वेदेषु अधीतेषु, यज्ञेषु अग्निहोत्रादिषु, तपस्सु चैव तपोऽनुष्ठानेषु च, एवमेव दानेषु, महादानेषु च कृतेषु यद्यादृशं महत्पुण्यफलं पुण्यरूपं फलं प्रदिष्टं शास्त्रेषूपदिष्टं तत्सर्वं तादृशसर्वफलमपि इदं विदित्वा उक्तरहस्यं ज्ञात्वा योगी शिवयोगी अत्येति अतिक्रम्य गच्छति । एतत्सर्वापेक्षयाप्युत्कृष्टं स्थानं सः गच्छति । तदेव स्थानमाह । आद्यं सर्वकारणभूतं ब्रह्मरूपं परमुत्कृष्टं स्थानं च उपैति प्राप्नोति तादृशः शिवयोगी देहवियोगानन्तरम् । योऽस्मिन्नेव प्रसादकाये शिवानन्दमनुभवति स एवामूर्तं शिवैक्यरूपं सुखं विन्दते । एवं शिवयोगपराणां प्राप्यं स्थानमेव सर्वापेक्षयाप्युत्कृष्टमित्यर्थः ॥ २८ ॥

---

## नवमोऽध्यायः

एवं इतरसर्वविधयोग्यपेक्षया शिवयोगिनः श्रेष्ठत्वमुक्त्वा अधुना शिवयोगोपयोगिविषयं उपदेष्टुमिच्छन् आदौ तस्य परमगुह्यत्वादिविशेषान् सूचयितुं श्रीभगवानुवाच—

**इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ।**
**ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥**

इदं तु वक्ष्यमाणं गुह्यतममत्यन्तगोप्यं अनसूयवे असूयारहिताय सद्गुणवते ते तुभ्यं प्रवक्ष्यामि कथयिष्यामि । विज्ञानसहितं विशिष्टं ज्ञानं विज्ञानं अनुभवरूपं, तत्सहितं वक्ष्यमाणं यत् ज्ञानं ज्ञात्वा प्राप्य अशुभात् संसारात् मोक्ष्यसे मुक्तो भविष्यसि । एवं च शिवज्ञानमेव संसारपाशमोचक-

मिति सिद्धं भवति। तदानीमेव जीवः स्वीयाहङ्कारममकारादिकं परित्यज्य निरीहो निर्ममश्च संपद्यते ॥ १ ॥

**राजविद्या राजगुह्यं पवित्रमिदमुत्तमम्।**
**प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥ २ ॥**

राजविद्या विद्यानां राजा श्रेष्ठम्। 'अध्यात्मविद्या विद्यानाम्' इति हि वक्ष्यति। राजगुह्यं गुह्यानां राजा, अतिगोप्यमिदं तत्त्वं न सुलभतया सर्वैर्ज्ञातुं शक्यम्। इदमुत्तमं पवित्रं पावनानामपि परमपावनम्। प्रत्यक्षावगमं प्रत्यक्षेण अवगमो यस्य तत् प्रत्यक्षतोऽनुभवितुं शक्यम्। धर्म्यं धर्मानुगुणम्। कर्तुं सुसुखं सुलभम्। अव्ययं भगवदाराधनादिकर्मवत् नाशरहितं तत् ज्ञानमिति शेषः। एवं ज्ञानमतिगूढमपि ज्ञेयमनुष्ठेयं च वर्तते। निर्मलहृदयैस्साधकैः देहस्थस्येश्वरस्य लीलाविलासो ज्ञायत एव। तेषां तावत् तज्ज्ञानं प्रत्यक्षावगममिति भगवत उपदेशः सर्वेषामादरणीयः हृदयनैर्मल्यसंपादनायेति ज्ञेयम् ॥ २ ॥

**अश्रद्दधानाः पुरुषा धर्मस्यास्य परन्तप।**
**अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥ ३ ॥**

एतादृशं सुलभसाध्यमपि ज्ञानं जना न शृण्वन्ति किलेति शोकादाह भगवान्। हे परन्तप अर्जुन! अस्य धर्मस्य उक्तस्य परमधर्मस्य विषये अश्रद्दधाना श्रद्धाविरहिताः पुरुषाः जनाः मां परमात्मानं अप्राप्य अनवाप्य मृत्युसंसारवर्त्मनि मृत्युयुक्ते संसारमार्गे निवर्तन्ते पुनःपुनरावर्तन्ते नहि अपुनरावृत्तिं लभन्ते। हन्त! जगद्व्यापके जगदाधारभूते धर्मस्वरूपे ज्ञाने श्रद्धाविरहितास्तु शिवज्ञानविदूराः शिवैक्यसुखमलभमानाः मृत्यवशं गच्छन्ति। इहपरदुःखभागिनो भवन्ति तादृशो ज्ञानहीनाः पशुजीवाः ॥ ३ ॥

**मया ततमिदं सर्वं जगदव्यक्तमूर्तिना।**
**मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥ ४ ॥**

एवं वक्ष्यमाणं स्तुत्वा अथ वक्तव्यमंशं वदति । अव्यक्तमूर्तिना न व्यक्ता अव्यक्ता मूर्तिर्यस्य तेन अव्यक्तस्वरूपेण मया परमात्मना इदं सर्वं जगत् ततं व्याप्तम् । अतस्सर्वभूतानि सर्वाण्यपि भूतानि मत्स्थानि मदधीनान्येव । अथापि तेषु भूतेषु अहं न चावस्थितः नाहं तदधीनोऽस्मि । "अहं सर्वत्र वर्तमानोऽपि न कस्यापि वशो वर्ते" इति भगवदुक्त्या अमूर्तशिवस्य सर्वत्र निर्लिप्ततयाऽवस्थानं सूच्यते ॥ ४ ॥

**न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।**
**भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥ ५ ॥**

एवं स्वस्यैकरीत्याऽवस्थानात् निर्लिप्ततामाह । एवं मे निर्लिप्ततयाऽवस्थानात् भूतानि तानि मस्थान्यपि मदुपरि भूतले घटादिरिव न तिष्ठन्ति । एतदेव मदीयं ईश्वरसंबन्धिसामर्थ्यम् । विचित्रमिमं महामहिमविशिष्टं ऐश्वरं योगं शिवयोगं सर्वव्यापकं पश्य । अहं भूतभृत् भूतानि बिभ्रदपि सर्वाधारस्सन्नपि न च भूतस्थः भूतेष्वेव न तिष्ठामि । मम आत्माऽयं स्वरूपः भूतभावनः भूतानामुत्पादकः । न केवलं शिवः सर्वाधारः किन्तु-सर्वोत्पादकश्च अस्तीति भावः ॥ ५ ॥

**यथाऽऽकाशस्थितो नित्यं वायुः सर्वत्रगो महान् ।**
**तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥ ६ ॥**

उक्तमर्थं सदृष्टान्तमाह । यथा सर्वत्रगः सर्वत्र विद्यमानः महान् वायुर्नित्यं आकाशस्थितः आकाशे तिष्ठति तथैव सर्वाणि भूतानि मत्स्थानि लिङ्गस्वरूपिणि मय्येव निवसन्ति ; न तु भूतले घटादिरिव अन्यत्र निवसेयुरिति उपधारय निश्चिनु । एवं भगवतो महादेवस्य सर्वाधारत्वं सुव्यवस्थया प्रतिपादितम् । अत एव तस्य स्थलाभिधानं युज्यते॥ ६ ॥

**सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ।**
**कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥ ७ ॥**

हे कौन्तेय अर्जुन ! कल्पक्षये प्रळयकाले सर्वभूतानि मामिकां मदीयां प्रकृतिं त्रिगुणात्मिकां मायां यान्ति प्राप्नुवन्ति ; तत्र विलीना भवन्ति । कल्पादौ सृष्ट्यारंभे तानि भूतानि जीवजातानि पुनरहमेव विसृजामि उत्पादयामि । प्रळये अव्यक्ततया मायायां अवस्थितानि वस्तुजातानि सृष्टिकाले व्यक्तरूपतया बहिः प्रकाश्यन्ते । एवं सर्वेषां सृष्टिप्रळयाश्रयत्वात् अखण्डलिङ्गरूपोऽमूर्तः परमात्मा सर्वत्र वर्तत इति भावः । एवं सर्वसाक्षिभूतं परशिवं वञ्चयित्वा मानवैर्न किञ्चिदपि नूतनतया निर्मितुं शक्यते । तैः क्रियमाणं सर्वमपि सर्वव्यापकस्य परशिवस्य सङ्कल्पाधीनमेव । अत एव तदिच्छानुरोधेनैव जगद्व्यापारसर्वोऽपि निरुह्यत इति ज्ञात्वा विवेकिनो निमित्तमात्रं लोके व्यवहरन्तः देवात्मशक्तिं स्वगुणैर्निगूढां सम्यक् पश्यन्ति । लोके सर्वत्र तदीयं परमात्मसंदर्शनं शरणगीता एवमुपदिशति । सर्वेष्वपि निर्लिप्ततया विराजमानः शिव एव तैः सन्दृश्यते । तस्मिन् शरणागतानां तदीयं वर्तनमेवं तत्रोपवर्ण्यते "त्वमेव माता च पिता त्वमेव बन्धुस्त्वमेवासि तथैव मित्रम् । विना भवन्तं न च मेऽस्ति कश्चित् सञ्जार्यदेव शुणुताद्वचो मे । यथैव रोचेत तथा कुरुष्व दुग्धेऽथवा वारिणि निक्षिप त्वम् ॥" इत्येवं ते शरणाः स्वीयं गुरुतरं योगक्षेमनिर्वहणं स्वेषां बहिरन्तर्विराजमाने परमेश्वर एव समर्पयन्ति । एतादृशोऽचलविश्वासो वर्धिष्णुभिरवश्यं संपाद्यः, प्रवर्ध्यश्च प्रतिक्षणम् । विश्वासहीनो न कदापि सुखं विन्दते शान्तिञ्चाधिगच्छति । एवं साधकेषु सर्वेष्वपि आत्मविश्वासमुत्पादयितुमेव भगवान् देहधार्यपि स्वीयामूर्तस्थितौ स्वस्य सर्वव्याप्तिं सनिदर्शनमुपदिशति ॥ ७ ॥

**प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।**
**भूतग्राममिमं कृत्स्नं अवशं प्रकृतेर्वशात् ॥ ८ ॥**

पूर्वोक्तमेवाशयं विवृणोति । स्वां मदीयां प्रकृतिं अवष्टभ्य वशीकृत्य व्याप्य च कृत्स्नं सर्वं अवशं प्रकृत्यधीनं इमं भूतग्रामं प्राणिजातं प्रकृतेर्वशात् तदधीनत एव पुनः पुनः विसृजामि पूर्वपूर्वकर्मानुगतया प्रकृतिपर-

वशानेव सृजामि । सर्वं वस्तु तत्तत्प्रकृत्यनुरोधेनैव सृजति परमात्मा । सत्त्वरजस्तमोमयानि वस्तूनि तत्तद्गुणविशिष्टतयैव सृज्यन्ते । गुणसंपर्को यदि जीवैः शिवयोगमहिम्ना परित्यज्यते तदा तेषां पुनर्जन्मैव विहन्यते । यावत्पर्यंतं गुणसंबन्धो विलसति तावत्पर्यन्तं सर्वे जीवाः जननमरणचक्रे भ्रमन्त्येव । तत्तत्प्रकृत्यनुगुणतयैव सर्वाणि वस्तूनि अभिव्यज्यन्ते ॥ ८ ॥

**न च मां तानि कर्माणि निबध्नन्ति धनञ्जय ।**
**उदासीनवदासीनमसक्तं तेषु कर्मसु ॥ ९ ॥**

एवं तत्तत्कर्मानुगुणं सर्गकारणत्वादेव न मम तत्र लेपनमित्याह । हे धनञ्जय अर्जुन ! उदासीनवदुपेक्षकवत् आसीनं विद्यमानं तेषु कर्मसु सृष्ट्यादिषु जगद्व्यापारेषु असक्तं सङ्गरहितं मां तानि कर्माणि सृष्ट्यादिव्यापाराणि न च निबध्नन्ति नैव बद्धं कुर्वंति । कर्मण्यासक्तस्यैव तेन बंधः प्रसज्यते ; नत्वसक्तस्य मम कर्मलेपः संभवेत् । एवं सर्वे मानवाः स्वीयान् व्यवहारान् स्वार्थं विना भगवत्प्रेरणानुरोधेन कर्तव्यभावनया यदि कुर्युः तदा तैर्न कदापि दुःखमनुभूयेत । इदमेव नित्यसुखस्य संविधानमित्युदाराशयं भगवानाविष्करोत्यत्र । फलसङ्ग एव सर्वान् कर्माणि बध्नाति ; कर्तव्यदृष्ट्या व्यवहरणं व्यवहर्तॄन् नित्यसुखिनः करोति । भगवान् यथा सर्वं निर्वहन्नपि निरञ्जनो वर्तते तथा तदंशा वयमपि निर्लिप्ततया व्यवहर्तुं प्रयतेरन्निति भगवत आशयः ॥ ९ ॥

**मयाध्यक्षेण प्रकृतिः सूयते सचराचरम् ।**
**हेतुनानेन कौन्तेय जगद्विपरिवर्तते ॥ १० ॥**

अहं सृजामीति वदतः उदासीनवदासीनमिति कथनं परस्परविरुद्धमिव भाति इति शङ्कायां परिहारमाह । हे कौन्तेय ! अध्यक्षेण मया प्रकृतिः सचराचरं जगत्सर्वं सूयते उत्पादयति । परमात्माधिष्ठितैव प्रकृतिर्जगत्कारणं संपद्यत इत्यर्थः । अनेत हेतुना मदधिष्ठितत्वेनैव हेतुना जगद्विपरिवर्तते

विविधरूपतया परिवर्तते । परमात्माधिष्ठानाभावे हि प्रकृतिर्जगत् न सृजेदेव । एवं चैकरीत्या अहं कारणभूतोऽपि एकरीत्या उदासीनोऽप्यस्मीति न विरोध इति भावः । परमात्मनस्तु स्वातन्त्र्यात् उभयमपि तस्मिन् सिद्ध्यति । स एव जगद्रूपतया परिणमनात्, स्वसान्निध्यात् प्रकृत्या सर्वकार्यनिर्वहणात्, सृष्टेष्वेवोदासीनतयाऽवस्थानात् तस्मिन् सर्वमपि संपद्यते ॥ १० ॥

**अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।**
**परं भावमजानन्तो मम भूतमहेश्वरम् ॥ ११ ॥**

मूढा अविवेकिनो जनाः मम परं सर्वोत्तमं भावं पूर्वोक्तं अमूर्तं स्वभावं अजानन्तः, मानुषीं तनुमाश्रितं लोककल्याणार्थमेव मनुष्यसंबन्धिदेहं स्वीकृतवन्तं भूतमहेश्वरं भूतानां सर्वेषामीश्वरा नियामकाः ये वर्तन्ते तेषामपि इन्द्रादीनामीश्वरं मां अमूर्तं परमात्मानं अवजानन्ति सामान्यमनुष्यभावनया अवज्ञां कुर्वन्ति ॥ ११ ॥

**मोघाशो मोघकर्माणो मोघज्ञाना विचेतसः ।**
**राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥ १२ ॥**

अयं च आसुरराक्षसप्रकृतीनां मन्दानां तामसस्वभाव इत्याह । मोघाशाः मोघा व्यर्था आशा येषां ते । एवं जानतां तेषां आशा तावन्न कदापि फलिष्यत्येव । हिरण्यकशिपुरावणादिवत् त्रैलोक्यमेव जेतुं प्रवृत्ता अपि ते अन्ते न शिष्यन्त्येव । तेषां विनाशो नियत एव । अत एव मोघकर्माणः तैरनुष्ठीयमानानि सर्वाण्यपि कर्माणि विफलान्येव । मोघज्ञाना एवमेव तेषां शास्त्रज्ञानादिकमपि विफलं भवत्येव । रावणोऽपि चतुर्वेद-विद्यापारङ्गत इति प्रसिद्धमेव । अत एव विचेतसः विगलचेतसो अविवेकिनः । किञ्च ते आसुरीं राक्षसीं चैव मोहिनीं मोहकरीं प्रकृतिं श्रिता आश्रिताः । एतादृशा जनाः मां मर्त्यमिति भाव·न्तो यथार्थतयाऽजानन्तो मां अवजा-नन्ति । स्वभावानुरोधेन ते विचिन्त्य भावयन्ति । तदीयं कर्मफलं तेऽवश्य-मनुभवन्ति । दैवीप्रकृतेः परिचयानधिगमात् तद्वर्तनं तेभ्यो रोचते ॥

**महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।**
**भजन्त्यानन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥ १३ ॥**

दैवीप्रकृतिविशिष्टानां महात्मनां सद्भावनामत्र निर्दिशति । हे पार्थ अर्जुन ! दैवीं प्रकृतिमाश्रिता महात्मानस्तु मां भूतादिं सर्वभूतानां कारणभूतं अव्ययं निर्विकारतया सर्वत्र स्थितं मां अनन्यमनसो मदेकचित्ताः भजंति सेवंते । दैवीसंपद्भरिता मां यथार्थतया जानंति पुरस्कुर्वन्ति मदनुग्रहं तु लभन्ते च । आसुरीसंपद्भरितास्त्वेवं ज्ञातुं पुरस्कर्तुं च अशक्ता मत्प्रसादमपि नाधिगच्छन्ति । दुराशानां तेषां जीवने तु शांतिर्न दृश्यते । " दैवीसंपद्विमोक्षाय निबन्धायासुरी मता " इति विस्तरेण एतत्प्रकृतिस्वरूपं वक्ष्यति ॥

**सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः ।**
**नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥ १४ ॥**

दैवीसंपद्भरिताः कथं परमात्मानं भजंत इत्यत्राह । मां परब्रह्मभूतं सततं सदा कीर्तयन्तो मद्गुणगानं कुर्वन्तः, यतं तः इन्द्रियजयादिषु प्रवर्तयंतश्च दृढव्रताः स्थिरव्रता व्यवस्थितचित्ता मां नमस्यंतश्च नमस्कारं कुर्वन्तश्च, एवं नित्ययुक्तास्सदा समाहितचित्ता भक्त्या मामुपासते । तदीयं वर्तनं शरणगीता सम्यगावेदयति " न वारं दिनं वा न नक्तं दिवं वा न जानेऽद्य किं वा न मे यन्ममेति । सुविस्मृत्य कायं समाधाय चित्तं समेतोऽस्मि योगं भवत्पादपद्मे " इति । एवं दैवीसंपद्भरितास्तु सर्वदा ईश्वर एव रमन्ते । अत एव तेषां संसारः सारवद्वस्तुसंगतो विराजते ॥ १४ ॥

**ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते ।**
**एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥ १५ ॥**

अत्रैव प्रकारभेद उच्यते । अन्ये तु उपासकाः ज्ञानयज्ञेन चापि मां यजंतः एकत्वेन पृथक्त्वेन बहुधा च केचिदेकमेव परं ब्रह्म सर्वव्यापकमिति । अन्ये केचित् इन्द्रचन्द्रादिभेदेन एकमेव ब्रह्म प्रथक् पृथक्

अवस्थितमिति, अपरे तु बहुधा अनंतरूपं परब्रह्मेति, बहुभावापन्नत्वेन मां विश्वतोमुखं सर्वव्यापकं एकत्वेन पुथक्त्वेन बहुधा चावस्थितं ज्ञात्वा उपासते उपासनं कुर्वंति ॥ १५ ॥

स्वस्य विश्वतोमुखत्वेन सर्वमहमेवेति येन केनचिदुपासनं मम युक्तमेवेति कथनाय स्वस्य सर्वात्मकत्वमेव चतुर्भिः श्लोकैराह—

**अहं क्रतुरहं यज्ञः स्वधाहमहमौषधम् ।**
**मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम् ॥ १६ ॥**

क्रतुरग्निहोत्रादिकं श्रौतं कर्म अहमेव । वैदिकैः क्रियमाणं सर्वमपि कर्म अहमेव । तथैव गुरुलिङ्गजङ्गमाराधनरूपो यज्ञोऽपि परब्रह्मस्वरूप एव । एवमेव स्वधा पितृभ्यो यत् दीयतेऽन्नं तदपि अहमेव । श्राद्धादिकं कर्मापि भगवत्स्वरूपमेवेत्यर्थः । औषधं व्याध्युपशमार्थं यद्भेषजमस्ति तदप्यहमेव । देहारोग्यसंपादकमौषधमपि भगवत्स्वरूपमेव । देवतास्तोत्ररूपो मन्त्रोऽप्यहसेव । आज्यं होमसाधनं घृतादिकमप्यहमेव । अग्निर्होमाधारभूतोऽपि भगवत्स्वरूप एव । तत्र हुतं हवनकर्म यदस्ति तदप्यहमेव । तथैव अग्निस्वरूपौ गुरुजङ्गमावपि परब्रह्मभावनयैवोपास्यौ । तयोः प्रीणनाय यत्सन्तोषेण समर्प्यते तदपि परब्रह्मस्वरूपमेवेति भाव्यम् ॥ १६ ॥

**पिताहमस्य जगतो माता धाता पितामहः ।**
**वेद्यं पवित्रमोङ्कारः ऋक्साम यजुरेव च ॥ १७ ॥**

अस्य जगतः: पिता जनयिता अहमेव । माता जनयित्री, धाता कर्मफलानां विधाता, पितामहः पितुः पिता, वेद्यं वेदितव्यं पवित्रं पावनमोङ्कारः, ऋक् साम यजुरेव च त्रयो वेदाश्च सर्वं अहमेवेति भाव्यम् । सर्ववेदप्रतिपाद्यं परवस्तु अहमेवेति अजानन् मूढः मां मानुषं भावयति ; ततश्च सार्वजनिके मद्वचने सः न विश्वसिति । तस्य तु सर्वनाशो नियतमेव संभवेत् । न केवलं मां, अपि तु सर्वत्र वस्तुतः स्थितं देवांशमेव यः पुरस्क-

रोति स एव आनन्दमयो भवति। अतो भगवतः सर्वव्यापकत्वं विज्ञाय तथैव आचरन् मानवः आत्मकल्याणं साधयेत् ॥ १७ ॥

**गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत् ।**
**प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम् ॥ १८ ॥**

गतिः कर्मफलं, भर्ता पोषकः, प्रभुः सर्वरक्षणसमर्थः स्वामी, साक्षी धर्माधर्मयोः प्रेक्षकः, निवासः सर्वेषां वासयोग्या भूमिः, शरणं आर्तानां रक्षकः, सुहृत् सर्वेषामुपकारी, प्रभवः सर्वेषामुत्पत्तिः, प्रलयः, स्थानं स्थितिः, निधानं कालान्तरोपभोग्यं प्राणिनां निक्षेपो रत्नादिरूपः, अव्ययं त्रिकालवर्ति बीजं प्ररोहकारणं सर्वमेतत् अहमेव। सर्वाधारः अमूर्त एव परशिवः जगद्व्यापारनिर्वाहाय अनन्ताकारेण परिणमते। स एव बीजं, अंकुरो, वृक्षः फलं च संपद्यते। एतादृशः परिणामस्तस्य परिपूर्णतायाः स्वतन्त्रतायाश्च विलासः। अत एव सः सर्वेषामाकर्षकस्तिष्ठति ॥ १८ ॥

**तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च ।**
**अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ॥ १९ ॥**

हे अर्जुन! अहं तपामि आदित्यद्वारा जगत् शोषयामि। अहं वर्षं निगृह्णामि ; अहमेव उत्सृजामि च। वर्षकर्ता वर्षसंहर्ता च अहमेव। अमृतं देवानां, मृत्युश्च मनुष्याणां उभयमप्यहमेव। सत् यस्य एतत्संबन्धि तत्सत्, असंबन्धि असत् तदुभयमप्यहमेव। न त्वत्र असच्छब्देन सर्वथा अविद्यमानं शशशृङ्गादि ग्रहीतुं युक्तम्। एवं च संबद्धमसंबद्धं च वस्तु सर्वमपि भगवत्स्वरूपमेव। अमृतरूपं सुखादिकं, मृत्युरूपं दुःखादिकं च परब्रह्मस्वरूपमेवेति भाव्यम्। अत एव तत्त्वज्ञानिनो समदर्शना भूत्वा लोके शान्त्या व्यवहरन्ति। विषमरूपं व्यवहारं निर्वोढुं समदृष्टिरवश्यं अभ्यसनीया वर्धिष्णुभिः। नो चेत् निन्दाश्रवणेन दुःखमुत्पद्येत। साधकस्य चित्तस्वास्थ्यं परिहीयेत। ततश्च सुखस्येव दुःखस्यापि परिचयोऽधिगन्तव्यो मानवैरिति भगवान् स्वाशयं स्पष्टीकरोति ॥ १९ ॥

एवं सर्वरूपमपि सन्तं मा विहाय केवलं तत्तद्रूपं ये आराधयन्ति ते तावत् केवलं तदनुगुणं नश्वरं फलं प्राप्नुवन्तीति द्वाभ्यामाह—

**त्रैविद्या मां सोमपाः पूतपापाः यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।**
**ते पुण्यमासाद्य नरेन्द्रलोकमश्नन्ति दिव्यान्दिवि देवभोगन् ॥**

त्रैविद्याः ऋग्यजुस्सामविदः केवलकर्मकाण्डपराः सोमपाः सोमं पिबन्तीति तादृशः । तेन सोमपानेन पूतपापाः परिशुद्धाः, यज्ञैः सोमादियज्ञैः मामिष्ट्वा पूजयित्वा स्वर्गतिं स्वर्गरूपं फलं प्रार्थयन्ते अपेक्षन्ते । ते च पुण्यं तत्पुण्यफलभूतं सुरेन्द्रलोकं देवेन्द्रलोकं स्वर्गमासाद्य प्राप्य दिवि तस्मिन् देवलोके दिव्यान् देवभोगान् देवानां ये भोगास्तानश्नन्ति अनुभवन्ति । परमात्मसंपर्कं विहाय केवलभोगदृष्ट्या यदि कर्म आचर्यते तदाऽत्र स्वर्गे च सुखं अनुभवितुं यद्यपि शक्यते । तथापि तत् चिरस्थायि न भवेत् । कर्मफलं यावत्पर्यन्तं वर्तेत तावदवधिकमेव सुखं विन्देत साधकः ; ततोऽधिकं सुखं न कदापि लभेत ॥

**ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।**
**एवं त्रयीधर्ममनुप्रपन्नाः गतागतं कामकामा लभन्ते ॥ २१ ॥**

ते च नरास्तं विशालं विपुलं स्वर्गलोकं तदीयसुखं भुक्त्वा पुण्ये तदनुभवहेतुभूते पुण्ये क्षीणे सति पुनरिमं मर्त्यलोकं विशन्ति प्राप्नुवन्ति । एवमुक्तक्रमेण त्रयीधर्मं वेदोक्तं यज्ञादिधर्मं अनुप्रपन्ना आश्रिता जनाः कामकामाः कामानेव कामयन्तो न त्वात्मानं कामयन्तः गतागतं गमनागमनं लभन्ते न त्वपुनरावृत्तिं प्राप्नुवन्ति । एवं भोगाभिलाषेण यज्ञादिकं कुर्वन्तः-तादृशमल्पमेव फलं लब्ध्वाऽनुभवन्तस्तदर्थमेव पुनः पुनरुत्पद्यन्ते । तेषां संसारचक्रपरिभ्रमणं नियतमेव । अतो विवेकिभिर्भोगमार्गं परित्यज्य तमेव भोगमीश्वरप्रसादभावनया उपयुज्य आत्मकल्याणं साधनीयम् ॥

**अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।**
**तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ २२ ॥**

ये त्वेवं कामान्कामयन्तो न भवन्ति; किन्तु मामेवाश्रयन्ते तेषां तु न किञ्चिदपि भयमित्याह । अनन्याः अन्यप्रयोजनरहिताः ये जनास्साधका मामेव चिन्तयन्तो मामेव पर्युपासते परितस्सर्वत एव उपासते अन्तर्बहिश्च नित्याभियुक्तानां नित्यं मय्येव अभितः सर्वतः संबद्धानां तेषां सद्भक्तानां योगक्षेमं अप्राप्तस्य प्रापणं योगः; तद्रक्षणं क्षेमः तदुभयमप्यहं वहामि निर्वहामि । अत्र नित्याभियुक्तपदं शिवस्य नित्याभियोगं द्योतयति । एतादृशः परमात्मयोगस्तु भक्तदेहे बहिरंतस्तद्धारणादेव सिद्ध्यति । अतो नित्याभियोगः लिङ्गरूपिणः परमात्मनो लिङ्गरूपेणैव देहे धारणं बोधयति । हृदये तावत्परमात्मा अङ्गुष्टपरिमितो विराजत इति श्रूयत एव । तस्यैव संपर्को यदि वहिरपि परिकल्प्यते तदैव तस्य नित्याभियोगः सञ्जायेत भक्ते । एतादृशोऽभियोगः देहे लिङ्गधारणं विना न संभवति । नित्याभियोगयुक्तानामेव सद्भक्तानां योगक्षेमं वहामीति भगवान् अत्र प्रतिशृणोति । एवं धारणादेव साधकः परमात्मनो नित्यसंपर्कमधिगच्छेत् । एतादृशेन संपर्केणैव साधकस्य देहः मन्त्रमयस्सन् पावनो भवति । एतद्देहवानेव भक्तः भगवदनुग्रहभाजनं भवेत् । तस्य तु पापे मतिरेव नोत्पद्येत । एवं परमात्मनो नित्याभियोगेन साधकस्य सद्बुद्धिस्सद्भावना च स्थिरीक्रियेत । एतादृशो नित्याभियोगः वीरशैवैरक्षरशः अर्थशश्च पाल्यते । इतरेषां तु बहिर्धारणाभावेऽपि परमात्मनामस्मरणमेव नित्यमाचर्यमाणं सत् नित्याभियोगं संपादयति । अत एव सर्वैरपि साधकैः सजीवविश्वासेन परमात्मस्मरणं सर्वदा कर्तव्यमिति भगवत आशयः । यद्यपि सर्वेषां सर्वफलप्रदो भगवानेव; अथापि फलार्थिनां तत्तत्कर्मानुगुणतयैव सः रक्षको भवति; न तु साक्षादेव । ये तु स्वीयकर्मणां फलं नापेक्षन्ते तेषां तु कर्मफलसंबंधाभावात् साक्षादेव भगवान् ररशिवः तद्रक्षको भवति । अयमेव विशेषः परिकल्प्यते भगवता सकामनिष्कामभक्तेषु ॥ २२ ॥

ननु इतरदेवताः फलार्थं पूजयंतोऽपि भक्ताः अमूर्तं परमशिवमेव

पूजयंति ; यतः स एव सर्वरूपेणावस्थित इति श्रूयते स्मर्यते अनुभूयते च । तथापि ते अपि भगवत्पूजका एव भवेयुः । अतः को विशेषः परमात्माराधकानां इतरदेवतापूजकानां चेत्यत्राह—

**येऽप्यन्यदेवताभक्ताः यजन्ते श्रद्धयान्विताः ।**
**तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥ २३ ॥**

हे कौन्तेय ! येऽप्यन्यदेवताभक्ता इतरदेवताराधकाः सन्ति तेऽपि श्रद्धया अन्विता युक्ताः मामेव अमूर्तशिवमेव यजंते अर्चयन्ति ; परंतु ते अविधिपूर्वकं " अमूर्तशिव एव सर्वान्तर्यामी सर्वत्र पूज्यः " इति ज्ञानाभावात् तदनुगुणविधिरहिततयैव मां अमूर्तं शिवमर्चयन्ति । तथा च ' अविधिना कृतं अकृतमेव ' इति न्यायेन तादृशं अविधिपूर्वकं प्राकृतमूर्तरूपस्य अर्चनं कृतमपि वस्तुतो न हि अमूर्तपूजनं भवति ; अतस्तेषां फलमपि तदनुगुणमेव भवतीत्ययमेव अमूर्तशिवभक्तानां इतरमूर्तरूपाराधकानां च विशेषः । विग्रहाराधका अपि तदन्तःस्थितऽमूर्ताराधका एव भवन्ति । अथाप्यमूर्ताख्यप्राणलिङ्गाराधकास्तु प्राणे विलीनाः नित्यानन्दमनुभवन्ति । मूर्तोपासकास्तु क्षणिकैहिकसुखान्यनुभवन्तस्तदनन्तरं दुःखभाजोऽपि भवन्ति । नित्यसुखापेक्षिणस्तु मूर्तोपासनवेळायामपि अमूर्तभावनामेव यदि कल्पयेयुस्तदा ते कृतकृत्या भवेयुरिति भगवदाशयः ॥ २३ ॥

**अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।**
**न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥ २४ ॥**

अविधिपूर्वकं यजन्तीत्येतदेव विवृणोति । सर्वयज्ञानां श्रौतस्मार्तादिसर्वयज्ञानामपि अहं हि अहमेव हि तत्तद्देवतारूपत्वात् भोक्ता । अत एवाहं प्रभुरेव च सर्वेषामपि संरक्षको नियामकश्चास्मि । तु किंतु ते कामकामा ऐहिकफलापेक्षया कर्म कुर्वन्तः पुरुषाः मां तादृशं मां नाभिजानन्ति तत्त्वेन वस्तुतः । अतस्ते च्यवन्ति तत्फलं नाप्नुवन्ति ॥ २४ ॥

**यन्ति देवव्रता देवान् पितॄन्यान्ति पितृव्रताः ।**
**भूतानि यांति भूतेज्या यांति मद्याजिनोऽपि माम् ॥ २५ ॥**

अन्यदेवताराधका अमूर्तोपासनफलं नाप्नुवंति किंतु तत्तत्कर्मफलं तु प्राप्नुवंत्येवेत्याह । देवव्रता देवस्य तत्तद्देवसंबन्धीनि व्रतानि येषां ते देवव्रताः देवान् तत्फलत्वेन तान् देवानेव यांति प्राप्नुवन्ति ! एवं पितृव्रताः पितृदेवतापूजकाः पितॄन् यांति । एवं भूतेज्याः विनायकसुब्रह्मण्यादिभूतगणाराधकाः भूतानि तान्येव यांति । मद्याजिनस्तु मूर्तामूर्तस्वरूपिणं मां परमात्मानं ये च आराधयन्ति ते तु मां अमूर्तं परमात्मानमेव यांति । देवान् ' देवयजो यांति मद्भक्ता यांति मामपि ' इति पूर्वमेवोक्तम् ॥ २५ ॥

**पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।**
**तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ २६ ॥**

इतरदेवपूजापेक्षया परमात्मनो ममार्चनमतिसुलभमित्यप्याह । नाहमधिकं लाभमपेक्षे भक्तानां सकाशात् । तैः भक्त्या यदर्प्यते तेनैवाहं तुष्टो भवेयम् । यत्किंचित्पत्रं, पुष्पं, फलं, अंततः तोयं जलं वा यो मे मह्यं भक्त्या अनुरागेण प्रयच्छति ददाति प्रयतात्मनः शुद्धचित्तस्य तस्य भक्त्युपहृतं भक्त्या समर्पितं तदेव संतोषेण गृह्णामि स्वीकरोमि । भक्तिरेव मयापेक्ष्यते नान्यद्वस्तुजातमिति भावः ॥ २६ ॥

**यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।**
**यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥ २७ ॥**

अत एव कृष्णोऽत्र न केवलमर्जुनाय अपि तु सर्वेभ्यः साधकेभ्यः सर्वार्पणभावमुपदिशति । हे कौंतेय ! यत्कर्म करोषि यतश्च अन्नादिकमश्नासि यच्च अविरादिकं जुहोषि, यच्च ददासि गृहमागतेभ्यो दानादिकं करोषि, यच्च तपस्यसि यत्तपः करोषि तत्सर्वं मदर्पणं मह्यं निराकारपरमात्मने स्वीयांतरङ्गस्थायैव समर्पणं कुरुष्व । परमात्मा भक्तैः स्वहृदय एव अन्वेषणीयः । " देह

एव देवालय " इति परिगण्यतेऽनुभविभिः । तत्राव्यक्ततया निवसन् देवः सर्वार्पणभावादेवानुभवितव्यः साधकैः । शरणगीता भक्तस्य सवर्पणभावमेवं निर्दिशति । "मदीयकायं कुरु दण्डमेव तथैव मूर्धानमलावुरूपम् । नाडीर्मदीयाश्च विधेहि तन्त्रीर्मदंगुलीश्चैव कुरुष्व काष्ठम् ॥ आघट्य वक्षो भवदीयजैत्रनादं कुरुष्वात्मनि सङ्गमार्य । " इति । एवं देहादिसकलकरणानि परमात्मने भक्त्या समर्प्यैव तत्प्रसादभाजो भवन्ति मानवाः । अर्पणरूपं त्यागं विना योगानन्दो न केनाप्यधिगम्यते । अतः सर्वे व्यवाहारिका जना मूर्तामूर्त-स्वरूपिणे स्वराष्ट्राय स्वीयं सुखं समर्प्य अत्रत्यैः सर्वैरपि सहोदरभावं परिकल्प्य संतोषेण गौरवेण च निवसंतः प्रयाणकाले शांतिमनुभवेयुरिति भगवान् निरिक्षते ॥ २७ ॥

**शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।**
**संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥ २८ ॥**

एवं सर्वस्य भगवत्समर्पणस्य फलमाह । तथा समर्पणे कृते शुभाशुभ-फलैः कर्मजन्यैः सर्वविधैरपि शुभफलैः अशुभफलैर्वा कर्मबन्धनैः कर्मरूपबन्ध-साधनैः मोक्ष्यसे मुक्तो भविष्यसि । अत एव संन्यासयोगयुक्तात्मा मह्यं अमुर्तरूपिणे बहिरंतश्च विराजमानाय परमेश्वराय संन्यासः समर्पणं स एव योगस्तेन युक्त आत्मा चित्तं यस्य सः तादृशस्त्वं विमुक्तः संसारादेव मुक्तो मां परमात्मानं उपैष्यसि ॥ २८ ॥

ननु तर्हि त्वं पक्षपातीति वक्तव्यम् ; यतस्त्वद्भक्तानामेव त्वं अनुग्रहं करोषि, अभक्तानां निग्रहं च करोषि । एवं च तवापि रागद्वेषौ, तन्मूलतया शत्रुमित्रादिरपि स्यादेवेत्यत्राह—

**समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ।**
**ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥ २९ ॥**

अहं भगवान् सर्वेष्वपि भूतेषु प्राणिषु सम एव समदृष्ट्यैव निव-सामि । न मे कुत्रापि पक्षपातः । अत एव मे द्वेष्यः शत्रुर्वा प्रियो वा

मित्रं वा नास्ति लोके। सर्वे मदीया एव। तथापि ये मां द्विषन्ति ते तु द्वेषस्य फलमनुभवन्ति। ये मां प्रीणयन्ति तेऽपि तथैव मत्प्रीणनस्य फलमनुभवन्त्येव। ये मां भक्त्या भजन्ति सेवन्ते ते मय्येव वर्तन्ते निवसन्ति नित्यम्; तेषु च अहमपि वर्ते। तथा च न मे भक्तस्य च भेदो वर्तते। मद्भक्तो हि मम प्रियः। एवं च भक्तेषु स्थिताया मम आत्मीयतायाः तेषां भक्तिरेव मूलं, न मै तेषु पक्षपातः क्रियत इति भगवान् स्वाशयं स्पष्टीकरोति। शरणगीता परमात्मनस्तु भक्ते विद्यमानामात्मीयतां सम्यक् प्रदर्शयति। "यतो मदीयं न हि किञ्चिदस्ति त्वमेव सर्वं गुरुसङ्गमार्थ। भक्तस्य देवस्य च नास्ति भेद इत्यर्थकं वेदमवेत्य नित्यम्॥ संस्पृश्य देवं हृदये वसंतं त्वभिन्नतां प्राप्त इहैव लोके।" इति। एवं चिदंशभूतायाः भक्तेः प्रभावेण मानवः स्वदेहे शिवं भावयित्वा समर्च्य च शिव एव भूत्वा तदीयमखण्डमानंदमनुभवितुं प्रभवति॥ २९॥

**अपि चेत्सुदुराचारो भजते मामनन्यभाक्।**
**साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः॥ ३०॥**

सुदुराचारोऽपि चेत् अतीव कुत्सिताचारयुक्तोऽपि यः अनन्यभाक् अनन्यभक्तिस्सन् मां भजते सेवते सः साधुरेव सद्वर्तनशील एवेति मन्तव्यो ज्ञातव्यः। हि यस्मात् सः सम्यग्व्यवसितः समीचीनाध्यवसाययुक्तस्तस्मात् साधुरेव भवेदिति विज्ञायतेऽनुभविभिः। एवं परमात्मा सर्वेषामप्यतिसुलभसाध्यस्सन् तेषां त्यागबुद्धिमेव निरीक्षते। महापातकी सन्नपि मानवः स्वीयपापकर्मणे पश्चात्तापमनुभवन् आत्मशुद्धिमधिगच्छति। ततश्च परमात्मप्रसादेन सः सद्वर्तनवान् संपद्यते। इदं सर्वमपि हृत्पूर्वकस्य पश्चात्तापस्य सत्परिणाम एवेति भाव्यते॥ ३०॥

**क्षिप्रं भवति धर्मात्मा शश्वच्छन्तिं निगच्छति।**
**कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति॥ ३१॥**

सः दुराचारयुक्तोऽपि क्षिप्रं शीघ्रमेव धर्मात्मा धर्मनिष्ठो भवत्येव भक्तेः

प्रभावात् । तेन च स शश्वत् नित्यशान्तिं च निगच्छति प्राप्नोति । हे कौन्तेय ! मे भक्तः मयि भक्तियुक्तः न प्रणश्यति कदापि विनाशं न प्राप्नोतीति प्रतिजानीहि निश्चितां प्रतिज्ञां कुरु । एतस्मिन् विषये सदाऽध्यवसायं कुर्वित्यर्थः । एवमात्मविश्वासेनैव मानव सुखं विन्दते ॥ ३१ ॥

**मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।**
**स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यांति परां गतिम् ॥ ३२ ॥**
**किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ।**
**अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ॥ ३३ ॥**

हे पार्थ ! हि यस्मात् मां परमात्मानं व्यपाश्रित्य समाश्रित्य येऽपि केऽपि पापयोनयः पापजन्मानः स्त्रियो वैश्यास्तथा शूद्रा वा स्युः तेऽपि परां गतिं परममोक्षं यांति प्राप्नुवन्ति । एवं सति पुण्याः पुण्ययोनयो ब्राह्मणाः तथा भक्ता राजर्षयो जनकादितुल्या अपि परमात्मानमेव यांति ; तत्रैव समरसतया विलीना भवन्तीति किं पुनर्वक्तव्यम् । अतस्त्वमपि अनित्यं क्षणभङ्गुरं असुखं सुखवर्जितमिमं मनुष्यलोकं प्राप्य एतादृशमनुष्यलोके उत्तमं मनुष्यत्वं प्राप्य माममूर्तपरमात्मानं स्वहृदय एव निवसंतं तथैव संभाव्य विश्वस्य च भक्तिपूर्वकं भजस्व समाश्रय ॥ ३२–३३ ॥

**मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।**
**मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ ३४ ॥**

परमात्माराधनप्रकारमेवाह । मन्मना भव मयि मनो यस्य सः तादृशो भव । तथैव मद्भक्तश्च भव । अथ मद्याजी मत्पूजकश्च भव । तथैव मामेव नमस्कुरु । एवमात्मानं युक्त्वा योजयित्वा मत्परायणो मामेव परमं अयनं प्राप्यं मन्वानस्त्वं मामेव एष्यसि प्राप्स्यसि । एवं साधकान् सर्वानपि परमात्मासक्तचित्तान् कर्तुं भगवानव्याजप्रेम्णोपदिशति ॥ ३२ ॥

## दशमोऽध्यायः

"इदं तु ते गुह्यतमं प्रवक्ष्यामि" इत्युपक्रम्य भगवान् स्वकीयं तत्त्वमुपदिश्य स्वभजनमेव मुक्तिसाधनमिति निर्दिशति। तत्रैव भगवत्स्वरूपविषयेऽवश्यज्ञेयान् विषयानस्मिन्नध्याये विस्तरेणोपदेष्टुं श्रीभगवानुवाच—

**भूत एव महाबाहो शृणु मे परमं वचः।**
**यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया॥ १॥**

हे महाबाहो अर्जुन। मे मम परमं उत्तमं वचः भूय एव पुनरपि शृणु। यद्वचनं प्रीयमाणाय मद्विषये प्रीतिं कुर्वते ते तुभ्यं हितकाम्यया हितेच्छया वक्ष्यामि न त्वात्मप्रशंसया॥ १॥

**न मे विदुः सुरगणाः प्रभवं न महर्षयः।**
**अहमादिर्हि देवानां महर्षीणां च सर्वशः॥ २॥**

मे मम प्रभवं प्रभावं सुरगणाः ब्रह्मादिदेवगणा अपि न विदुर्न ज्ञातवन्तः। महर्षयो भृग्वादयोऽपि न विदुः। कुतो न विदुरित्यत्राह—अहमित्यादि। हि यस्मात् देवानां ब्रह्मादीनां महर्षीणां भृग्वादीनां च अहमेव आदिर्मूलकारणं सर्वशः सर्वप्रकारेणापि। अतः कथं ते मां जानीयुः॥

**यो मामजमनादिं च वेत्ति लोकमहेश्वरम्।**
**असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते॥ ३॥**

मर्त्येषु मनुष्येषु यो मामजं उत्पत्तिरहितं च लोकमहेश्वरं लोकानां महांतं निरतिशयमीश्वरं च वेत्ति; असंमूढो मोहरहितो विवेकी सः सर्वपापैः सर्वविधपापैरपि प्रमुच्यते प्रकर्षेण मुक्तो भवति। एवं परमात्मविज्ञानादेव सर्वमलक्षयमुपदिशति भगवान्॥ ३॥

**बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः।**
**सुखं दुःखं भवोऽभावो भयं चाभयमेव च॥ ४॥**
**अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः।**
**भवन्ति भावा भूतानां मत्त एव पृथग्विधाः॥ ५॥**

वुद्धिरंतःकरणसामर्थ्यम् । ज्ञानं तत्त्वज्ञानम् । असंमोहः समीचीनो विवेकः । क्षमा अविकृतचित्तता । सत्यं यथादृष्टार्थकथनम् । दमो वाह्येन्द्रियविजयः । शमः अंतःकरणविजयः । सुखमानन्दः । दुःखं संतापः । भवो वस्तूनां उद्भवः । अभावस्तेषां नाशः । भयं त्रासः । अभयं निर्भयता । अहिंसा प्राणिनामपीडनम् । समता समचित्तता । तुष्टिः संतोषः । तपः शरीरक्लेशादिः । दानं त्यागः । यशः कीर्तिः । अयशः अपकीर्तिः । एतादृशाः पृथग्विधा नानाविधाः भूतानां प्राणिनां भावा-मनोभावाः मत्त एव मत्कारणादेव भवन्ति उत्पद्यन्ते ॥ ४–५ ॥

**महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा ।**
**मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ॥ ६ ॥**

सप्त महर्षयो भृग्वादयः तथा पूर्वे अतीताः चत्वारो मनवः मद्भावा मद्गतभावविशिष्टा एव मानसा जाताः मनसैव मयोत्पादिताः । येषां मनूनां लोकेऽस्मिन् इमाः प्रजास्तिष्ठन्ति तादृशो मनवः मत्त एव जाताः ॥ ६ ॥

**एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः ।**
**सोऽविकंपेन योगेन युज्यते नात्र संशयः ॥ ७ ॥**

एतां उक्तां मम विभूतिं ऐश्वरं वैभवं, योगं तद्घटनासामर्थ्यं च यस्तत्त्वतो यथावत्तया वेत्ति जानाति सः अविकंप्येन सुदृढेन सुव्यवस्थितेन च योगेन शिवयोगेन युज्यते तादृशं योगं लभत इत्यर्थः । अस्मिन्विषये न संशयः ॥ ७ ॥

**अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।**
**इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥ ८ ॥**

स्वभजनप्रकारमत्र निर्दिशति । " सर्वस्यापि जगतः प्रभवः उत्पत्ति-कारणं अहमेव । अत एव मत्त एव सर्वमपि सृष्टिस्थितिप्रळयादिकं प्रवर्तते । " इति भावसमन्विताः सद्भावनायुक्ता बुधा ज्ञानिनः मत्वा ज्ञात्वा

मां भजंते सेवंते । ज्ञानिनां परमात्मभजनप्रकारमेवं निर्दिशति शरणगीता "आपूर्य नामामृतमेव सूक्तौ नेत्रे समापूर्य तदीयमूर्तिम् । चित्ते समापूर्य तदीयसंस्मृतिं श्रोत्रे समापूर्य तदीयकीर्तिम् ॥ तथा द्विरेफोऽस्मि भवत्पदाब्ज-निष्यन्दमग्नो गुरुसङ्गमार्य ।" इति । एवं सर्वेन्द्रियेष्वपि परमात्मसंपर्कमेव परिकल्प्य तदारामास्तन्निष्ठा एव निवसंति ज्ञानिनः ॥ ८ ॥

**मच्चित्ता मद्गतप्राणा बोधयंतः परस्परम् ।**
**कथयंतश्च मां नित्यं तुष्यंति च रमंति च ॥ ९ ॥**

मच्चित्ताः मय्येव चित्तं येषां ते मद्ध्यानासक्ताः । मद्गतप्राणाः मां गताः प्राणा येषां ते । तादृशः परस्परं बोधयंतः मदीयं वैभवं ज्ञापयंतः तदनुगुणं मां कथयंतश्च मद्विषयिकां कथामेव कुर्वंतश्च तुष्यंति संतुष्टा निवसंति देहेऽस्मिन् ; तस्मिन्नेव परवात्मनि रमंति च । शरणगीता सद्भक्ता-नामानंदमेवं वर्णयति । "संतुष्य वार्ताश्रवणेन शंभोस्तथैव कृत्वा शिव-कीर्तनं च । तथा विचिन्त्यैव विना श्रमेण तथैव कुर्वंश्च तदीयसेवाम् ॥ विस्तीर्य पूजां च यथोक्तरीत्या स्वतन्त्रमूर्वे गुरुसिद्धलिङ्ग । शिवं शरण्यं ह्यनुचिंत्य नित्यं तदीयवस्तूनि तदीयवर्गे ॥ समर्प्य भक्त्या भवदेकनिष्ठः शिवः स्वयंभूत इहैव भक्तः ।" इति । एवं शिवस्य वार्ताश्रवणेन शिव-कीर्तनेन शिवचिंतनेन शिवार्चनेन शिवसंबन्धीनि वस्तूनि शिवभक्तेभ्यः समर्प्य शिवैकनिष्ठया व्यवहरन् मानवः शिव एव भवेन्नान्यथेति दृढं विश्वासमभिव्यञ्जंति शरणाः ॥ ९ ॥

**तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।**
**ददामि बुद्धियोगं तं येन मामुपयांति ते ॥ १० ॥**

सततयुक्तानां सततं मयि युक्तानां मां प्रीतिपूर्वकं भजतां सेवतां च तेषां तं तादृशं बुद्धियोगं ज्ञानयोगं ददामि । सर्वदा परमात्मचिंतन एव मग्ना ये लोकव्यवहारं श्रद्धया शिवाराधनभावनया कर्तव्यदृष्ट्या च निर्वहंतो वर्तते तेभ्यः सः स्वीयदर्शनलाभमनुगृह्णात्येव । येन ज्ञानयोगेन ते मां

निराकारपरमात्मानं उपयांति प्राप्नुवंति तादृशं ज्ञानयोगं ददामि अहमेवानुगृह्णामीति परमात्मा स्वयमेव प्रतिश्रृणोति। तस्यैतदाश्वासनं साधकानां सद्भावनामुत्तेजयति। अनयैव दिव्यस्फूर्त्या प्रोत्साहितास्सर्वेऽपि साधकाः स्वीयहृदये दृढतया विश्वसन्त्विति भगवत आशयः॥ १०॥

**तेषामेवानुकंपार्थमहमज्ञानजं तमः।**
**नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता॥ ११॥**

तादृशज्ञानयोगस्य फलं निर्दिशति, तेषामेव मां भजतामेव अनुकंपार्थं दयाहेतोः अहं आत्मभावस्थ आत्मनोऽन्तःकरणस्य भाव आशयस्तत्र विद्यमानस्सन् भास्वता प्रकाशवता ज्ञानदीपेन ज्ञानाख्यदीपेन अज्ञानजं अज्ञानप्रभवं तमः अन्धकारं नाशयामि ध्वंसयामि। तथा च ध्वस्ततमसो ज्ञानिनो निराकारं परमशिवं मां प्राप्नुवन्ति॥ ११॥

एवं भगवता स्वप्रभावेऽभिहिते दैवीप्रकृतियुक्तोऽर्जुनः अभिवृद्धभगवद्भक्तिः भूयोऽपि भगवन्महिमातिशयं विस्तरेण श्रोतुमिच्छन् अतिविनयेन भगवन्तं स्तुत्वा पृच्छति—

**परं ब्रह्म परं धाम पवित्रं परमं भवान्।**
**पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम्॥ १२॥**

**आहुस्त्वामृषयस्सर्वे देवर्षिर्नारदस्तथा।**
**असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे॥ १३॥**

हे कृष्ण! भवान् त्वमेव परब्रह्म परब्रह्मभूतः। एवं परं धाम परमं तेजश्च। परमं पवित्रं पावनश्च। सर्वे ऋषयो वसिष्ठाद्यास्तथा देवर्षिः नारदः, असितः, देवलः एते सर्वेऽपि त्वामेव पुरुषं परमपुरुषम्। पराप्रकृतेः पुरुषरूपस्य वासुदेवस्य पुरुषाख्यस्य परशिवस्य च सामरस्यात् वसुदेवात्मजस्य कृष्णस्यापि पुरुषत्वेनात्र निर्देशो युज्यते। एवमेत्र शाश्वतं नित्यं दिव्यमप्राकृतं परंज्योतिस्स्वरूपमादिदेवं सर्वदेवानामपि आदौ विद्यमानं देवं अजं

उत्पत्तिरहितं विभुं सर्वव्यापकं च आहुः । स्वयं चैव मे मह्यमेवमेव त्वत्स्वरूपं ब्रवीषि । अतस्त्वं साक्षात् परमात्मैव ॥ १३ ॥

सर्वमेतदृतं मन्ये यन्मां वदसि केशव ।
न हि ते भगवन् व्यक्तिं विदुर्देवा न दानवाः ॥ १४ ॥

हे केशव ! एतत्सर्वं ऋषिभिस्त्वया चोक्तं इदं सर्वं ऋतं सत्यमेव मन्ये यत् मां प्रति त्वमपि वदसि । हे भगवन् ! ते तव व्यक्तिं अभिव्यक्तिं देवा इन्द्रादयोऽपि न विदुः दानवा असुरा वा न विदुः । सर्वव्यापकस्यामूर्तस्य परमात्मनो रूपं देवदानवानामप्यज्ञेयमित्यर्थः ॥ १४ ॥

स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम ।
भूतभावन भूतेश देवदेव जगत्पते ॥ १५ ॥

हे पुरुषोत्तम कृष्ण ! हे भूतभावन भूतानि सर्वाणि भावयति उत्पादयतीति भूतभावनः जगत्सृष्ट्याद्यसदृशमहाकार्यनिर्वाहक ! हे भूतेश सकलप्राणिनां नियामक ! हे देवदेव देवानामपि देव ! हे जगत्पते जगतामधिपते ! आत्मना आत्मानं त्वमेव स्वयं वेत्थ जानीषे । अन्यः को वा मूर्तामूर्तस्वरूपिणं उदासीनवदासीनं लोकेऽवस्थितमप्यलोकधर्माणं त्वां असाधारणशक्तिविशिष्टं जानीयात् ? ॥ १५ ॥

वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः ।
याभिर्विभूतिभिर्लोकान् इमांस्त्वं व्याप्य तिष्ठसि ॥ १६ ॥

भवतो महिमानमशेषेण संपूर्णतया वक्तुं अर्हसि स्वामिन् ! हि यस्मात् आत्मविभूतयः आत्मनस्तव विभूतयो दिव्या अप्राकृता आसाधारणा एव । अतस्ता वक्तुमर्हसि । याभिर्विभूतिभिस्तव महिमाभिरिमान् लोकान् सर्वान् त्वं व्याप्य तिष्ठसि । लोकव्यापिन्यः सर्वविभूतयस्तव विविधाः शक्तय एव । एतादृशाद्भुतशक्तिविशिष्टस्त्वं अमूर्तस्सन्नपि भक्तानुग्रह-लीलया दिव्यमूर्तो नित्यसुन्दरस्सन् सर्वेषामाकर्षणीयोऽसि । अतस्तव

महिमातिशयं ज्ञातुं न शक्यतेऽन्येषाम् । त्वमेव त्वदीयं वैभवं समुपदिश्य त्वद्भक्तं मां समुद्धर संशयकूपात् । इत्यर्जुनः श्रीकृष्णं भक्तिपूर्वकं प्रणम्य विज्ञापयामास ॥ १६ ॥

**कथं विद्यामहं योगिन् त्वां सदा परिचिन्तयन् ।**
**केषु केषु च भावेषु चिन्त्योऽसि भगवन्मया ॥ १७ ॥**

हे योगिन् सर्वयोगानामपि स्वामिन् ! त्वां सदा सर्वदा परिचिन्तयन् ध्यायन् कथं त्वां विद्यां जानीयाम् । हे भगवन् ! मया त्वं केषु केषु भावेषु । वस्तुषु च चिन्त्यः ध्येयोऽसि तव सर्वत्र अव्यक्ततया अवस्थानात् कुत्र तव अभिव्यक्तिमहं जानीयाम् ? सर्वत्र गोप्यतया निवसन्तं त्वां सामान्यमानवाः कथं अभिजानीयुः ? क्षीरे घृतमिव त्वं पञ्चभूतविस्तार-रूपेऽस्मिन् प्रपञ्चे विद्यमानोऽपि सर्वैर्बाह्यदृष्ट्या न ज्ञायसे । अतः कथं त्वामहं जानीयाम् ? कस्मिन् भावे केन रूपेण त्वामर्चयेयम् ? इत्याद्याः प्रश्नाः पृच्छ्यन्तेऽर्जुनेन ॥ १७ ॥

**विस्तरेणात्मनो योगं विभूतिं च जनार्दन ।**
**भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥ १८ ॥**

हे जनार्दन ! कृष्ण ! आत्मनस्तव योगं ऐश्वर्यादियोगं विभूतिं वैभवं च विस्तरेण भूयः पुनरपि कथय । हि यस्मात् अमृतं तव वचनामृतं शृण्वतो मे तृप्तिः परितोषः अलंभावो नास्त्येव। श्रुत्वाऽपि पुनःपुनः श्रोतु-मिच्छामि । अतस्तव तेजोवैशिष्ट्यं भूयः कथय ॥ १८ ॥

**हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः ।**
**प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥ १९ ॥**

हन्तेति हर्षे अनुकंपायां वाक्यारंभे वा । हे कुरुश्रेष्ठ अर्जुन ! दिव्या आत्मविभूतयः तेजोविशेषाः प्राधन्यतो मुख्यशः ते तुभ्यं कथयि-ष्यामि । यदीयं शक्तिवैभवमनन्तमपारं च विद्यते । हि यस्मात् मे मम

विभूतेर्विस्तरस्य वैपुल्यस्य अन्तरवसान एव नास्ति । शक्तिविशेषः जगदिदं सर्वत एव व्याप्य सर्वेषां जीवनाधारस्संभूतः येनाकृष्टास्सर्वे जगत्यस्मिन् परस्परविश्वासेन व्यवहरन्ति । सर्वेष्वपि प्रीतिपात्रं वस्तु परमात्मशक्तिवैभवमेव । तदीया शक्तिर्जगदाकारेण परिणता सती तत्र स्वयमन्तर्हिता भूत्वा सर्वानप्याकर्षयति । एतच्छक्तियोगविज्ञानेनैव तदन्तर्यामिणः शक्तिमतः परमात्मनो ज्ञानं सुशकं भवेत् । अतः शक्तियोगं ज्ञातुं उत्तमाधिकारी अर्जुनः प्रभवत्येव ॥ १९ ॥

**अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।**
**अहमादिश्च मध्यं च भूतानामन्त एव च ॥ २० ॥**

तत्र तावत्प्रथममिदं सारभूतं मदीयं शक्तियोगं शृणु इत्यारभते भगवान् तदीयं वैभवं कथयितुम् । हे गुडाकेश निद्राविजेतः ! सर्वदा जाग्रत्स्वरूप अर्जुन ! सर्वभूताशयस्थितः सर्वेषां भूतानां आशये हृदये विद्यमानः आत्मा अन्तर्याम्यात्मा अहमेव । 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' 'सर्वस्य चाहं हृदि सन्निविष्टः' इति भगवानेव वक्ष्यति । भूतानां सर्वेषां अहमेव आदिर्मूलकारणं मध्यं मध्यकाले स्थितिकारणं, तथैव अन्तः प्रलयकारणं चास्मि । एवं सर्वेषां सृष्टिस्थितिप्रळयकारणं अहमेवेत्यर्थः ॥

**आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् ।**
**मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥ २१ ॥**

आदित्यानां द्वादशादित्यानां मध्ये विष्णुर्नाम आदित्यः अहमेव । ज्योतिषां प्रकाशयितॄणां मध्ये अंशुमान् सहस्रकिरणो रविः सूर्यः अहमेव । मरुतां मरुद्देवतासु मरीचिरस्मि । नक्षत्राणां मध्ये अहं शशी चन्द्रोऽस्मि । तथा च लोके यत्र यत्र विद्यमानः शक्त्युत्कर्षः स सर्वोऽपि परमात्मैवेत्युदारमाशयमाविष्करोति भगवान् ॥ २१ ॥

**वेदानां सामवेदोऽस्मि भूतानामस्मि वासवः ।**
**इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥ २२ ॥**

वेदानां चतुर्णां मध्ये सामवेदः अहमस्मि । देवानां मध्ये वासवः इन्द्रोऽस्मि । इन्द्रियाणां प्रेरकं यन्मनस्तदहमेव । भूतानां चैतन्यवतां प्राणिनां चेतना चैतन्यं अहमेव ॥

**रुद्राणां शङ्करश्चास्मि वित्तेशो यक्षरक्षसाम् ।**
**वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ॥ २३ ॥**

रुद्राणामेकादशरुद्राणां मध्ये शङ्करः कालरुद्रः अहमेव । यक्षरक्षसां मध्ये वित्तेशः कुवेरोऽहमेव । वसूनामष्टानां मध्ये पावकोऽग्निरहमेव । शिखरिणां शिखरवतां मध्ये मेरुः मेरुपर्वतः अहमेव ॥ २६ ॥

**पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम् ।**
**सेनानीनामहं स्कन्दः सरसामस्मि सागरः ॥ २४ ॥**

हे पार्थ ! पुरोधसां पुरोहितानां मुख्यं श्रेष्ठं बृहस्पतिं देवपुरोहितं मां विद्धि जानीहि । सेनानीनां सेनापतीनां मध्ये स्कन्दो देवसेनापतिः सुब्रह्मण्योऽहमेव । सरसां मध्ये सागरस्समुद्रोऽस्मि ॥ २४ ॥

**महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ।**
**यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥ २५ ॥**

महर्षीणां ज्ञानिनां मध्ये भृगुरहमेव । गिरां पदानां मध्ये एकमक्षरं प्रणवरूपः अहमेव । यज्ञानां मध्ये जपयज्ञो शिवमन्त्रजपरूपयज्ञोऽहमेव । स्थावराणां स्थिरवस्तूनां तत्राप्यचलानां पर्वतानां मध्ये हिमालयो नाम नगाधिराजः अहमेव ॥ २५ ॥

**अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः ।**
**गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥ २६ ॥**

सर्ववृक्षाणां मध्ये अश्वत्थः तदाख्यः प्रसिद्धो वृक्षः अहमेव । देवर्षीणां मध्ये नारदोऽस्मि । गन्धर्वाणां मध्ये चित्ररथो नाम गन्धर्वः अहमेव । सिद्धानां मध्ये कपिलो मुनिरहमेव ॥ २६ ॥

उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् ।
ऐरावतं गजेन्द्राणां नराणां च नराधिपम् ॥ २७ ॥

अश्वानां मध्ये अमृतोद्भवं अमृतसागरमथनसमये जातं उच्चैःश्रवसं तन्नामानं मां विद्धि । गजेन्द्राणां गजश्रेष्ठानां मध्ये ऐरावतं देवगजं, नराणां मध्ये नराधिपं राजानं च मां विद्धि । एवं लोके सर्वश्रेष्ठं यद्यत् वस्तु वर्तते तत्सर्वं अहमेव ॥ २७ ॥

आयुधानामहं वज्रं धेनूनामस्मि कामधुक् ।
प्रजनश्चास्मि कन्दर्पः सर्पाणामस्मि वासुकिः ॥ २८ ॥

आयुधानां मध्ये वज्रं वज्रायुधमहमेव । धेनूनां गवां मध्ये कामधेनुरहमेव । प्रजनो जगत्प्रेरकस्तदाकर्षकः कन्दर्पः कामोऽहमेव । सर्पाणां मध्ये वासुकिरहमेव ॥ २८ ॥

अनन्तश्चास्मि नागानां वरुणो यादसामहम् ।
पितॄणामर्यमा चास्मि यमः संयमतामहम् ॥ २९ ॥

नागानां अनन्तस्तन्नामा नागोऽस्मि । यादसां जलदेवानां, मध्ये वरुणः अहमेव, पितॄणां मध्ये अर्यमा नाम पितृराजोऽहमेव । संयमतां संयमनं कुर्वतां योगिनां यमः संयमः अहमेवास्मि ॥ २९ ॥

प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम् ।
मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥ ३० ॥

दैत्यानामसुराणां मध्ये प्रह्लादः अहमेव । कलयतां कलनं गणनं कुर्वतां मध्ये कालः सर्वेषां वीज्ञको गणकस्सुप्रसिद्धः कालोऽहमेवास्मि । मृगाणां मध्ये सिंहोऽहमेव । पक्षिणां पतत्रिणां मध्ये वैनतेयो गरुडोऽस्मि ॥

पवनः पवतामस्मि रामः शस्त्रभृतामहम् ।
झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ॥ ३१ ॥

पवतां पावयितॄणां मध्ये पावनस्सर्वेषां मलदोषनिवारको वायुरहमेव। शस्त्रभृतां शस्त्राणि धारयितॄणां मध्ये रामो दशरथसूनुः रामोऽहमेव। झषाणां मत्स्यानां मध्ये मकरो मत्स्यजातिविशेषोऽस्मि। स्रोतसां नदीनां मध्ये जाह्नवी सर्वपावना दिव्यगङ्गा अहमेव ॥ ३१ ॥

सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन।
अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥ ६२ ॥

हे अर्जुन! सर्गाणां सृष्टीनां आदिरन्तो मध्यं च अहमेव। सृष्टिस्थितिप्रळयकारणमहमेवेत्यर्थः। विद्यानां अध्यात्मविद्या अहमेव। प्रवदतां परस्परं विवादं कुर्वतां वादोऽहमेव ॥ ३२ ॥

अक्षराणामकारोऽस्मि द्वन्द्वः सामासिकस्य च।
अहमेवाक्षयः कालो धाताहं विश्वतोमुखः ॥ ३३ ॥

अक्षराणां वर्णानां अकारः अवर्णोऽस्मि। सामासिकस्य समाससमुदायस्य मध्ये द्वन्द्वसमासोऽस्मि। अकारः सर्वेषु वर्णेष्वनुस्यूततया संबद्धोऽस्ति। अतस्सः परमात्मस्वरूप इति भाव्यते। द्वन्द्वसमासे प्रयुक्तयोरुभयोरपि शब्दयोः समप्राधान्यात् सः परमात्मस्वरूप इत्यनुभविभिर्भाव्यते। इतरेषु समासेषु पूर्वस्य परस्य अन्यस्य वा प्राधान्यात् उभयोः प्राधान्यं नास्ति। सर्वत्र प्रधानतया अवस्थितिरेव ब्रह्मभाव इति ज्ञायते शिवयोगिभिः। द्वन्द्वे सर्वप्राधान्यात् तथा व्यवहारो युज्यते। तथैव अक्षयः क्षयरहितः कालोऽपि ब्रह्मस्वरूप एव। एवमेव विश्वतोमुखो धाता कर्मफलानां विधाता अहमेव ॥

मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम्।
कीर्तिः श्रीर्वाक्च नारीणां स्मृतिर्मेधा धृतिः क्षमा ॥

सर्वहरः सर्वसंहर्ता मृत्युरहमेव। भविष्यतां भाविकल्याणयोग्यानां वस्तूनां उद्भवः अहमस्मि। नारीणां मध्ये नारीषु सहजतया दृश्यमानो यः कश्चन विशेषः परमात्मस्वरूप एव। तत्रापि कीर्तिः, श्रीः, वाक्, स्मृतिः,

मेधा, धृतिः क्षमा एतादृशा अभिनन्दनीया गुणाः स्त्रीषु वैयक्तिकतया दृश्यन्ते । अयं सर्वोऽपि विशेषः भगवत्तेजोंऽश एवेति भाव्यः । यस्यां व्यक्तौ यः कश्चन विशेषो दृश्यते सोऽवश्यं देवांश इसि संभाव्य पुरस्कार्य इति सूच्यतेऽत्र भगवता । अत एव स्त्रीणां मधुरा प्रसन्ना गंभीरा वाणी देवात्मशक्तेरसाधारणो विलास एवेति विवेकिभिर्भाव्यते ॥ ३४ ॥

**बृहत्साम तथा साम्नां गायत्री छन्दसामहम् ।**
**मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः ॥ ३५ ॥**

साम्नां मध्मे बृहत्सामेति प्रधानं साम अहमेव । छन्दसां मध्ये गायत्रीछन्दः अहमेव । मासानां मध्ये मार्गशीर्षोऽस्मि । तस्मिन्नेव मासे रणरङ्गे अर्जुनाय अयं कर्मयोग उपदिष्टः । तत्राप्येकादश्यां गीतोपदेशात् तस्याः प्राधान्यं परिकल्प्यते विवेकिभिः । अमृतस्थित्याधायकः सर्वोऽपि कालः परमात्मनः प्रियत्वात् तत्संबद्ध एव । मार्गशिरमासे एकादश्यां तादृगमृतोपदेशाविर्भावात् तस्याः भगवदंशत्वं भाव्यते । तथैव बृहत्साम परमात्मनोऽतीव प्रियम् । एवमेव गायत्रीछन्दोऽपि दैवीसंपत्परिपूर्णमिति परिकीर्त्यते । तथैव ऋतूनां कुसुमाकरो वसन्तः अहमेव ॥ ३५ ॥

**द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् ।**
**जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम् ॥ ३६ ॥**

छलयतां धलप्रयोक्तृणां द्यूतं अक्षविद्या अहमेव । तेजस्विनो यत्तेजस्तदहमेव । जेतॄणां विजयशीलैरधिगतो विजयः अहमेव । व्यावहारिका जनाः व्यवहारेषु यादृशं लाभं प्राप्नुवन्ति तं सर्वमपि भगवत्स्वरूपमिति संभाव्य यः पुरस्करोति स एव भगवदनुग्रहं लभते । एतत्तत्त्वं यो न जानाति स एव अन्यलाभाय मात्सर्यासूयादिकमनुभवति । अतो विवेकिनः समाहितेन मनसा परेषां वृद्धिं वीक्ष्य सन्तुष्यन्ति । एवमेव सत्त्ववतां सत्त्वं च अहमेव । एवं परसन्तोषणं, परानुग्रहणं, परोपकरणमित्येतत्सर्वं शिवाराधनमेवेति उपमन्युमहर्षिणा भगवते कृष्णाय यदुपदिष्टं तत्समञ्जसमेव भाति ॥

**वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनञ्जयः ।**
**मुनीनामप्यहं व्यासः कवीनामुशनाः कविः ॥ ३७ ॥**

वृष्णीनां वृष्णिवंशजातानां मध्ये वासुदेवो वसुदेवपुत्रोऽयं अहमेवामूर्तः परमात्मा । तथैव पाण्डवानां पञ्चानां मध्ये धनञ्जयोऽर्जुनस्त्वं अहमेव । भगवत्स्वरूप एव भवानिति भगवानुपदिशत्यर्जुनाय । मुनीनामपि व्यासश्च महाज्ञानी निगमागमव्यवस्थापकः भगवत्स्वरूप इति भगवत एव निर्देशः सर्वेषां स्फूर्तिदायको भाति । तथैव कवीनां ज्ञानिनां मध्ये उशनाः शुक्रो दिव्यदर्शीति भाव्यते ॥ ३७ ॥

**दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् ।**
**मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥ ३८ ॥**

दमयतां दमनं कुर्वतां तत्साधनभूतो दण्डः अहमेवास्मि । जिगीषतां जेतुमिच्छतामनुसरणीया नीतिर्न्यायः अहमेव । गुह्यानां गोप्यानां योगिनामादर्शभूतं मौनमप्यहमेव । ज्ञानवतां ज्ञानं च अहमेव ॥ ३८ ॥

**यच्चापि सर्वभूतानां बीजं तदहमर्जुन ।**
**न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ॥ ३९ ॥**

हे अर्जुन ! सर्वभूतानामपि यच्चापि बीजं प्ररोहकारणं तदहमेव । मया विना मां विना यत् भूतं उत्पन्नं चराचरं स्यात् वर्तेत तत् तादृशं वस्तु मां विना जातं नास्त्येव । सर्वं मत्त एवोत्पन्नं मदविनाभूतमेव । लोके विद्यमानेषु सर्वेष्वपि वस्तुषु परमात्मनः सान्निध्यं सहजतया विलसति । एवमन्तस्थोऽपि सः स्वगुणैर्निगूढत्वात् लौकिकैर्न ज्ञायते, परन्तु अन्तर्दृष्टिभिर्योगिभिरेव अनभूयते । " दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः " इति श्रुत्या सूक्ष्मदृशामेव तदीयं दर्शनं सुशकं भवेदिति प्रतिश्रुतम् ॥

**नान्तोऽस्ति मम दिव्यानां विभूतीनां परंतप ।**
**एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥ ४० ॥**

हे परन्तप अर्जुन! मम दिव्यानां विभूतीनां अन्तः इयत्ता नास्त्येव। एतावत्परिमितैव मम विभूतिरिति न केनापि ज्ञातुं शक्यते। "अनन्तपारं बहु वेदितव्यं अल्पश्च कालो बहवश्च विघ्नाः" इत्यभियुक्तोक्त्या परमात्मस्वरूपं अनन्तमपारं च वर्तते। तच्च वेत्तुमस्माकं प्रभूतः कालोऽपि नास्ति। तथा प्रयत्ने कृतेऽपि निरुपधिका विघ्नाश्च संभवन्ति। तस्यामूर्तपरमशिवस्य दिव्यं वैभवं वाचा वक्तुं न शक्यत इति कृष्णस्याशयः। एष तु स्वविभूतेर्विस्तर एतावानेवेति भगवानपि न वदति; परन्तु सः उद्देशत एकदेशत एव तदीयं भगवद्वैभवं निर्दिशति न तु संपूर्णतया प्रवक्ति। "शिवस्य तत्त्वं शिव एव वेत्ति नन्दी च विष्णुर्नगजाकुमारः" इति श्रीपतिपण्डिताराध्यमहोदयाः श्रीकरभाष्यारंभे कथयन्ति। तथा अमूर्तशिवस्य तत्त्वं दिव्यमूर्तः शिवो यथा जानाति तथा विष्णुस्तदवतारभूतः कृष्णोऽप्यवश्यं जानात्येव। तथापि सः समग्रतया तादृशं वैभवपूर्णं तत्त्वं अर्जुनाय उपदिशति। समग्रं तत्त्वमवगन्तुं न पारयति खल्वर्जुनः। किं तनिद्रोऽर्जुन एव यदि शिवस्य शक्तिवैभवं संपूर्णतया ज्ञातुं न शक्नुयात् तदा अन्ये तामसा जनाः कथं तत्र प्रभवेयुः। अत एव भगवान् स्वशक्तिवैभवस्यात्यल्पांशमेवात्र दिक्प्रदर्शनार्थं सूचयति॥ ४ ॥

**यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा।**
**तत्तदेवावगच्छ त्वं मम तेजोंऽशसंभवम्॥ ४१ ॥**

लोके यद्यत् विभूतिमत् वैभववत् सत्त्वं वस्तु श्रीमत् कान्त्यादिमत् ऊर्जितमेव वा उत्साहाद्युपेतं वास्तिऽतत्तत्सत्त्वं मम तेजोंऽशसंभवं मम तेजसः एकदेशादेव उत्पन्नं विद्धि जानीहि। 'यस्यैकशक्तिशकले सकलस्समाप्तः' इत्यभियुक्तोक्तिरत एव सङ्गच्छते। सकलमपि दैवं वैभवं तदीयतेजोरूपायाः प्राणशक्तेरत्यल्पांश एव विलीयते। अखण्डं विश्वं परमात्मनश्चिच्छक्तेरेकांश एव परिसमाप्यते चेत् तदा मानवोऽभिमानेनाहङ्कारेण चात्र व्यवहरन् विशेषतो भगवदाग्रहभाजनं भवेदेव। सर्वत्र निर्लिप्ततया निवसन् परमात्मा

स्वीयशक्तिवैभवेन स्वांशैर्जीवैः स्वीयं जगद्व्यापारमनायासेन लीलयैव निर्वहति । एतादृश्यां स्थितौ मानवाः परमात्मानं विस्मृत्य कर्तृत्वाभिमानेन स्वयमेव व्यवहारेषु प्रवर्तन्त इत्येतद्विषादास्पदमेव । अतो विवेकिभिः सर्वव्यापिकायाः भगवत्तेजोरूपायाः पराशक्तेर्विज्ञानाय यथाशक्ति यथामति च प्रयतितव्यम् । परमात्मा तेजोरूपशक्तिविशिष्टः सहजतया यथा विराजते तथा तदंशभूता जीवाश्च सर्वे तेजोंऽशरूपिण्या बुद्धिशक्त्या विशिष्टा एव वर्तन्ते । तथैव पञ्चतत्त्वात्मकः प्रपञ्चोऽपि शक्तिविशिष्ट एव वर्तते । शक्तिरहितमेव वस्तु न कदाप्युपलभ्यते । तेजोविहीनं वस्तु प्रपञ्चे न विद्यते कुत्रापि । पृथिव्यां विद्यमाना सर्ववस्तुसंधारणरूपा शक्तिस्सर्वैरनुभूयते । तथैव अप्सु विद्यमानं आप्यायनरूपं तेजश्च सर्वेषां परिचितमेव । तेजसि सर्ववस्तुदहनरूपं यत्तेजो विद्यते तदपि परमात्मतेजोंऽश एव । एवमेव वायौ सर्वेषां मलदोषपरिहाररूपं यत्तेजो वर्तते तदपि भगवच्छक्तेरंश एव । आकाशे सर्वव्याप्तिनिर्लेपनादिकं यत्तेजो वर्तते तदपि भगवच्छक्त्यंशसंभवमेवेति ज्ञेयम् । एवं च परमात्मा, तदंशभूता जीवाः, तद्विनोदभूमिः प्रपञ्च इत्येतत्सर्वं तेजोरूपशक्तिविशिष्टमेवेति भगवानत्र स्पष्टयति । तथापि जीवेष्वियं शक्तिः सत्त्वरजस्तमोरूपैस्त्रिगुणैरावृता सती सङ्कुचिता वर्तते । अयं च सङ्कोचः भगवदुपासननैरन्तर्येण क्रमशः परिहरणीयो मानवैः । शक्तिसङ्कोच एव मल इत्यनुभविनो वदन्ति । अयमेव मलस्त्रिविधो भासते आणवमायेयकार्मिकभेदेन । आणवमलस्तु इच्छाशक्तेः सङ्कोचभूतः जीवेषु स्वार्थभावनामुत्पादयति । मायेयमलस्तु ज्ञानशक्तेः सङ्कोचभूतः जीवेषु व्यामोहदृष्टिं उत्पादयति । एवमेव कार्मिकमलोऽपि क्रियाशक्तेः सङ्कोचरूपः जीवेषु अहङ्कारभावनामुत्पादयति । एवं जीवाः सर्वेऽपि स्वार्थताव्यामोहाहङ्कारसमन्विताः स्वेच्छया मोहङ्गता ह्यभिमानेन सर्वत्र व्यवहरन्ति ; अत एव दुःखपरंपरां समश्नुवन्ति । एतत्सङ्कोचपरिहारेण शक्तिविकासोऽधिगन्तव्योऽभ्यासदार्ढ्यात् । एतत्प्राप्त्युपायोऽन्यत्र विचार्यते ॥ ४१ ॥

**अथवा बहुनैतेन किं ज्ञातेन तवार्जुन ।**
**विष्टभ्याहमिदं कृत्स्नं एकांशेन स्थितो जगत् ॥ ४२ ॥**

शक्तिवैभववर्णनमुपसंहरन्नाह भगवान् । हे अर्जुन ! बहूक्त्वा किं फलम् । अधिकमुच्यते चेत् त्वया न ज्ञायते । अथवा मदीयं अनन्तं तेजोवैभवं बहुधा ज्ञात्वापि तव किं फलं स्यात् । यावत् ज्ञायेत चेदपि तत् अल्पं सावशेषमेव स्यात् । सारतः कथ्यते चेत् अहमिदं कृत्स्नं जगदपि एकांशेनैव मच्छक्त्येकदेशेनैव विष्टभ्य व्याप्य स्थितः । "पादोऽस्य विश्वा भूतानि । त्रिपादस्या अमृतं दिवि" इति पुरुषसूक्ते परमात्मन एकांशेनैव विश्वव्याप्तिरुपवर्ण्यते । अतस्तद्वैभवस्य इयत्ता न केनापि ज्ञातुं शक्यते । एवं भगवान् तदीयं विभूतियोगं संक्षेपतो लोककल्याणायोपदिशति ॥ ४२ ॥

---

## एकादशोऽध्यायः

एवं भगवता स्ववैभवे कथिते तेन अभिवृद्धभक्तिस्तादृशं भगवन्तं साक्षात्कर्तुमिच्छत् अर्जुन उवाच—

**मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम् ।**
**यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥ १ ॥**

मदनुग्रहाय ममानुग्रहकरणार्थं कृपयैव परमगुह्यं अध्यात्मसंज्ञितं अध्यात्मशास्त्रसंज्ञितं यद्वचस्त्वयोक्तं एतावता कालेन तेन अयं मम मोहो मयि विद्यमानं अज्ञानं विगतो नष्टः । भगवदनुग्रहेण साक्षादुपदेशं लब्धवानर्जुनः पुण्यवानेवासीत् । उत्तमाधिकारी सः हृदयशुद्धिमान् उपदेशामृतेन सम्यक् सिक्तः स्वीयसंशयपरिहारेण स्वयं निष्कल्मषः संभूतः । प्राक्तनं अविवेकं बान्धवव्यामोहं स्वीयं कर्तृत्वाभिमानं सर्वमपि संपूर्णं परित्यज्य सर्वत्र व्याप्य

सर्वमपि जगतः कर्म फलाभिसन्धिं विनैव कर्तव्यनिष्ठया लोकहितेच्छया च निर्वहतः परमात्मनो दिव्यमादर्शं स्वयमनुसर्तुं कृतमतिरर्जुनो विनयेन तस्मिन् शरणागतो बभूव । परमात्मना लोककल्याणाय क्रियमाणे महायुद्धे निमित्त-मात्रं व्यवहरणमेव स्वीयं कर्तव्यमिति यथार्थं तत्त्वमद्य विज्ञातमर्जुनेन । प्रागविवेकदशायां तस्य हृदये संलग्नः संशयोऽधुना भगवदुपदेशेन स्वयं विनष्टः । एवमेव शरणा महात्मनां दिव्यवाणेरुत्तमं सत्परिणामं स्वानुभावेन कथयन्ति "क्षीरप्रवाहे गुडपङ्कपूर्णे सच्छर्करावालुकसंविशिष्टे । तथैव खण्डात्मकफेनयुक्ते सुभापिते सत्यपि दिव्यवाक्ये ॥ कूपं खनित्वान्यमपेयरूपं क्षारं जलं पीतवतो गतिः स्यात्" इति । एवं महात्मनां वाणी दिव्य-प्रभावान्वितैव वर्तते । तां श्रद्धया आकर्ण्य विच्छिन्नसर्वसंशया वयं निर्मल-मानसाः स्वीयं कर्तव्यं निर्वहन्तो भगवदनुग्रहभाजनं यदि भवेम तदा अस्मज्जन्म सार्थकं भवेदेव । अर्जुनस्थितिं दृष्ट्वा सर्वे वयं महत्या स्फूर्त्या सरळनिराडम्बरजीवनेन लोके व्यवहरन्तः जन्मसाफल्यमधिगच्छेम । पवित्र-मिदं शरीरं भगवत्प्रसादलब्धं व्यर्थकालयापनेन शुष्कविचारेण च यथा दुरुपयुक्तं न भवेत् तथा प्रत्युत्पन्नमतयो वयं भवेम । अर्जुनेनानुभूतः संशयः सर्वेषामस्माकं दैनन्दिनजीवनं पावयामास । तादृशः संशयस्य हृदये यथा अवकाशो न संभवेत् तथा जागृतैरस्माभिर्भवितव्यमित्यभिप्रायोऽत्र संसूच्यते ॥

**भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया ।**
**त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ॥ २ ॥**

विगतसर्वसंशयोऽर्जुनः स्वाभिप्रायमाविष्करोति । हे कमलपत्राक्ष पुण्डरीकाक्ष कृष्ण ! भूतानां सर्वेषां भवाप्ययौ उत्पत्तिप्रळयावपि विस्तरशो मया श्रुतौ । अव्ययं नाशरहितमेव निर्विकारतया सर्वव्यापकं तव माहात्म्यमपि वैभवपूर्णं च पावनं जीवनमपि त्वत्तः त्वत्सकाशादेव मया सम्यक् श्रुतम् ॥

**एवमेतद्यथाऽऽत्थ त्वं त्वमात्मानं परमेश्वर ।**
**द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ॥ २ ॥**

हे परमेश्वर ! आत्मानं त्वं यथा येन प्रकारेण आत्थ कथयसि तत् सर्वमेवमेतत् यथार्थतः सत्यमेव । हे पुरुषोत्तम ! ते ऐश्वरं रूपं परमात्मसंबन्धि यद्रूपमस्ति तत् द्रष्टुमिच्छमि । त्वं यद्यपि मानवरूपं गृहीतवनसि । तथापि त्वं दिव्यतनुरेवासीति मया सम्यग्विदितम् । अतस्तव दिव्यां तनुं द्रष्टुमिच्छा मयि विशेषत उत्पन्ना । इयमपि हार्दी इच्छा त्वयैव दयया पूरणीया । इत्यर्जुनः स्वहृदयस्याशययाविश्चकार ॥ ३ ॥

**मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो ।**
**योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम् ॥ ४ ॥**

हे प्रभो योगेश्वर ! सर्वेषामधिपते योगानां सर्वेषां नियामक ! त्वदीयमेतत् रूपं मया द्रष्टुमद्य शक्यमिति यदि मन्यसे त्वं तर्हि अव्ययमात्मानं स्वात्मस्वरूपं मे दर्शय इति भक्त्या अर्जुनः परमात्मानं प्रार्थयामास ॥

**पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ।**
**नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥ ५ ॥**

भगवानव्याजवात्सल्येन अर्जुनस्य सत्सङ्कल्पमपूरयत् । हे पार्थ अर्जुन ! शतशः सहस्रशः नानाविधानि नानावर्णाकृतीनि अनेकविधवर्णाकृतियुक्तानि दिव्यानि सर्वव्यापकानि मे रूपाणि पश्य ॥ ५ ॥

**पश्यादित्यान् वसून्रुद्रान् अश्विनौ मरुतस्तथा ।**
**बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि भारत ॥ ६ ॥**

हे भारत अर्जुन ! मयि विराजमानान् आदित्यान् वसून् रुद्रान् अश्विनौ तथा मरुतश्च पश्य । किं बहुना ! अदृष्टपूर्वाणि केनाप्येतावता कालेन न दृष्टानि बहून्याश्चर्याणि मयि पश्य ॥ ६ ॥

**इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् ।**
**मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसि ॥ ७ ॥**

इहैकस्थं अत्र मय्येकस्मिन् स्थितं सचराचरं कृत्स्नं जगत् अद्य पश्य ।

सर्वाधारे सर्वविश्रान्तिस्थले अखण्डविश्वाकारे मयि व्यवहरन्तं प्राणिवर्गं सर्वमपि पश्य। हे गुडाकेश, [ तनिन्द्र, जागरणशील ! यच्चान्यदपि द्रष्टुमिच्छसि तदपि मम देहे अद्य पश्य ॥ ७ ॥

न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा ।
दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥ ८ ॥

त्वं यद्यपि भक्त्यतिशयेन मदीयमैश्वरं वैभवं द्रष्टुं योग्योऽसि । तथापि अनेन स्वचक्षुषा चर्मचक्षुषा मां द्रष्टुं न शक्नोषि । अतस्ते तुभ्यं दिव्यं दिव्यशक्तियुतं मद्दर्शनसाधकं चक्षुर्ददाम्यनुगृह्णामि । मम ऐश्वरं योगं परमात्मसंबन्धि संघटनादिसामर्थ्यं दिव्यचक्षुषा पश्य । हृदयस्थे परमेश्वरे यः समरसतया विलीयते तादृशः सर्वोऽपि पारमेश्वरयोगेन दिव्यां शक्तिं समश्नुते । सामान्यजीविनोऽपि यदि तादृग्योगः संभवेत् तदा पराशक्तिस्वरूपस्य श्रीकृष्णस्य शिवयोगसंघटने किं वक्तव्यम् । कृष्णो वस्तुतः दिव्यप्रकाशोऽपि मानवरूपधारणात् दिव्यभावे संयुज्य तमेव योगं ईश्वरसंबद्धं न केवलमर्जुने परन्त्वितरेष्वप्यस्मासु स्थिरीकरोति । एवं तादात्म्यभावनयैव शिवयोगः संपत्स्यते फलिष्यति च । नो चेत् मानवः शक्तिदौर्बल्यात् स्वयं नष्टः परांश्च नाशयति । सः स्वयमेव स्वसाहाय्येन न किञ्चिदपि कर्म साधयितुं शक्नोति । तथैव देहस्थेनेश्वरेणैव सर्वं निर्वर्त्यत इति मत्वा तूष्णीं नोपविशेत्सः ! नेत्रप्रकाशः सूर्यप्रकाशेन यद संयुज्यते तदैव पुरो विद्यमानं वस्तु दृश्यते जनैः । तथैव जीवशक्तिः परमात्मशक्त्या यदि संयुज्येत तथैव जीवः स्वीयं शक्तिविकासमधिगन्तुं प्रभवेत् । माययापहृतैश्वर्यो जीवः परमात्मसंपर्कादेव स्वीयमैश्वर्यं संप्राप्य मायाविजयाय शक्नुयात् । अतो भगवान् सर्वेषामपि जीवानां शिवयोगमुपदिशति । अस्यैव शिवयोगस्य महिम्ना मानवः शिवो भूत्वा इच्छाज्ञानक्रियाशक्तिविकासेन लोककल्याणं साधयितुं प्रभवति ॥

एवमुक्त्वा ततो राजन् महायोगेश्वरो हरिः ।
दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥ ९ ॥

अर्जुनप्रार्थनानुसारेण भगवता अनुगृहीतं स्वीययोगदर्शनक्रमं सञ्जयो धृतराष्ट्राय न्यवेदहत्। हे राजन् धृतराष्ट्र! महायोगेश्वरः महांश्चासौ योगेश्वरश्च तादृशः हरिः सर्वपापपरिहारकः श्रीकृष्णः ततस्तदनन्तरं पार्थाय अर्जुनाय परममुत्तममैश्वरं ईश्वरसंबन्धि स्वस्वरूपं दर्शयामास ॥ ९ ॥

अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ।
अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥ १० ॥

दिव्यमाल्यांबरधरं दिव्यगन्धानुलेपनम् ।
सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् ॥ ११ ॥

तादृशरूपस्यैव विवरणं क्रियतेऽद्य। अनेकवक्त्रनयनं अनेकानि असंख्याकानि वक्त्राणि नयनानि च यत्र तादृशम्। अनेकाद्भुतदर्शनं अनेकविधाद्भुतदर्शनविशिष्टम्। अनेकदिव्याभरणं तादृशमहाप्रकाशाभरणविशिष्टम्। दिव्यानेकोद्यतायुधं दिव्यान्यनेकान्युद्यतानि आयुधानि यत्र तादृशम्। दिव्यमल्यांबरधरं दिव्यमाल्यानि पुष्पाणि अंबराणि वस्त्राणि च धरन्तम्। दिव्यगन्धानुलेपनं दिव्यस्य गन्धस्यानुलेपनयुक्तम्। सर्वाश्चर्यमयं अत्यन्ताद्भुतम्। अनन्तमपरिमितम्। विश्वतोमुखं सर्वतोमुखं देवं भगवन्तं अर्जुनो ददर्शेति शेषः ॥ १०–११ ॥

दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।
यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ॥ १२ ॥

दिवि आकाशे युगपत् एककाले उत्थिता उदिता सूर्यसहस्रस्य भाः यदि स्यात्। तथा असंभावितत्वात् यदि स्यादिति निर्देशः कृतः। सा भाः तस्य महात्मनः परमात्मनो भास महाप्रकाशस्य सदृशी समाना स्यात्। सञ्जयः धृतराष्ट्राय परमात्मप्रकाशवैशिष्ट्यं वर्णयामास ॥ १३ ॥

तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ।
अपश्यद्देवदेवस्य शरीरे पाण्डवस्तथा ॥ १३ ॥

तत्र देवदेवस्य श्रीकृष्णस्य शरीरे पाण्डवोऽर्जुनः अनेकधा अनेकप्रकारेण प्रविभक्तं कृत्स्नं जगत् एकस्थं एकत्र स्थितं तदा अपश्यत्। चराचरात्मकमिदं जगत् सर्वमपि श्रीकृष्णप्रदर्शिते विश्वरूपे विभिन्नरूपेणैव समवस्थितं अर्जुनो ददर्श। लोके व्यवहरन्तोऽनेकप्रकारा जीवास्तदानीं अखण्डविश्वात्मके लिङ्गरूपिण्यपरिच्छिन्ने सर्वव्यापिनि दिव्यदेहे संदृष्टा ह्यर्जुनेन। जगति यादृशो व्यवहारः विभिन्नसंस्कारैर्जनैर्यथा निरुह्यते तथैव परमात्मनो दिव्यरूपं परिदृष्टमर्जुनेन। अर्जुनः प्राक् चर्मचक्षुषा प्रपञ्चस्य पाञ्चभौतिकं रूपं पश्यन्नासीत्; अधुना भगवदनुगृहीतेन दिव्यचक्षुषा तमेव प्रपञ्चं दिव्यतेजोविशिष्टमपश्यत्। सर्वदेहान्तर्गतं दिव्यतेजः प्रागव्यक्तं सत् अर्जुनेन न दृष्टम्। अत एव तस्य व्यामोहदृष्टिर्व्यवर्धत। तत्प्रभावादेव तस्य मनः संशयग्रस्तं बभूव। अधुना सः दिव्यचक्षुषा प्रणष्टसर्वसंशयः तदीयकार्यनिर्वाहाय विराजमानस्य परमेश्वरस्य दिव्यदर्शनमलभत। अधुना प्रपञ्चे यथा परमेश्वरोऽदृश्यत तथा प्राक् तत्र विद्यमानोऽपि न दृष्टस्तेन। एवं चेश्वरः दृष्टोऽदृष्टो वा सर्वत्र कार्यव्यापृतो वर्तत एव। परं तु तद्दर्शनाय दिव्यदृष्टिस्तावत् साधकैर्योगमार्गेणाभ्यासात्साधनीया ॥ १३ ॥

**ततः स विस्मयाविष्टो हृष्टरोमा धनञ्जयः।**
**प्रणम्य शिरसा देवं कृताञ्जलिरभाषत ॥ १४ ॥**

ततस्तदनन्तरं विस्मयाविष्टः विस्मयेनाश्चर्येण आविष्टो हृष्टरोमा पुलकितरोमा सः धनञ्जयोऽर्जुनः देवं भगवन्तं श्रीकृष्णं शिरसा प्रणम्य वन्दित्वा कृताञ्जलिः संपुटीकृतहस्तः अभाषत उक्तवान्। परमात्मनो दिव्यवैभवं दृष्ट्वा सन्तुष्टान्तरङ्गोऽर्जुनस्तमेव महाप्रकाशं महादेवमेव भक्त्या प्रणम्य विज्ञापयामासेति सञ्जयो धृतराष्ट्रमब्रवीत् ॥ १४ ॥

**पश्यामि देवांस्तव देव देहे सर्वांस्तथा भूतविशेषसंघान्।**
**ब्रह्माणमीशं कमलासनस्थं ऋषींश्च सर्वानुरागांश्च दिव्यान् ॥**

परमात्मनो दिव्यदर्शनलाभेन सन्तुष्टोऽर्जुनस्तस्मिन्नेव विश्वरूपे किं किमपश्यत्तत्सर्वमपि भक्तिनम्रो न्यवेदयत् । हे देव भगवन् ! तव देहे सर्वान् देवान् पश्यामि । तथा भूतविशेषसंघाम् भूतविशेषाणां प्राणिविशेषाणां संघान् पश्यामि । कमलासनस्थं ब्रह्माणं चतुर्मुखं, ईशं नियामकं प्रळयाधिकारिणं, त्रिमूर्त्यन्तर्गतं कालरुद्रं तथैव ऋषींश्च दिव्यन् उरगांश्च सर्पांश्च पश्यामि । सः स्वयं विष्णोरवतारभूतत्वात् विष्णुरूपतया दृश्यत एव । एवं त्रिमूर्तयोऽपि भगवतोऽमूर्तपरमेश्वरस्य दिव्यमूर्तेः विश्वरूपे विराजमाना ह्यर्जुनेन सन्दृष्टाः । विष्णुरपि विश्वव्यापके रूपे अमूर्तः परमेश्वर एव ; वैकुण्ठवासिनो दिव्यमङ्गळविग्रहधारिणश्च स्थितौ स एव त्रिमूर्त्यन्तर्गतो विष्णुरिति भाव्यते । अत एव अमूर्तपरशिवस्य दिव्यमूर्तरूपाणां त्रिमूर्तीनां च भेदं न गणयन्त्यनुभविनः ॥ १५ ॥

**अनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वां सर्वतोऽनन्तरूपम् ।**
**नान्तं न मध्यं न पुनस्तवादिं पश्यामि विश्वेश्वर विश्वरूप ॥**

अनेकबाहूदरवक्त्रनेत्रं अनेके बाहवः, उदराणि, वक्त्राणि, नेत्राणि च यस्मिंस्तादृशम् । सर्वतः सर्वत्र अनन्तरूपमसंख्यातरूपं त्वा त्वां पश्यामि । हे विश्वेश्वर जगदीश्वर विश्वरूप ! तव अन्तं न पश्यामि, मध्यं न पश्ययि । तथैव आदिं च न पश्यामि । एवमादिमध्यावसानरहितः परंज्योतिस्स्वरूपो महावैभवपरिपूर्णस्त्वं भक्तवात्सल्येन मानुषं रूपं परिगृह्य लोके व्यवहरसि ॥

**किरीटिनं गदिनं चक्रिणं च तेजोराशिं सर्वतो दीप्तिमन्तम् ।**
**पश्यामि त्वां दुर्निरीक्ष्यं समन्ताद्दीप्तानलार्कद्युतिमप्रमेयम् ॥**

किरीटिनं किरीटवन्तं, गदिनं गदावन्तं सर्वतः सर्वत्र दीप्तिमन्तं प्रकाशमानं तेजोराशिं परंज्योतिस्स्वरूपं समन्तात्सर्वदिक्षु दीप्तानलार्कद्युतिं दीप्तः अनलः अग्निः, अर्कः सूर्यश्च तयोरिव द्युतिमन्तं अप्रमेयं प्रमातुमशक्यं दुर्निरीक्ष्यं द्रष्टुमशक्यं त्वां पश्यामि । एवं सर्वात्मकं देवमर्जुनोऽपश्यत् ॥

त्वमक्षरं परमं वेदितव्यं त्वमस्य विश्वस्य परं निधानम् ।
त्वमव्ययः शाश्वतधर्मगोप्ता सनातनस्त्वं पुरुषो मतो मे ॥

परममुत्तमं वेदितव्यं ज्ञातव्यं अक्षरं परं ब्रह्म त्वमेव । अस्य विश्वस्य जगतः त्वं परं निधानं परम आश्रयः । त्वं अव्ययो नाशरहितो नित्यः शाश्वतधर्मगोप्ता शाश्वतो नित्यो यो धर्मः भारतीयः सर्वसहिष्णुतासमदर्शनतारूपो यो धर्मस्तस्य गोप्ता रक्षकः । त्वं सनातनः पुरुषः पुराणपुरुषो मे मतोऽभिमतः ॥ १८ ॥

अनादिमध्यान्तमनन्तवीर्यमनन्तबाहुं शशिसूर्यनेत्रम् ।
पश्यामि त्वां दीप्तहुताशवक्त्रं स्वतेजसा विश्वमिदं तपन्तम् ॥

अनादिमध्यान्तमादिमध्यान्तरहितं अनन्तवीर्यं यस्य वीर्यस्य अन्तः इयत्ता नास्ति तादृशमनन्तबाहुमसंख्यातबाहुयुक्तमीश्वरम् । शशिसूर्यनेत्रं चन्द्रसूर्याविव नेत्रे यस्य तादृशम् । दीप्तहुताशवक्त्रं प्रकाशमानाग्नितुल्यमुखम् । स्वतेजसा स्वप्रभया इदं विश्वं जगत्सर्वं तपन्तं त्वां पश्यामि ॥

द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः ।
दृष्ट्वाद्भुतं रूपमुग्रं तवेदं लोकत्रयं प्रव्यथितं महात्मन् ॥

हे महात्मन् परमात्मन् ! द्यावापृथिव्योः आकाशपृथिव्योः यदन्तरं मध्यप्रदेशोऽस्ति सः सर्वा दिशश्च एकेनैव त्वया व्याप्तम् । एतादृशं अद्भुतं आश्चर्यकरं इदं तव उग्रं भयङ्करं रूपं दृष्ट्वा लोकत्रयं लोकानां त्रयमपि प्रव्यथितं प्रकर्षेण भीतं वर्तते ॥ २० ॥

अमी च त्वां सुरसिद्धसंघा विशन्ति केचिद्भीताः प्राञ्जलयो गृणन्ति ।
स्वस्तीत्युक्त्वा महर्षिसिद्धसंघाः स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः ॥

अमी हि सुरसंघा एते युद्धायागता ये देवांशभूता मनुष्याः धर्मपुत्रभीष्मद्रोणादयः सन्ति ते त्वा त्वां विशन्ति प्रविशन्ति । केचित्तु भीताः प्राञ्जलयः कृताञ्जलयो गृणान्ति स्तुवन्ति । एवं युद्धाय समुद्युक्तान् सर्वानपि

योधान् अर्जुनः भगवतो विश्वरूपेऽपश्यत् । तथैव महर्षीणां सिद्धानां च संघाः स्वस्ति 'जगतः स्वस्त्यस्तु' इत्युक्त्वा पुष्कलाभिः समृद्धाभिः स्तुतिभिः स्तोत्रैस्त्वां स्तुवन्ति स्तोत्रं कुर्वन्ति । एवं विश्वात्मके परमात्मविश्वरूपे तमेव स्तुतिभिः प्रशंसतो महर्षीश्चार्जुनोऽपश्यत् ॥ २१ ॥

रुद्रादित्या वसवो ये च साध्या विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ।
गन्धर्वयक्षासुरसिद्धसंघा वीक्षन्ते त्वां विस्मिताश्चैव सर्वे ॥

रुद्रा एकादश । आदित्या द्वादश । एवं वसवो ये च साध्याश्च विश्वे देवा अश्विनौ देवौ मरुद्गणः ऊष्मपाश्च पितरः । गन्धर्वयक्षासुरसिद्धानां संघाश्च सर्वे विस्मिता विस्मयग्रस्ताः त्वां वीक्षन्ते पश्यन्ति । एवमर्जुनो भगवतो दिव्यदेहे सर्वानपि विस्मितान् गन्धर्वादीनपश्यत् ॥ २२ ॥

रूपं महत्ते बहुवक्त्रनेत्रं महाबाहो बहुबाहूरुपादम् ।
बहूदरं बहुदंष्ट्राकरालं दृष्ट्वा लोकाः प्रव्यथितास्तथाहम् ॥

हे महाबाहो बाहुबलशालिन् महादेव ! बहुवक्त्रनेत्रं बहूनि वक्त्राणि च यस्य तादृशम् । बहुबाहूरुपादं बहवो बाहवः ऊरवः पादाश्च यस्य तादृशम् । बहूदरं बहूनि उदराणि यस्य तादृशम् । बहुदंष्ट्राकरालं बह्वीभिर्दंष्ट्राभिः करालं भयङ्करं महत्ते इदं रूपं दृष्ट्वा सर्वे लोकाः प्रव्यथिताः भीता वर्तन्ते । तथा अहमपि प्रव्यथितो ह्यतीव भीतोऽस्मि ॥ २३ ॥

नभःस्पृशं दीप्तमनेकवर्णं व्यात्ताननं दीप्तविशालनेत्रम् ।
दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा धृतिं न विन्दामि शमं च विष्णो ॥

हे विष्णो ! नभःस्पृशं आकाशस्पर्शि दीप्तं प्रकाशमानं अनेकवर्णं बहुवर्णयुक्तं व्यात्ताननं विवृतास्यं दीप्तविशालनेत्रं दीप्तं प्रकाशमानं विशालं च नेत्रं यस्य तादृशं त्वां दृष्ट्वा प्रव्यथितान्तरात्मा भीतमनस्कः अहं धृतिं धैर्यं न विन्दामि न प्राप्नोमि ; शमं शान्तिं च न प्राप्नोमि ॥ २४ ॥

दंष्ट्राकरालानि च ते मुखानि दृष्ट्वैव कालानलसन्निभानि ।
दिशो न जाने न लभे च शर्म प्रसीद देवेश जगन्निवास ॥

दंष्ट्राकरालानि दंष्ट्राभिरतिभयंकराणि कालानलसन्निभानि प्रलयाग्निसदृशानि ते तव मुखानि दृष्ट्वैव यदाहं दृष्टवान् तदाप्रभृत्येव दिशोऽपि न जाने ; शर्म सुखं च न लभे न प्राप्नोमि । हे देवेश देवानामीश्वर! जगन्निवास जगतामाधारभूत ! मह्यं सदयं प्रसीद प्रसन्नो भव ॥ २५ ॥

अमी च त्वां धृतराष्ट्रस्य पुत्राः सर्वे सहैवावनिपालसंघैः ।
भीष्मो द्रोणः सूतपुत्रस्तथासौ सहास्मदीयैरपि योधमुख्यैः ॥
वक्त्राणि ते त्वरमाणा विशन्ति दंष्ट्राकरालानि भयानकानि ।
केचिद्विलग्ना दशनान्तरेषु संदृश्यन्ते चूर्णितैरुत्तमाङ्गैः ॥ २७ ॥

अमी धृतराष्ट्रस्य पुत्राः दुर्योधनादयः सर्वे अवनिपालसंघैः राजसमूहैः सहैव तथा भीष्मो द्रोणः, असौ सूतपुत्रः कर्णः अस्मदीयैः योधमुख्यैः अस्मत्पक्षीयैः वीरैस्सहैव दंष्ट्राकरालानि दंष्ट्राभिर्भयङ्कराणि भयानकानि अतिभयङ्कराणि ते वक्त्राणि मुखानि त्वरमाणास्त्वरायुक्ता विशन्ति प्रविशन्ति । केचित् दशनान्तरेषु दन्तमध्येषु विलग्नाः संबद्धाः चूर्णितैः चूर्णीकृतैरुत्तमाङ्गैः शिरोभिः संदृश्यन्ते उपलभ्यन्ते ॥ २६–२७ ॥

यथा नदीनां बहवोऽम्बुवेगाः समुद्रमेवाभिमुखा द्रवन्ति ।
तथा तवामी नरलोकवीरा विशन्ति वक्त्राण्यभिविज्वलन्ति ॥

नदीनां बहवोऽनन्ता अंबुवेगा जलप्रवाहाः समुद्रमेवाभिमुखा समुद्रमेवाभिमुखीकृत्य यथा द्रवन्ति गच्छन्ति तथा अमी नरलोकवीरा मनुष्यलोकवीरा अभिविज्वलन्ति प्रकाशमानानि तव वक्त्राणि मुखानि विशन्ति प्रविशन्ति ॥ २८ ॥

यथा प्रदीप्तं ज्वलनं पतङ्गा विशन्ति नाशाय समृद्धवेगाः ।
तथैव नाशाय विशन्ति लोकास्तवापि वक्त्राणि समृद्धवेगाः ॥

प्रदीप्तं प्रकाशमानं ज्वलनं अग्निं पतङ्गाः पक्षिणः कीटविशेषा वा समृद्धवेगा अत्यन्तवेगयुक्ताः नाशाय स्वनाशाय यथा विशन्ति तथैव लोका एते जनाः समृद्धवेगाः अत्यन्तवेगयुक्ताः नाशाय स्वनाशाय तव वक्त्राण्यपि मुखान्यपि विशन्ति प्रविशन्तो वर्तन्ते ॥ २९ ॥

**लेलिह्यसे ग्रसमानः समन्ताल्लोकान्समग्रान्वदनैर्ज्वलद्भिः ।**
**तेजोभिरापूर्य जगत्समग्रं भासस्तवोग्राः प्रतपन्ति विष्णो ॥**

ज्वलद्भिर्दीप्यमानैः वदनैर्मुखैः समग्रान्समस्तान् लोकान् समन्तात् समन्ततो ग्रसमानः सन् लेलिह्यसे जिह्वया आस्वादयसि । एवं भीकरेण रूपेण सर्वानपि लोकान् आस्वादयन् दृश्यते परमात्मा । 'तस्यैते तनुवौ घोराऽघोरा च' इति श्रुतौ परमात्मनः अघोरं प्रसन्नं, घोरं भीकरं च मुखद्वयं श्रूयते । सः अघोरेण मुखेन भक्ताननुगृह्णाति, घोरेण च दुष्टान् निगृह्णाति । अधुना भाविनो महायुद्धस्य निर्विघ्नपरिसमाप्तिसूचनार्थं घोरमेव मुखं प्रदर्शयति प्रभुः । तमेव दृष्ट्वा भीतोऽर्जुनः तद्रूपोपसंहाराय भगवति प्रार्थयते—हे विष्णो ! उग्रास्तीक्ष्णाः तव भासः कान्तयः तेजोभिः स्वप्रभाभिः समग्रं समस्तं जगत् आपूर्य व्याप्य प्रतपन्ति प्रतापं कुर्वन्ति । अत्र परमात्मनः प्रकाशरूपेण विश्वव्याप्तिं सूचयितुं विष्णुपदप्रयोगो युज्यते । विष्णुपदं अमूर्तं भूतयोनिं समस्तसाक्षिं परंज्योतिस्वरूपं महादेवमभिव्यनक्ति । विश्वव्याप्तिरूपं यौगिकार्थं बोधयद्विष्णपदं यथा त्रिमूर्त्यन्तर्गते रक्षणाधिकारिणि अन्वेति तथा मुख्यवृत्त्या सर्वाश्रयभूते अमूर्तपरमात्मन्यपि सहजतया अन्वेति । अतः विष्णुपदप्रयोगेनैव शैवैरन्यथा भावयितुमवकाशो नास्ति ॥

**आख्याहि मे को भवानुग्ररूपो नमोऽस्तु ते देववर प्रसीद ।**
**विज्ञातुमिच्छामि भवन्तमाद्यं नहि प्रजानामि तव प्रवृत्तिम् ॥**

उग्ररूपः क्रूराकारो भवान् कः ? आख्याहि कथय हे देववर देवश्रेष्ठ ! ते तुभ्यं नमोऽस्तु । मह्यं प्रसीद प्रसादं कुरु । आद्यं सर्वेषामादौ

भवं भवन्तं विज्ञातुं इच्छामि । एतादृशं भीकरं रूपमास्थितवतस्ते प्राक्तनं रूपं ज्ञातुमिच्छामि । सौम्यस्वरूपस्त्वं कुत एवं भीकरं रूपं परिगृहीतवानित्येतन्न जाने । एतत्सर्वं मे सदयं कथय । इति भयेन विनयेन च अर्जुनो भगवन्तं प्रार्थयते ॥ ३१ ॥

**कालोऽस्मि लोकक्षयकृत्प्रवृद्धो लोकान्समाहर्तुमिह प्रवृत्तः ।**
**ऋतेऽपि त्वां न भविष्यन्ति सर्वे येऽवस्थिताः प्रत्यनीकेषु योधाः ॥**

एवं पृष्टो भगवानुवाच । अहं लोकक्षयकृत् लोकप्रळयकारी प्रवृद्धः प्रकर्षेण वृद्धिं गतः कालोऽस्मि । अहमेव प्रळयाधिकारी कालरुद्रोऽस्मि । इह इदानीं लोकान् समस्तान् समाहर्तुं संहर्तुं प्रवृत्तः भूभारावतरणाय । प्रळयकाले अहमेव तादृशं भीकरं रूपं परिगृह्णामि । अधुना महायुद्धे समागताः सर्वे एते योधा कालवशङ्गता एव वर्तन्ते । एते सर्वे विष्णुरूपे मय्येवैतावता कालेन निवसन्तो व्यवहरन्तश्च अन्ते भीकरे कालरुद्रे मयि प्रविशन्ति । अतः प्रत्यनीकेषु आसु प्रतिपक्षसेनासु ये योधा वीरा अवस्थितास्ते सर्वे त्वां ऋतेऽपि विनापि न भविष्यन्ति न जीविष्यन्ति । तेषां विनाशकालः सन्निहितः । तदर्थमेव तेऽत्र समागताः । अहमप्येतदर्थमेव च अत्रावतीर्णोऽस्मि । एतान् जनान् रक्षितुं त्वं न कदापि प्रभवसि । मयैवैतेऽधुना निहन्यन्ते । एतेषां हननरूपं घोरं कार्यं मदीयमेव । इदं सर्वं त्वयैव क्रियत इति भ्रान्त्या त्वं विषण्णोऽसि । एतादृशेऽपरिहार्ये विषये तव विषादो न युज्यते । जगद्व्यापारे तावत् अवान्तरोऽपि प्रळयः महत्तरः कार्यः । स तु संपूर्णं मदधीन एव । तत्र विचारणा न कार्यैव त्वादृशैर्जीवैः । हृदये तिष्ठन्नीश्वरः यथा यादृशे कर्मणि त्वां प्रेरयति तथा तादृश एव कर्मणि त्वया कर्तव्यदृष्ट्या निमित्तमात्रं प्रवर्तितव्यम् । मरणशीला एव जनाः अस्मिन् युद्धे मत्प्रेरणया समुपस्थिताः । तेषां योगक्षेमनिर्वहणं नैकव्यक्तिसंबद्धं, अपि तु सर्वज्ञेश्वरसंबद्धमित्यंशं भगवानत्र स्पष्टयति ॥ ३२ ॥

**तस्मात्त्वमुत्तिष्ठ यशो लभस्व जित्वा शत्रून् भुंक्ष्व राज्यं समृद्धम् ।**
**मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन् ॥ ३३ ॥**

तस्मात् यतः एषां मृत्युस्सन्निहितस्तस्मात् त्वं उत्तिष्ठ युद्धाय । त्वदीयं कर्तव्यं श्रद्धया निर्वर्तय । ततश्चावश्यंभाव्यं यशो लभस्व प्राप्नुहि । यद्यात्मगौरवे बद्धकक्षोऽसि तदा कर्तव्यप्राप्तं युद्धं ईश्वरप्रेरणानुरोधेन निर्वह । हे सव्यसाचिन् अर्जुन ! एतेऽत्र समागताः सर्वेऽपि योधाः पूर्वमेव त्वया युद्धे हननात्पूर्वमेव मयैव कालरुद्रात्मकेन निहता एव । अत एते सर्वे जीवच्छवा एव संभूता । त्वया एते न कदापि हन्यन्ते । तथापि मदंशभूताय ते कर्तव्यनिर्वाहाय सदवकाशं कल्पयितुं त्वमत्र निमित्तमात्रमुपयुज्यसे । प्रधानकर्तृत्वं न ह्यन्वेति त्वयि । एवं ज्ञात्वा कर्मयोगाचरणेन मदनुग्रहभाजनं भव । एतादृशं दिव्यमुपदेशं भगवान् मानवकल्याणाय अनुगृह्णाति ॥

**द्रोणं च भीष्मं जयद्रथं च कर्णं तथान्यानपि योधवीरान् ।**
**मया हतांस्त्वं जहि मा व्यथिष्ठा युध्यस्व जेतासि रणे सपत्नान् ॥**

सामान्यतः उपदिश्य अधुना विशिष्याप्याह भगवान् । द्रोणं च, भीष्मं च, जयद्रथं च, कर्णं च, तथा अन्यानपि योधमुख्यान् प्रधानवीरान् त्वं जहि । मा व्यथिष्ठाः व्यथां मां करु । युध्यस्व युद्धं कुरु । सपत्नान् शत्रून् रणे जेतासि जयिष्यसि । तथा द्रोणादीन् कथं हन्यामिति वा, 'यद्वा जयेम यदि वा नो जयेयुः' इति वा शङ्का न कदापि कार्या त्वया । एतादृशं विचारं कर्तुं त्वं न जातः ; परन्तु स्वकर्तव्यनिर्वहणेन हि मदनुग्रहं लब्ध्वा मद्योगमधिगंन्तुमेव जातः । एवं भगवान् अर्जुनाय अवश्यकर्तव्यं धर्ममव्याजप्रेम्णा उपादिशत् ॥ ३४ ॥

**एतच्छ्रुत्वा वचनं केशवस्य कृताञ्जलिर्वेपमानः किरीटी ।**
**नमस्कृत्वा भूय एवाह कृष्णं सगद्गदं भीतभीतः प्रणम्य ॥**

श्रीकृष्णपरमात्मनो वचोऽमृतं निपीय अर्जुनः किमकरोदित्यमुमंशं

सञ्जय उवाच। किरीटी अर्जुनः केशवस्य श्रीकृष्णस्य एतद्वचनं श्रुत्वा वेपमानः कम्पमानः कृताञ्जलिश्च नमस्कृत्वा कृष्णं भूय एव सगद्गदं भयात् गद्गदस्वरेण भीतभीतः अत्यन्तभीतः पुनः प्रणम्य वक्ष्यमाणं वाक्यमब्रवीत् ॥

स्थाने हृषीकेश तव प्रकीर्त्या जगत्प्रहृष्यत्यनुरज्यते च।
रक्षांसि भीतानि दिशो द्रवन्ति सर्वे नमस्यन्ति च सिद्धसंघाः ॥

हे हृषीकेश कृष्ण ! तव प्रकीर्त्या माहात्म्येन जगत्सर्वो लोकः प्रहृष्यति हर्षं प्राप्नोति, अनुरज्यते च अनुरागमपि त्वयि करोति। एवमेव रक्षांसि राक्षसा भीतानि दिशो द्रवन्ति प्रधावन्ति। सर्वे च सिद्धसंघा नमस्यन्ति च। एतत्सर्वं स्थाने युक्तमेव। यतस्त्वं तादृशाद्भुतशक्तिमान् वर्तसे। अत एव नित्यसुन्दरस्त्वं सर्वेषामादर्शभूतोऽसि ॥ ३६ ॥

कस्माच्च ते न नमेरन् महात्मन् गरीयसे ब्रह्मणोऽप्यादिकर्त्रे।
अनन्त देवेश जगन्निवास त्वमक्षरं सदसत्तत्परं यत् ॥ ३७ ॥

हे महात्मन् परमात्मन् ! ब्रह्मणोऽपि हिरण्यगर्भस्यापि आदिकर्त्रे प्रथमस्रष्ट्रे गरीयसे गुरूत्तमाम ते तुभ्यं कस्मात् न नमेरन् कुतो न नमस्कुर्युरेते सिद्धसंघाः ? अर्हते तुभ्यमर्हणां कुर्वन्त एवैते सिद्धा मानववर्गा शुभया बुद्ध्या स्मृत्या च युञ्जत एव। हे अनन्त अन्तरहित ! देवेश देवानामपीश ! जगन्निवास जगतां वासस्थानभूत ! त्वमेव परं उत्तमं सदसत् सदसद्रूपम्। सर्वात्मकमित्यर्थः। अक्षरं परं ब्रह्म यदुच्यते तत् त्वमेव। मानवदेहमास्थितोऽपि त्वमेव साक्षात् परब्रह्मासि ॥ ३७ ॥

त्वमादिदेवः पुरुषः पुराणस्त्वमस्य विश्वस्य परं निधानम्।
वेत्तासि वेद्यं च परं च धाम त्वया ततं विश्वमनन्तरूप ॥ ३८ ॥

त्वमेव आदिदेवः सर्वेषामपि देवानामादौ स्थितो देवः। एवं पुराणः सनातनः पुरुषस्त्वमेव। अस्य विश्वस्य जगत परं परमं निधानमाधारभूतस्त्वमेव। त्वमेव वेत्ता सर्वज्ञोऽसि। त्वमेव वेद्यं वेदितव्यं च तत्त्वमसि !

त्वमेव परं उत्तमं च धाम तेजः । हे अनन्त विश्वाकार ! त्वया विश्वं जगत्सर्वमपि ततं व्याप्तम् ॥ ३८ ॥

**वायुर्यमोऽग्निर्वरुणः शशाङ्कः प्रजापतिस्त्वं प्रपितामहश्च ।**
**नमो नमस्तेऽस्तु सहस्रकृत्वः पुनश्च भूयोऽपि नमो नमस्ते ॥**

अमूर्तपरमात्मनो भक्तानुग्रहलीलायां घृतकाठिन्यन्यायेन परिगृहीतानेकदिव्यमूर्तरूपेषु विनिश्चिततादात्म्यभावनोऽर्जुनः तमेव मूर्तामूर्तप्रकाशमयं परमात्मानं भक्त्या प्रणमति । वायुः, यमः, वरुणः, अग्निः, शशाङ्कश्चन्द्रः, प्रजापतिः कश्यपादिः, प्रपितामहश्च त्वमेव । पितामहश्चतुर्मुखस्तस्यापि जनकत्वात् त्वं प्रपितामहः । अतस्ते सहस्रकृत्वः बहुवारं नमोऽस्तु । पुनश्च भूयोऽपि ते नमो नमः । एवं भक्त्यतिशयात् नमस्कारस्यावृत्तिः ॥

**नमः पुरस्तादथ पृष्ठतस्ते नमोऽस्तु ते सर्वत एव सर्व ।**
**अनन्तवीर्यामितविक्रमस्त्वं सर्वं समाप्नोषि ततोऽसि सर्वः ॥ ४० ॥**

एवं भक्तिपारवश्यादेवाह । ते पुरस्तात् पूर्वस्यां दिशि नमः । एवं पृष्ठतोऽपि नमः । किं बहुना ! हे सर्व सर्वस्वरूप । ते सर्वत एव सर्वास्वपि दिक्षु नमोऽस्तु । कथं भगवतः सर्वरूपत्वमित्यत्राह अनन्तेत्यादि । अनन्तवीर्यः अमितविक्रमश्च त्वम् । वीर्यं नाम सामर्थ्यं ; विक्रमः पराक्रमः । तदुभयमपि ते अपारम् । तादृशः अद्भुतशक्तिमांस्त्वं यतः सर्वं समाप्नोषि व्याप्य तिष्ठसि ततस्त्वं सर्वोऽसि सर्वस्वरूपोऽसि । ततश्च सर्वव्यापकत्वमेव सर्वस्वरूपत्वे हेतुरित्युक्तं भवति ॥ ४० ॥

**सखेति मत्वा प्रसभं यदुक्तं हे कृष्ण हे यादव हे सखेति ।**
**अजानता महिमानं तवेदं मया प्रमादात्प्रणयेन वापि ॥ ४१ ॥**
**यच्चावहासार्थमसत्कृतोऽसि विहारशय्यासनभोजनेषु ।**
**एकोऽथवाप्यच्युत तत्समक्षं तत्क्षामये त्वामहमप्रमेयम् ॥ ४२ ॥**

एवं परमात्मस्वरूपं कृष्णं पश्यन्नर्जुन एतावता कालेन तन्महिम्नः

अपरिज्ञानात् यद्यत् तद्विषये स्वेन कृतं अवज्ञानादि तत्सर्वं स्मरन्सः भीत्या कृष्णपरमात्मनि क्षमां याचते । सखा मत्समानवया इति मत्वा मया तव भगवत्स्वरूपस्य इदं निरतिशयमहिमानं वैभवं अजानता अत एव प्रमादात् अनवधानतः प्रणयेन वापि स्नेहतो वा प्रसभं बलात्कारेणाभिभूय हे कृष्ण, हे यादव, हे सखेति यन्मयोक्तम् ; यच्च अवहासार्थं उपहासार्थं विहार-शय्यासनभोजनेषु विहारः क्रीडादिः, शय्या शयनं आसनमुपवेशनं, भोजनं इत्यादिव्यवहारेषु प्रचलत्सु एकं प्रत्येकं रहसि वा, अथवा त्वत्समक्षं वा सर्वेषां पुरतो वा बहुधा असत्कृतोऽसि परिभूतोऽसि हे अच्युत भगवन् ! तत्सर्वं अप्रमेयं वर्णितुमप्यशक्यमहावैभवशालिनं त्वामहं क्षामये क्षमां प्रार्थये तत्सर्वं भवता क्षन्तव्यमेवेत्यर्जुनः सविनयं प्रार्थयते ॥ ४१–४२ ॥

**पितासि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान् ।**
**न त्वत्समोऽस्त्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभाव ॥**

किमर्थं क्षमां प्रार्थयत इत्यत्राह । हे अप्रतिमप्रभाव 'न तत्समश्चाभ्य-धिकश्च दृश्यते' इति श्रुत्युक्तरीत्या विस्मयवैभवविशिष्ट महादेव ! त्वं हि चराचरस्य स्थावरजङ्गमरूपस्य लोकस्य पितासि जनकोऽसि परब्रह्मण एव जगदुत्पत्तिहेतुत्वात् । एवमस्य लोकस्य पूज्यः पूजार्हो गरीयान् सर्वश्रेष्ठो गुरुश्च त्वमेवासि । त्वमेव सर्वजगद्गुरुरित्यर्थः । किं बहुना । लोकत्रयेऽपि त्वत्समः त्वत्तुल्य एव कश्चिन्नास्ति । त्वदन्योऽभ्यधिकस्त्वदपेक्षयाप्युत्तमः कुतः स्यात् ? सर्वेऽपि भवदपेक्षया निकृष्टा एव । अतस्त्वां क्षमां प्रार्थयेऽहम् ॥

**तस्मात्प्रणम्य प्रणिधाय कायं प्रसादये त्वामहमीशमीड्यम् ।**
**पितेव पुत्रस्य सखेव सख्युः प्रियः प्रियायार्हसि देव सोढुम् ॥ ४४ ॥**

तस्मात् एवं तव समाभ्यधिकरहितत्वादेव ईशं सर्वलोकमहेश्वरम् । "भोक्तारं यज्ञतपसां महेश्वरं ज्ञात्वा मां शान्तिमृच्छति" इति हि पूर्वमेवोक्तम् । अत एवेड्यं स्तुत्यं त्वामहं प्रणम्य नमस्कृत्य कायं शरीरं

प्रणिधाय प्रकर्षेण नीचैः कृत्वा प्रसादये प्रसन्नं कर्तुं प्रार्थये । एतावतः अपराधान् कृत्वाद्य क्षमाप्रार्थनामात्रेण कथं देहः प्रसन्नो भवेदित्यत्राह— पितेवेत्यादि । हे देव भगवन् कृष्ण ! पुत्रस्य अपराधं यथा पिता क्षमेत । सख्युर्वा अपराधं यथा सखा क्षमेत । प्रियायाः अपराधं प्रियो वा यथा क्षमेत । प्रियायार्हसीति सन्धिश्छान्दसः । तथा मां सोढुमर्हसि ॥ ४४ ॥

**अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा भयेन च प्रव्यथितं मनो मे ।**
**तदेव मे दर्शय देव रूपं प्रसीद देवेश जगन्निवास ॥ ४५ ॥**

एवं विश्वरूपं भगवन्तं पश्यन्नर्जुनः इतोऽपि तं द्रष्टुमशक्नुवन् विश्वरूपमुपसंहर्तुं विनयेन प्रार्थयते । अदृष्टपूर्वं कदापि कुत्रापि पूर्वमदृष्टं ते दिव्यं रूपमिदं दृष्ट्वा हृषितोऽस्मि अत्यन्तं सन्तुष्टोऽस्मि । किञ्च मे मनः भयेन , एतादृशभयङ्कररूपदर्शनजन्यभीत्या च प्रकर्षेण व्यथितं कम्पितं वर्तते । हे देवेश देवानामपीश । जगन्निवास जगदाधारभूत स्वामिन् ! हे देव ! तदेव प्राक्तनं साधारणं मानुषं रूपं मे मह्यं दर्शय । प्रसन्नो भव । प्रसन्नो भूत्वा विश्वरूपमुपसंहरेत्यर्थः ॥ ४५ ॥

**किरीटिनं गदिनं चक्रहस्तं इच्छामि त्वां द्रष्टुमहं तथैव ।**
**तेनैव रूपेण चतुर्भुजेन सहस्रबाहो तव विश्वमूर्ते ॥ ४६ ॥**

इदं शंखस्याप्युपलक्षणम् । एतादृशं शंखचक्रधारिणं त्वां तथैव पूर्ववदेव द्रष्टुमहमिच्छामि । अनस्तेनैव पूर्वदृष्टेन चतुर्भुजेन रूपेण भव पूर्वरूपमेव पुनर्गृहाण ॥ ४६ ॥

**मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शितमात्मयोगात् ।**
**तेजोमयं विश्वमनन्तमाद्यं यन्मे त्वदन्येन न दृष्टपूर्वम् ॥**

एवमर्जुनेन सविनयं प्रार्थितो भगवानुवाच । हे अर्जुन ! प्रसन्नेन त्वयि अनुग्रहवता मया आत्मयोगात् आत्मवैभवादेव तेजोमयं ज्योतीरूपं, विश्वं विश्वरूपं, अनन्तं अन्तरहितं आद्यं सर्वेषामप्यादौ भवं इदं परं रूपं

परमात्मस्वरूपं तव तुभ्यं दर्शितम् । यत् रूपं त्वदन्येन त्वद्व्यतिरिक्तेन केनापि न दृष्टपूर्वं पूर्वं न दृष्टं तादृशं रूपं तुभ्यं मया प्रदर्शितम् ॥ ४७ ॥

न वेदयज्ञाध्ययनैर्न दानैर्न च क्रियभिर्न तपोभिरुग्रः ।
एवंरूपः शक्य अहं नृलोके द्रष्टुं त्वदन्येन कुरुप्रवीर ॥ ४८ ॥

उक्तमेवार्थं द्रढयति । हे कुरुप्रवीर ! वेदयज्ञाध्ययनैः वेदैः यज्ञैः अध्ययनैश्च न द्रष्टुमहं शक्यः इति प्रत्येकं प्रत्येकं अन्वयः । एवं दानैः क्रियाभिः अग्निहोत्रादिकर्मभिर्वा, उग्रैस्तीक्ष्णैस्तपोभिर्वा एवंरूपो विश्वरूपोऽहं नृलोके मनुष्यलोके त्वदन्येन त्वद्व्यतिरिक्तेन द्रष्टुं न शक्यः । एवं परमात्मा स्थिरभक्तियोगलभ्यः सन् केवलसद्भक्तवर्येभ्य एव स्वीयं दर्शनलाभमनुगृह्णाति । अयमाशयः शरणगीतायामेवमभिव्यक्तः । " नादप्रियः शंभुरितीर्यते जनैर्न नादमात्रेण हि तुष्यते शिवः । वेदप्रियः शंभुरितीर्यते जनैर्न वेदमात्रेण हि तुष्यते शिवः ॥ अर्धायुरासीन्ननु नादकारी लङ्काधिराजो वत भक्तिहीनः ॥ अभ्यस्य वेदं ननु पङ्कजासनः शिरोविहीनः समजायतैव ॥ तस्माच्छिवो नादपरोऽपि नैव न वेदमात्रप्रियता च तस्मिन् । भक्तिप्रियत्वं हि समेति देवे भक्तो भवेयं खलु सङ्गमार्य " ॥ इति । एवं शरणाः परमेश्वरं केवलभक्तिगम्यमिति स्वानुभवपूर्वकं निर्दिशन्ति । अयमेवाशयः परमात्मना स्वयमेव निर्दिष्टो मानवकल्याणायाव्याजवात्सल्येन ॥ ४८ ॥

मा ते व्यथा मा च विमूढभावो दृष्ट्वा रूपं घोरमीदृङ्ममेदम् ।
व्यपेतभीः प्रीतमनाः पुनस्त्वं तदेव मे रूपमिदं प्रपश्य ॥

अथ भगवान् भीतमर्जुनं सान्त्वयति । ईदृक् ईदृशं घोरं इदं मदीयरूपं दृष्ट्वा ते व्यथा पीडा मा मास्तु । विमूढभावश्च विमूढचित्तता च मा मास्तु । व्यपेतभीः व्यपगतभयः प्रीतमना हृष्टमनाः सन् त्वमेव पुनः तदेव पूर्वतनमिदं रूपं मे प्रपश्य ॥ ४९ ॥

इत्यर्जुनं वासुदेवस्तथोक्त्वा स्वकं रूपं दर्शयामास भूयः ।
आश्वासयामास च भीतमेनं भूत्वा पुनः सौम्यवपुर्महात्मा ॥

संजय उवाच । वासुदेवः श्रीकृष्णः अर्जुनाय इति तथोक्त्वा इत्येतत्प्रकारेणोक्त्वा भूयः पुनः स्वीयमेव पूर्वतनरूपं दर्शयामास । पुनश्च महात्मा परमात्मा श्रीकृष्णः सौम्यवपुः सौम्यशरीरो भूत्वा भीतमेनमर्जुनमाश्वासयामास च सान्त्वयामास । तथा भगवत्कृतमर्जुनाश्वासनप्रकारं सञ्जयो धृतराष्ट्राय न्यवेदयत् ॥ ५० ॥

दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन ।
इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ॥ ५१ ॥

एवमेव भगवता सान्त्वितोऽर्जुन उवाच । हे जनार्दन कृष्ण ! तव सौम्यमेव मानुषरूपं दृष्ट्वा अहमिदानीमेव सचेताः प्रसन्नमनाः संवृत्तोऽस्मि । प्रकृतिं मदीयस्वभावमेव गतोऽस्मि ॥ ५१ ॥

सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ।
देवा अप्यस्य रूपस्य नित्यं दर्शनकांक्षिणः ॥ ५२ ॥

मानवभावमापन्नः पुनः श्रीभगवानुवाच । यत् सुदुर्दर्शं सुतरां द्रष्टुमशक्यं इदं मम रूपं दृष्टवानसि । तदस्य रूपस्य देवा इन्द्रादयोऽपि नित्यं दर्शनकांक्षिणो दर्शनं कांक्षन्त एव सन्ति । त्वया एतावत्पर्यन्तं दृष्टं विश्वरूपं देवा अपि न दृष्टवन्तः न पुनर्द्रक्ष्यन्ति वा ॥ ५२ ॥

नाहं वेदैर्न तपसा न दानेन न चेज्यया ॥
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥ ५२ ॥

कथं विश्वरूपदर्शनं दुर्लभमित्यत्राह । यथा येन प्रकारेण मां त्वं दृष्टवानसि एवंविधोऽहं वेदैः ऋग्यजुरादिवेदाध्ययनेन, तपसा उग्रेण तपसा वा दानेन वा इज्यया यज्ञादिना वा द्रष्टुं न शक्य एव । " नायमात्मा

प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष विवृणुते तनूं स्वाम् ॥ " इति श्वेताश्वतरश्रुतौ परमात्मनः केवलशास्त्रज्ञान-गम्यत्वं निषिध्य सद्वर्तनैकगम्यत्वमुपदिष्टम् । सद्वर्तनं च सद्वस्तुनः परमात्मनः सेवैव । इयमेव सेवा भक्तिशब्देन व्यवह्रियते । महाकविः काळिदासः परमात्मानं स्थिरभक्तियोगलभ्यं निर्दिशति ! अतः कृष्णपरमात्मना भक्तेः प्राशस्त्यं यद्गीयते तत् शुभोदर्कं भाति । अस्यामपि भक्तौ फलकामनारहिता तु य भक्तिः स परमात्मनः प्रिया सती पराशब्देन व्यवह्रियते ! अनया पराभक्त्या पराशक्तिं परमात्मानं च सन्तोष्य जन्मसार्थक्यं संपाद्यमेव मानवैः । अतः वेदाध्ययनतपःप्रभृतिभिः केवलमहं द्रष्टुं न शक्य इति भगवता यदुक्तमत्र तदन्वर्थं संपद्यते ॥ ५३ ॥

**भक्त्या त्वनन्यया शक्यः अहमेवंविधोऽर्जुन ।**
**ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ॥ ५४ ॥**

कस्तर्हि त्वद्दर्शनोपाय इत्यत्राह । हे अर्जुन ! अनन्यया अनन्य-प्रयोजनया भक्त्या तु एवंविधोऽहं द्रष्टुं शक्यः । न दर्शनमात्रं भक्तेः फलं, अपि तु भक्तिः सर्वफलप्रदेत्याह ज्ञानमित्यादि । तत्त्वेन ज्ञातुं तत्त्वशः मत्तत्त्वं ज्ञातुं वा तत्त्वेन मां प्रवेष्टुं च । प्रवेशो नाम मुक्तिः । नद्याः समुद्र इव जीवस्य परमात्मन्येकीभाव एव मुक्तिः । अतो मत्तत्त्वज्ञानं मद्दर्शनं वा सर्वं भक्त्यैकलभ्यं न त्वन्योपायगम्यम् ॥ ४४ ॥

**मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गसर्जितः ।**
**निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ॥ ५५ ॥**

अतश्च हे पाण्डव अर्जुन ! यो मत्कर्मकृत् मदर्थमेव कर्माणि करोति । मत्परमः मामेव परमं प्राप्यं जानति, मद्भक्तो मय्येव भक्तः अत एव सङ्गवर्जितः मद्व्यतिरिक्तेष्वासक्तिरहितः सर्वभूतेषु सर्वप्राणिष्वपि निर्वैरो द्वेष-रहितश्च भवति सो मामेति प्राप्नोत्येव । न संशयोऽत्र । एवं सद्रूपस्य

परशिवस्य सेवया मानवः अहंकारममकारादिमलदोषं परिहृत्य निर्मलस्थितौ स्वतो निर्मले परशिवे संयुज्य शिवानन्दमनुभवन् सर्वानपि शिवभावनया प्रीणयन् सर्वं व्यवहारं शियाराधनदृष्ट्यैव निर्वहति । एवमेव सर्वत्र शिवदर्शनं शिवयोगदेव सिद्ध्यति । अतस्तथा सर्वैरपि प्रयतितव्यम् ॥ ५५ ॥



## द्वादशोऽध्यायः

पूर्वाध्यायान्ते 'मत्कर्मकृत्' इत्यादिना भक्तेः मोक्षहेतुत्वमुक्तम् । भक्तिश्च उपासनमेव । तथा च परमात्मोपासनमेव मुक्तिहेतुरित्युक्तं भवति । परमात्मोपासनं च सोपाधिकं निरुपाधिकं चेति द्विविधम् । तद्यद्देवतात्मना उपासनं सोपाधिकमुच्यते । निरस्तसमस्तोपाधिकपरशिवब्रह्मोपासनमेव निरुपाधिकमुच्यते । अनयोरुपासनयोः किं श्रेष्ठमिति जिज्ञासया अर्जुन उवाच--

**एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।**
**ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥ १ ॥**

ये भक्ता उपासकाः सततयुक्ताः नैरन्तर्येण त्वत्कर्मादिप्रवृत्तमनोविशिष्टास्सन्तः त्वामेवमुक्तविश्वरूपाकारमुपासते, ये चान्ये अक्षरं सततैकरूपमव्यक्तमकरणगोचरमरूपममूर्तं परमात्मानमुपासते तेषां मध्ये के योगवित्तमाः अतिशयेन योगविदः ? परमात्मनः संबद्धायाः साकारमूर्तेरुपासकस्य तन्निराकारस्थितिचिन्तकस्य च मध्ये कतरः श्रेष्ट इत्यर्जुनः पृच्छति ॥ १ ॥

**मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।**
**श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥ २ ॥**

एवं पृष्टः श्रीभगवानुवाच । मयि विश्वात्मके भगवति मनः

आवेश्य समाधाय ये उपासका नित्ययुक्ताः नित्यं सततं मय्येव युक्ताः योगनिष्ठास्सन्तः परया श्रेष्ठया श्रद्धयोपेताश्च सन्तः मां सर्वदेवतात्मकमिति मत्वा उपासते त एव मे युक्ततमाः योगवित्तमाः उभयोर्मध्ये श्रेष्ठा मताः सम्मताः। परमात्मानमेव तत्तद्देवतास्वरूपमिति भावयित्वा ये स्वीयामुपास्यदेवतां समर्चयन्ति त एव योगिश्रेष्ठा इति कीर्त्यन्ते ॥ २ ॥

ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥ ३ ॥
संन्नियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥ ४ ॥

अव्यक्तोपासकानां का गतिरित्यत्राह। ये तु उपासका इन्द्रियग्राममिन्द्रियसमूहं सन्नियम्य सम्यक् नियम्य इन्द्रियजयं कृत्वेत्यर्थः। सर्वत्र जगति रागद्वेषमये समबुद्धयस्तारतम्यबुद्धिरहिताः, अत एव सर्वभूतहिते सर्वेषामपि भूतानां प्राणिनां हिते रताः हिताशंसनपराः सन्तः, अक्षरं नाशरहितमनिर्देश्यं एवमिदमिति निर्देष्टुमनर्हं, सर्वत्रगमाकाशवत् सर्वव्यापकं, अत एव अचिंत्यं चिन्तयितुमशक्यं, कूटस्थं निर्विकारमचलं सर्वव्यापकत्वात् चलनादिरहितं, ध्रुवं शाश्वतमव्यक्तं कुत्रापि विशिष्यानभिव्यक्तं परमात्मतत्त्वं पर्युपासते तेऽपि मामेव अमूर्तपरमात्मानं प्राप्नुवन्ति। अतश्च उपासकद्वयोरपि फलं तावदेकरूपमेव ॥ ३—४ ॥

क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥ ५ ॥

एवं तर्हि कुतस्त्वदुपासका एव श्रेष्ठा इत्युच्यन्ते। मूर्तामूर्तरूपो भवानिति हि श्रूयते। भवदीयं मूर्तरूपमेवाखण्डं विश्वम्। विश्वप्रीणनमेव विश्वोपासनम्। तदपेक्षया भवन्मूर्तोपासनमेव श्रेष्ठमिति कथमुच्यतेऽनुभविभिः। मूर्तोपासकेभ्योऽप्यमूर्तोपासका एव श्रेष्ठा इति कुत उच्यत

इत्यस्य समाधानमाह । अव्यक्तासक्तचेतसां अव्यक्ते तादृशे विश्वव्यापकेऽमूर्ते तत्त्वे आसक्तं चेतः येषां तादृशां साधकानां क्लेशः स्वफलप्राप्तौ श्रमस्तैरनुभूयमानः अधिकतरः मन्मूर्तरूपोपासकापेक्षया अधिकः । अतो मदुपासका एव श्रेष्ठा इत्युच्यन्ते । यत्र कुत्रापि विग्रहे मद्भावनया ये अर्चयन्ति त एव मद्रूपार्चकाः । त एव अनायासेन फलं लभन्त इति तेषां श्रैष्ठ्यं भाव्यते । कुतः अव्यक्तोपासने क्लेशः अधिक इत्यत्राह अव्यक्ता हीति । हि यस्मात्कारणात् अव्यक्ता तादृशाव्यक्तोपासनरूपा गतिर्देहवद्भिः प्राणिभिर्दुःखं यथा तथा अवाप्यते । सा उपासना अत्यन्तं दुष्करेत्यर्थः । एवममूर्तोपासनस्य अतिक्लेशरूपत्वादेव मदीयव्यक्तरूपोपासका एव श्रेष्ठाः परिकीर्त्यन्त इत्यर्थः ॥ ५ ॥

**ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।**
**अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ ६ ॥**

**तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।**
**भवामि न चिरात्पार्थ मय्यावेशितचेतसाम् ॥ ७ ॥**

त्वदुपासकानां कुतः क्लेशो न्यून इति शङ्कायां यतस्तेषामहमेव रक्षको भवामि अतस्तेषां फलप्राप्तिः सुलभा भवतीत्याह । ये तु मदुपासकाः सर्वाण्यपि कर्माणि मयि संन्यस्य समर्प्य "यत्करोषि यदश्नासि—तत्कुरुष्व मदर्पणम्" इत्युक्तरीत्या समर्प्य मत्पराः मदेकचित्ताः अनन्येन अन्यप्रयोजनरहितेन मदेकफलेन योगेन भक्तियोगेन मां ध्यायन्तः चिन्तयन्त उपासते, हे पार्थ ! मयि परमात्मनि आवेशितचेतसां समाहितचित्तानां तेषां अहमेव मृत्युरूपसंसारसमुद्रात् न चिरात् शीघ्रमेव समुद्धर्ता सम्यगुद्धर्ता भवामि । एवं च तेषां योगक्षेमनिर्वहणस्य मयैव स्वीकृतत्वात् तेषां फलप्राप्तौ विलंबस्य च्युतेर्वा प्रसक्तिरेव नास्ति । अतो मद्भक्ता एव सर्वश्रेष्ठा इति परिगण्यन्ते ॥ ६-७ ॥

**मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।**
**निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ॥ ८ ॥**

अतश्च त्वमपि मय्येव विश्वात्मनि सकलदेवमये मय्येव मन आधत्स्व निवशय । बुद्धिमपि मय्येव निवेशय संस्थापय । एवं कुर्वन् त्वमत ऊर्ध्वमेतदनन्तरं मय्येव परमात्मनि निवसिष्यसि । मां परित्यज्यान्यत्र गन्तुमपि नास्त्यवकाशस्ते । अत्र संशयो नास्त्यैव ॥ ८ ॥

**अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् ।**
**अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय ॥ ९ ॥**

एवं स्वभक्तियोगमुपदिश्य भगवान् तदशक्तौ पर्वभेदानपि कृपयोपदिशति । अथ चित्तं मनो मयि स्थिरतया समाधातुं निवेशयितुमथ न शक्नोषि चेत् ततस्तर्हि अभ्यासयोगेन मयि चित्तनिवेशनाभ्यासरूपेण योगेन मामाप्तुं प्राप्तुमिच्छ प्रार्थय । भक्तो यदि तच्चित्तं परमात्मन्येव निधातुं न शक्नोति तदा तत्प्राप्तय एवाभ्यसेदिति भगवानत्रोपदिशति । भक्तः सर्वदा परमात्मसंयोगमेवापेक्षते यदि तदीया भक्तिः श्रद्धावती स्यात् । नो चेत्सः परमात्मने त रोचेत । निष्ठाविहीना भक्तिः इहपरसुखं न हि साधयति । शरणगीता निष्ठाविहीनस्य भक्ति श्रद्धाविहीनस्य व्यवहारं च निर्दाक्षिण्यतया खण्डयति । "यथैव चित्रप्रतिमाङ्कपाल्या संजायते नैव सुखं कदापि । यथैव चेक्षोः पटचित्रितस्य दंशाद्रसो न द्रवतीह तद्वत् ॥ निष्ठाविहीनस्य तु भक्तिरेषा देवस्य तुष्ट्यै न भवेत्कदापि । तथैव लोकव्यवहार एषो रसाय न स्याद्भवमोचके भवे ॥" इति । एवं भक्तिर्निष्ठावत्येव सती भवपाशं विमोचयितुं प्रभवति । एतत्प्रभावादेव भक्तः हृदये विराजमानेन परशिवेन संयोक्तुं अभ्यासदार्ढ्यात्संपद्यते ॥ ९ ॥

**अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव ।**
**मदर्थमपि कर्माणि कुर्वन्सिद्धिमवाप्स्यसि॥ १० ॥**

एतादृशेऽभ्यासे अभ्यासकरणेऽपि यदि त्वमसमर्थोऽसि न शक्नोषि तर्हि मत्कर्मपरमः मदर्थं कर्म मत्कर्म तदेव परममुद्देश्यं यस्य तादृशो भव। मदुद्देशेनैव कर्माणि कुरु न तु स्वार्थोद्देशेन ! एवं मदर्थं कर्माणि कुर्वन्नपि त्वं सिद्धिं क्रमशः फलप्राप्तिं अवाप्स्यसि। अत्र न संशयः। भगवत्प्राप्त्यभ्यासं कर्तुं यदि मानवो न शक्नोति तदा भगवत्प्राप्त्यर्थमेव सकलकर्मानुष्ठानमेवालमिति भगवान् सूचयति। दानादानादिकं सकलमपि व्यवहारं भगवतः प्रीतय एव निर्वोढुं प्रयतेत साधकः। तदापि भगवदनुग्रहं लब्धुं प्रभवत्येवेति परमात्मन आशयः॥ १० ॥

**अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः।**
**सर्वकर्मफलत्यागं ततः कुरु यतात्मवान्॥ ११ ॥**

अथ पुनरेतदपि कर्तुं मत्कर्मपरमो भूत्वा कर्माणि कर्तुमप्यशक्तोऽसि तथा स्थातुं न शक्नोषि यदि तर्हि मद्योगं मयि भक्तिरूपं योगमाश्रितः सन् यतात्मवान् संयतचित्तः ततः कारणात् सर्वकर्मफलत्यागं सर्वेषामपि कर्मणां फलस्य त्यागं कुरु। प्रातरारभ्य सायंपर्यन्तं यद्यदाचर्यते त्वया तत्तत्कर्मणः सर्वस्यापि फलं तदानीमेव मूर्तामूर्तरूपिणे मह्यं समर्पय। तेनापि क्रमशः चित्तशुद्ध्यादिना मत्प्राप्तिर्भवत्येव॥ ११ ॥

**श्रेयो हि ज्ञानमभ्यासात् ज्ञानाद्ध्यानं विशिष्यते।**
**ध्यानात्कर्मफलत्यागस्त्यागाच्छन्तिरनन्तरम्॥ १२ ॥**

एतादृशसर्वकर्मफलत्यागं स्तौति। अभ्यासात् अभ्यासयोगेन तत इत्युक्तादभ्यासात् ज्ञानं परमात्मतत्त्वज्ञानं श्रेयः उत्कृष्टम्। ज्ञानात्तु तादृशः परमात्मज्ञानात् तदीयं ध्यानं विशिष्यते श्रेष्ठं संपद्यते। ध्यानादपि कर्मफलत्यागो ह्यनुपदमुक्तः सर्वकर्मफलानां त्यागो विशिष्यते। अनन्तरं च त्यागात् शान्तिः क्रमशः चित्तसमाधानं भवत्येवेति शेषः॥ १२ ॥

अथ अध्यायशेषेण भक्तानामुपदेयान् गुणानाह—

**अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।**
**निर्ममो निरहङ्कारः समदुःखसुखः क्षमी ॥ १३ ॥**
**सन्तुष्टः सततं योगी यतात्मा दृढनिश्चयः ।**
**मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ॥ १४ ॥**

सर्वभूतानामपि अद्वेष्टा कमपि प्राणिनं न द्वेष्टि यः, अत एव सर्वत्र मैत्रो मित्रभावविशिष्टः । करुण एव च दयाविशिष्ट एव वर्तमानः निर्ममो ममतारहितः, निरहङ्कारोऽहङ्काररहितः, समदुःखसुखं दुःखं सुखं च समतया भावयन्, क्षमी क्षमाशीलः, सततं सदैव सन्तुष्टः न कदाप्यसन्तुष्टः योगी योगाभ्यासपरः यतात्मा नियमितचित्तः दृढनिश्चयः स्वलक्ष्येऽचञ्चलनिश्चयवान् मयि परमात्मनि अर्पितमनोबुद्धिः अर्पितं समर्पितं मनो बुद्धिश्च येन तादृशो यो मद्भक्तोऽस्ति सः मे मम प्रियोऽभिमतः । परमात्मन्येवासक्तस्तदर्थमेव जीवन् तत्प्रसादमेव भुञ्जन् तमेव सर्वत्र विषयप्रपञ्चे संपश्यन् साधकः सदा सन्तुष्टान्तरङ्गस्सदा परमात्मन्येव निवसन् तस्यैवातिप्रियो भवति ॥

**यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।**
**हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥ १५ ॥**

यस्मात् भक्तात् लोको नोद्विजते उद्वेगं न प्राप्नोति लोकाच्च यो नोद्विजते यं दृष्ट्वा लोको नोद्वेगं प्राप्नोति लोकं वा दृष्ट्वा य उद्वेगं न प्राप्नोति, अत एव हर्षामर्षभयोद्वेगैः हर्षस्सन्तोषः, अमर्षः कोपः, भयं प्रसिद्धं सर्वानुभूतं, उद्वेगः उद्विग्नता एभिर्मुक्तो यो भक्तः स च मे प्रियः प्रीतिविषयः ॥

**अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ।**
**सर्वारंभपरित्यागी यो मद्भक्तः स मे प्रियः ॥ १६ ॥**

अनपेक्षः देहेन्द्रियादिविषयेषु अपेक्षारहितः, अत एव शुचिः सदा परिशुद्धः, दक्षः समर्थः । उदासीनश्शत्रुमित्रभावादिरहितः, गतव्यथः विगतक्लेशः,सर्वारंभपरित्यागी । आरभ्यन्त इत्यारंभाः ऐहिकामुष्मिकफलदायकानि कर्माणि । तानि सर्वाण्यपि परित्यजन् यो मद्भक्तोऽस्ति स च मे प्रियः ॥

**यो न हृष्यति न द्वेष्टि न शोचति न कांक्षति ।**
**शुभाशुभपरित्यागी भक्तिमान्यः स मे प्रियः ॥ १७ ॥**

यः इष्टप्राप्तावपि न हृष्यति हर्षं न प्राप्नोति । एवमनिष्टप्राप्तावपि न च शोचति शोकं करोति न कमपि द्वेष्टि द्वेषं करोति, न कमपि कांक्षति इच्छति वा, अत एव शुभाशुभपरित्यागी कर्मसु शुभाशुभयोः विवेचनां विहाय कर्तव्यदृष्ट्यैव सर्वाणि कुर्वन् यो भक्तिमान् वर्तते स च मे प्रियः । एवं भक्तः सर्वदा शुभाशुभचिन्तां विहाय परमात्मचिन्तन एव मग्नो वर्तते । सः परमात्मनमेवं प्रार्थयतेऽनुदिनम् । "कोऽयं कुतो ह्येष समागतोऽत्र बन्धुश्च को वेति न चिन्तयैवम् । अयं मदीयो मम सेवकोऽयं मय्येव संयुज्यत एष भृत्यः ॥ इत्येव सञ्चिन्तय सङ्गमेश त्वदीयभृत्यं सुतमेव भावय । " इति । एवं भक्तः शिवतादात्म्यसंपादनाय त्रिकरणपूर्वकं प्रयतमानोऽप्यन्ते अनन्यगतिकतया शिव एव स्वरक्षणभारं समर्पयति । शरणगीता देवभक्तसंबन्धमेव हृदयङ्गमतया निरूपयति । महात्मनो बसवार्यस्य परमात्मनि सर्वार्पणभाव एवं निर्दिश्यते तत्र । "त्वमेव माता च पिता-त्वमेव बन्धुस्त्वमेवासि तथैव मित्रम् । विना भवन्तं न च मेऽस्ति कश्चित्-सङ्गार्यदेव शृणुताद्वचो मे ॥ यथैव रोचेत तथा कुरुष्व दुग्धेऽथवा वारिणि निक्षिप त्वम् । " इति एवं परमेश्वराधीनो भक्तः लोकादभीतो नित्यतृप्तः स्वदेहेन्द्रियादिकं सर्वमपि परमेश्वरसेवायै समुपयुञ्जन् तदीयमेवेति भावयति । तस्य तावदीश्वरेण संबन्ध एवं वर्ण्यते शरणगीतायाम् । " यतस्त्वदीया तनुरित्यवैमि ततो ममान्या तनुरेव नास्ति । यस्मात्त्वदीयान्मनसो विभिन्नं मनस्तु नैवेति विनिश्चयो मे ॥ यतस्त्वदीयं धनमेव सर्वं ततो विभिन्नं धनमेव नास्ति । ज्ञात्वा त्वदीयं त्रयमेतदेवं कथं नु विद्येत परो विचारः ॥ " इति । एवं भक्तो यथार्थतया निर्ममो निरभिमानश्च वसन् तदानीन्तनं सुखदुःखादिकं सर्वमपि भगवत्प्रसादभावनया अनुभवन् नित्यसुखी संपद्यते । भगवदर्पणेऽपि सः शुभाऽशुभदृष्टिं परित्यजति । अर्पणीयस्य वस्तुनः

सर्वस्यापि भगवद्दत्तत्वात् तत्र इदमर्पणीयमिदमनर्प्यमिति विवेचनामेव सः न करोति । अयमंशः शरणगीतायां सम्यक् प्रतिपाद्यते । "गोक्षीरमुच्छिष्टमथोदकं तु मतत्स्यस्य तावद्भ्रमरस्य पुष्पम् । कथं नु कुर्यां भवदीयपूजां शंभो गुरो त्वां कथमर्चयामि । उच्छिष्टमेतत्परिमार्ष्टुमद्य मया न शक्यं गुरुसङ्गमार्य । यदेव दत्तं भवता मदर्थं तदेव तुभ्यं हि समर्प्यते नु" ॥ इति । एवमेव भक्तः प्रपञ्चे हर्षशोकौ विहाय स्वीयमपि भोग्यवस्तुजातं परमात्मने समर्प्य निश्चिन्ततया निवसति ॥ १७ ॥

**समः शत्रौ च मित्रे च तथा मानापमानयोः ।**
**शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः ॥ १८ ॥**
**तुल्यनिन्दास्तुतिर्मौनी सन्तुष्टो येन केनचित् ।**
**अनिकेतः स्थिरमतिर्भक्तिमान्मे प्रियो नरः ॥ १९ ॥**

शत्रौ मित्रे च समः समताभाववान्, तथा मानापमानयोरपि गौरवागौरवयोरपि समस्समभावनायुक्तः तदानीमपि निर्विकारतया नैश्चल्येन तिष्ठन्, तथैव शीतोष्णसुखदुःखेषु एतादृशेषु सुखदुःखोत्पादकेषु द्वन्द्वेषु समः समचित्तवृत्तिस्सन्, सङ्गविवर्जितः आसक्तिरहितः । तुल्यनिन्दास्तुति स्तुतिं निन्दां च समतया भावयन् । मौनी मौनवान् येन केनचिदल्पेनापि प्राप्तेन सन्तुष्टः सम्यक् तुष्टः अधिकं नापेक्षमाणो यथालाभतृप्त इत्यर्थः । अनिकेतः निकेत आश्रयो निवासस्तद्रहितः स्वगृहाद्यभिमानरहितः । स्थिरमतिः दृढबुद्धिर्यो भक्तिमान् मद्भक्तः सः नरो मे प्रियः प्रीतिविषयः । एवं भक्तस्सदा सरळजीवी यया कयाचिद्गौरवयुतया वृत्त्या जीवनं निर्वहन् संसारे सारवत्तरमीश्वरमेव सदा चिन्तयन् सर्वेष्वपि प्रापञ्चिकवस्तुषु साम्येनावस्थितं परमात्मनमेव पश्यन् आनन्दानुभवेनैव कालं यापयति । कश्चन भक्तः स्वीयां निर्मलां स्थितिमेवं वर्णयति । "अहौ वा हारे वा कुसुमशयने वा दृषदि वा । मणौ वा लोष्टे वा बलवति रिपौ वा सुहृदि वा ॥ तृणे

वा स्त्रैणे वा मम समदृशो यान्ति दिवसाः क्वचित्पुण्यारण्ये शिव शिव शिवेति प्रलपतः" ॥ इति । एवं भक्तः गृहारामादिसौकर्यमगणयन् यत्र कुत्रापि निवसन् परमात्मचिन्तन एव संसक्तो भवति । अत एव तस्य निर्मलहृदयेन सन्तुष्टो महादेवः तदीयं बाह्यवेषाडंबरादिकं न निरीक्षते । तस्य हार्दीं प्रार्थनां शरणगीता सर्वेषामपि साधकानां स्फूर्तिदादिकया रीत्या वर्णयति । स सर्वदा स्वीयमायामोहचांचल्यपरिहारायैव परमात्मन्यहर्निशं प्रार्थयते । महात्मा सिद्धरामः श्रीगुरुमल्लिकार्जुनमेवं प्रार्थयते "मायामदं भञ्जय मल्लिकार्जुन प्रजागरं कायिकमुन्निबर्हय । चित्तस्य चाञ्चल्यमपोह्य नित्यं मोहप्रपञ्चं श्लथय त्वमेव ॥" इति । एवं भगवद्ध्यायेन अङ्गप्रकृतिं लिङ्गप्रकृतिकतया परिवर्तयितुं प्रवर्तमानाः शरणाः सर्वेषामादरणीया वर्तन्ते । एवमेव बसवार्यः स्वीयप्रकृतेः परिणमनमेवं निर्दिशति । "तवानुभवात्तनुरेव नष्टा तवानुभावान्मन एव नष्टम् । तवानुभावान्मम कर्म नष्टं न मेऽस्ति किञ्चिद्गुरुसङ्गमार्य ॥ पुनः पुनः प्रोच्य तवैव भक्ताः भक्त्याख्यरत्नाभरणं प्रदर्श्य । यथार्थयामासुरतश्च तत्र कर्ता भवात् कारयिताऽनुभोक्ता ॥" इति । एवं भक्तो देहे सर्वेन्द्रियेषु देवस्यैव वसतिं भावयित्वा तेन सहैव तत्सेवार्थं तस्मै स्वकीयं रूपादिभोगमपि भक्त्या समर्प्य तत्रैवात्मानमपि निवसन्तं भावयति । अतः तस्मिन् अहङ्कारममकारयोः प्रवृद्धये अवकाशो न विद्यत एव ॥ १९ ॥

**ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते ।**
**श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥ २० ॥**

एवं भक्तानामुपादेयान् गुणानुपवर्ण्य तादृग्गुणवतां प्रशंसयाऽध्याममुपसंहरति । ये तु नराः धर्म्यामृतं धर्म्यं च तदमृतं च धर्मादनपेतं आत्मतत्त्वहेतुभूतं चेदं यथोक्तमुपदेशं पर्युपासते तादृगुपदेशपराः भवन्ति तादृगुपदेशं जीवनरङ्गे व्यवहारसमयेऽपि लीलयैव सन्तोषेणानुतिष्ठन्ति । श्रद्धधानास्तस्मिन् उपदेशे श्रद्धायुक्ताः मत्परमाः मामेव परमप्राप्यं मन्वानाश्च ये

भक्ताः सन्ति ते मे मम अतीवात्यन्तं प्रियाः प्रीतिविषया भवन्ति । भक्तस्य भगवदुपासनक्रमं च शरणगीत; शरणानामनुभववाण्यैव स्पष्टं निर्दिशति । "भवान्गुरुर्मय्यगुणं गुणं वा दधातु यः त्याद्भवदास्तिदस्युः । नाहं भवद्भिः सदृशः कदाचित् भवेयमत्राप्रतिमस्वभाव ॥ भवद्दयापातत एव नन्वहं स्वरूपलाभं भगवन् प्रपन्नः । एवं सति त्वं मयि कोपमद्य कर्तुं कथं तयुज्यत इत्यवेहि ॥" इति । एवं भक्तस्सदा परमेश्वरस्य दयाभाजनं भूत्वा तदीय एव सन् तदिच्छानुरोधेन तत्तत्कर्म कुर्वन् पुण्यपापसंबन्धरहितः शिवानन्दमनुभवन्वर्तते । तदीयां नैष्ठिकीं निरपाराधस्थितिमेवं वर्णयति शरणगीता "मदीयदेहस्य भवानधीशस्तथैव चित्तद्रविणादिकस्य । ज्ञानं मदीयं तव वश्यमेतन्मोहो मदीयोऽपि तवैव वश्यः ॥ इत्थं मदीयेष्वखिलेषु देव भावत्कतामप्युपयत्सु सत्सु । आगः समेयाद्यदि मय्यकस्मादाप्नोपि तस्यापि फलं त्वमेव ॥" इति । एवं निर्दाक्षिण्यतया परमात्मने सर्वार्पण-भावेन शरणागतो भूत्वा भक्तः स्यस्य निरपराधित्वं संस्थापयति व्यवहार-निर्वहणसमये । सर्वास्वप्यवस्थासु सः परमात्मानमेवावलम्ब्य यतो जीवति ततस्तस्य योगक्षेमं परमात्मैव संपूर्णतया निर्वहति । भक्तेः पराकाष्ठदशायां भक्तस्य देवस्य च प्राक्तनो भेदोऽपि परिहीयते । तदानीं तस्य स्थितिरेव-मुपवर्ण्यते "त्वमेव भक्तिं कुरुषे तथैव भक्तस्त्वमेवासि च सेव्यरूपः । न दृष्टमेवेह भवत्पदं मया त्वयापि दत्तं न हि मे भवत्पदम् ॥" इति । अत्र "सेवकोऽपि त्वमेव, सेव्योऽपि त्वमेव ; त्वदीयं पदं न मया दृष्टं, त्वयापि मे पदं त्वदीयं न परिकल्पितम् । अतो दाता भोक्ता, कर्ता कारयिता इत्येवं सर्वोऽपि त्वमेव । न मे स्वतन्त्रतांप्रवृत्तये यः कश्चनावकाशो वर्तते" इत्येतादृशी निष्कल्मषा भक्तस्य स्थितिर्न कदापि तस्मिन् रागद्वेषौ कामक्रोधौ च वर्धयेत् । एवं सर्वे मानवाः सद्भक्ता भूत्वा अहङ्कारमभिमानं च परित्यज्य स्वदेशं आत्मीयतया प्रीणयन्तो नित्यतृप्ताः शान्त्या निवसन्त्विति श्रीकृष्णपरमात्मा निरीक्षते । शत्रुमित्रयोश्च समदृष्टिः, स्तुतिनिंदयोर्हि

समभावना च यत्र विलससि स एव भक्तः निर्विकारस्थितौ संतोषमनुभवति । स सर्वदा तद्रूपकं स्वजन्मबन्धुमवैति तथैव तत्स्तावकं जन्मशत्रुं भावयति । एवमेव सः सुखं नापेक्षते दुःखे च नोद्विजते । एतादृश्यां परिपक्वस्थितौ तस्य मनो बुद्धिः चित्तं अहङ्कारश्च उत्तमसंस्कारमधिगच्छन्ति । अत एव भगवान् सद्भक्तं स्वस्य प्रियतममिति मन्यते । एतादृशैर्भक्तैरेव लोककल्याणं साधनीयमिति परमात्मन आशयः । " मत्स्वामिन् भवदीयपादयुगळं संस्मर्तु-माशाधि माम् । चेलांतं हि वितत्य याचितुमुपक्रांतोऽस्मि देव त्वयि ॥ " इत्येवं भक्त परमात्मपादस्मरणमेव सर्वदा याचते । अतस्तस्य भक्तोऽतीव प्रियः संपद्यते । श्रीयायुनाचार्यैर्भगवत्प्रार्थनावसरे प्रकटित आशयः सर्वेषां साधकानां स्मरणीयो विराजते । "न भूतपूर्वं न च भावि किं वा सर्वं सहे मे सहजं हि दुःखम् । किंतु त्वदग्रे शरणागतानां पराभवो नाम न तेऽनुरूपः ॥" इति । एवं शरणागतानां रक्षणभारः देवेऽश्यं स्थेय इत्याशयं पूर्णविश्वासेनाविष्कुर्वन्ति ते महाशयाः । रक्षिष्यतीति विश्वासो यस्य दृढो वर्तते स एव भक्तो भवितुमर्हति । एतादृग्भक्तिमान् महादेवप्रसादेन नित्यसुखी संपद्यते । एवं भक्तियोगे शुद्धजीवस्य परमात्मनि एकीभावरूपं सामरस्य-मुपदिशन् श्रीकृष्णपरमात्मा भक्तेर्वैशिष्ट्यं सम्यक् प्रतिपादयति ॥ २० ॥



## त्रयोदशोऽध्यायः

अतीतेष्वध्यायेषु परमात्मा भक्त्यैकलभ्य इति बहुत्रोक्तम् । अथ तादृशभक्तिहेतुभूतं वस्तुतत्त्वज्ञानमुपदेष्टुमिच्छुः श्रीभगवानुवाच—

**इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।**
**एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥ १ ॥**

हे कौन्तेय अर्जुय! इदं पाञ्चभौतिकं शरीरं क्षेत्रमित्यभिधीयते तत्त्वज्ञैः। क्षतात् दुःखात् त्रायत इति क्षेत्रम्; इदमेव हि शरीरं ध्यानार्चनादिना तत्त्वज्ञानसाधनं सत् संसारदुःखनाशहेतुः संपद्यते। "शरीरमाद्यं खलु धर्मसाधनम्' इति हि महाकविरपि वदति। अथवा क्षेत्रवत् कर्मफलयोः सुखःदुखयोरस्मिन्नेव प्राप्त्या इदं शरीरं क्षेत्रमित्यभिधीयते। एतत् क्षेत्रं यो वेत्ति आपादमस्तकं ममेदं शरीरमिति यो जानाति सः क्षेत्रज्ञ इति तद्विदः तत्तत्त्वविदः प्राहुर्वदन्ति ॥ १ ॥

**क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत।**
**क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥ २ ॥**

कोऽयं क्षेत्रज्ञ इत्यत्राह—हे भारत अर्जुन! सर्वक्षेत्रेष्वपि विद्यमानं क्षेत्रज्ञं जीवं चापि मामेव मदंशमेव विद्धि। जीवब्रह्मणोरवस्थाभेदेन कालभेदेन च भेदवदभेदस्याप्यस्मत्सिद्धान्ते स्वाभाविकत्वाङ्गीकारात् अत्र अभेदनिर्देशो न विरुद्धः। क्षेत्रक्षेत्रज्ञयोः एतच्छरीरस्य तत्र विद्यमानस्य जीवस्य च विषये यत् ज्ञानमस्ति तदेवात्र ज्ञानमिति मे मतम्! ज्ञानं हि मोक्षसाधनम्। एतादृशक्षेत्रत्रक्षेज्ञानमेव मुक्तिहेतुरिति तदेव ज्ञानं नान्यदिति मम सम्मतमित्यर्थः। इममर्थं अमानित्वमदंभित्वं' इत्यारभ्य "एतत् ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा" इत्यंतेन विस्तरेण कथयिष्यति ॥

**तत्क्षेत्रं यच्च यादृक्च यद्विकारि यतश्च यत्।**
**स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥ ३ ॥**

एवं संग्रहेण क्षेत्रक्षेत्रज्ञयोः स्वरूपवैलक्षण्यादिकं विस्तरेणोपदेष्टुं प्रश्नान् स्वयमाक्षिपति। यच्च पूर्वनिर्दिष्टं तत् यादृक् यादृशं यादृशधर्मविशिष्टम्? यद्विकारि अस्य विकाराश्च के? यस्मादस्मात् क्षेत्रात् यत्कार्यमुत्पद्यते? स च यः क्षेत्रज्ञ उक्तः सः यत्प्रभावः यादृशप्रभावविशिष्टः? तत्सर्वं समासेन संक्षेपेण मे मत्सकाशात् शृणु। तदुभयोः स्वरूपं वैशिष्ठ्यं च वदाम्याकर्णय ॥

**ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।**
**ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥ ४ ॥**

उक्तमर्थमवश्यज्ञेयत्वाय प्रशंसति । ऋषिभिर्वसिष्ठादिभिर्बहुधा बहुप्रकारेण गीतं कथितम् । विविधैर्नानाविधैः छन्दोभिः ऋगादिवेदैः पृथग्विविच्य गीतं कथितम् । हेतुमद्भिः युक्तिमद्भिः विनिश्चितैर्निर्णीतार्थकैः ब्रह्मसूत्रपदैश्चैव "अथातो ब्रह्मजिज्ञासा" इत्यादिप्रसिद्धैर्ब्रह्मसूत्रगणैश्च गीतं प्रोक्तत्विदमेव ज्ञानम् । सकलशास्त्रप्रतिपाद्यो विषयोऽप्ययमेवेत्यर्थः ॥

**महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च ।**
**इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥ ५ ॥**
**इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः ।**
**एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥ ६ ॥**

क्षेत्रक्षेत्रज्ञावेवं प्रशंस्य प्रथमं क्षेत्रं विवृणोति । महाभूतानि पृथिव्यप्तेजोवाय्वाकाशरूपाणि पञ्च, अहङ्कारः, बुद्धिः, अव्यक्तमेव च प्रकृतिश्च, इन्द्रियाणि दशैकं च एकादशेन्द्रियाणि । पञ्चज्ञानेन्द्रियाणि पञ्चकर्मेन्द्रियाणि मनश्चेत्येकादशेन्द्रियाणि, इन्द्रियगोचराः पञ्चज्ञानेन्द्रियाणां घ्राणरसनचक्षुस्त्वक्छ्रोत्राणां विषयाः पञ्च गन्धरसरूपस्पर्शशब्दाः । एतानि सर्वाणि मिळित्वा क्षेत्रनाम्ना व्यवह्रियन्ते । इदं क्षेत्रस्वरूपनिरूपणम् । अथ तत्कार्यं प्राह— इच्छा, द्वेषः, दुःखं, संघातो देहेन्द्रियाणां संहतिः, चेतना चैतन्यं, धृतिः एतेषां धारणं इत्येवमिदं सर्वं क्षेत्रं विकारभूतम् । तथा च एतदेव क्षेत्रं सविकारं स्वकार्यवर्गविशिष्टं समासेन संक्षेपत उदाहृतं कथितम् ॥ ५–६ ॥

**अमानित्वमदंभित्वमहिंसा क्षान्तिरार्जवम् ।**
**आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥ ७ ॥**
**इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च ।**
**जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥ ८ ॥**

असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ ९ ॥
मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ १० ॥
अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥ ११ ॥

विवेकिनः अवश्योपादेयान् कांश्चिदंशात् उपदिशति पञ्चभिः श्लोकैः । अमानित्वं मानित्वं आत्मनः श्लाघनं, तदभावः । अदंभित्वं, स्वधर्मप्रकटीकरणं दंभः, तदभावः । अहिंसा प्राणिनामपीडनम् । क्षान्तिः परापराधप्राप्तावपि विकाररहित्यम् ! आर्जवं अन्तःकरणकौटिल्याभावः । आचार्योपासनं मोक्षमार्गोपदेष्टुराचार्यस्योपसर्पणम् । शौचं बाह्यान्तरशुद्धिः । स्थैर्यं तत्त्वमार्गे दृढाध्यवसायः । आत्मविनिग्रहः आत्मनो देहेन्द्रियादेर्विनिग्रहः संयमः । इन्द्रियार्थेषु शब्दादिषु पंञ्चसु वैराग्यं रागाभावः । अनहङ्कार अहंभावराहित्यम् । जन्ममृत्युजराव्याधिदुःखदोषाणां अनुदर्शनमनुचिन्तनमेव नित्यस्मरणम् । संसारदोषचिन्तनमित्यर्थः । असक्तिर्विषयेषु प्राप्तेष्वपि आसक्त्यभावः । पुत्रदारगृहादिषु बाह्यैश्वर्यादिसौकर्येषु अनभिष्वङ्गः अभितस्संबन्धाभावः । व्यामोहराहित्यमित्यर्थः । इष्टानिष्टोपपत्तिषु इष्टानिष्टप्राप्तावपि नित्यं सर्वदा समचित्तत्वमेकरीत्या चित्तवर्तनम् । मयि च सर्वव्यापके मूर्तामूर्तरूपिणि परमात्मनि अनन्ययोगेन प्रयोजनान्तरानुद्देशेन अव्यभिचारिणी एकरूपा भक्तिः । विविक्तदेशसेवित्वं एकान्तप्रदेशाश्रयणम् । जनसंसदि अरतिः प्राकृतानां जनानां समुदाये ख्यातिलाभाद्यर्थं रत्यभावः । अध्यात्यज्ञाननित्यत्वन्तु सदा अध्यात्मचिन्तनम् । तत्त्वज्ञानार्थदर्शनमपि उक्ततत्त्वज्ञानानां योऽर्थः फलरूपो मोक्षस्तस्यैव चिन्तनम् । इत्येवमेतदेव मोक्षसाधनत्वात् ज्ञानमिति प्रोक्तम् । अतोऽस्मदन्यथा यदस्ति तदज्ञानं ज्ञानाभावरूपमेव प्रोक्तम् । 'सा विद्या या विमुक्तये' इति मोक्षहेतुभूतमेव ज्ञानं ज्ञानमिति,

इतरविषयकज्ञानं तु संसारहेतुत्वात् अज्ञानमिति च कथ्यते । अतश्च मुमुक्षुभिः प्रथममेतानि अमानित्वादीन्युपादेयानि । एते गुणाः साधकस्यान्तरङ्गशुद्धिद्वारा तदीयां भक्तिं विकासयन्ति । तथा च निर्मलहृदये विराजमानेन महाप्रकाशेन संयुज्य तदीयमानन्दमनुभवितुं शक्नोति साधकः । परन्तु सः स्वात्मनि सद्गुणसंविधानाय यथाशक्ति प्रयतेत । एतादृगन्तरङ्गशोधनप्रकारः शरणगीतायामेवं निर्दिश्यते । "चौर्यं हिंसां नैव कुर्याः कदापि नैवासत्यं वाच्यमेवैकदापि । मा कार्षीस्त्वं कोपमापद्यदि स्यान्माऽन्यान्दृष्ट्वाऽसह्यमेवेह कुर्यात् ॥ आत्मानं त्वं मा प्रशंसीः कदापि माऽन्येषां त्वं निन्दकश्चापि भूयाः । एषैव शंभो बहिरङ्गशुद्धिस्तथैव चान्तःकरणे विशुद्धि ॥ सैवेह शुद्धिर्गुरुसङ्गमार्य त्वत्प्रीणनार्थं विहिता बहुज्ञैः ।" इति । एवमन्तरङ्गशुद्धिमानेव हृदयविकासेन महाप्रकाशं स्वस्मिन् सम्यगनुभूय सर्वेष्वपि तमेव प्रकाशं साक्षात्करोति । "यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति । तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥" इति च भगवतैवोपदिष्टम् । एतादृग्भक्तः सर्वत्र मृदुवाक्यमेव प्रयुञ्जानः सच्चारित्र्येण इहपरयोग्यतां संपादयति । परमेश्वारलीलाविनोदस्थानीयेऽस्मिन्प्रपंचे परस्परप्रीणनेन यः योग्यवर्तनवानिति परिगण्यते सः परत्र च योग्य एव भवेत् । योऽत्रैव दुर्वर्तनेन अयोग्य इति परिगण्यते सः न कुत्रापि पुरस्क्रियेत । एवं शीलशुद्धिरिहपरसुखसाधनाय अनिवार्येत्यनुभविनः कथयन्ति । अत एव यद्भगवानत्र सर्वेषां साधकानामवश्योपादेयान् गुणानत्रोपदिशति तत्समञ्जसं भाति ॥

**ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते ।**
**अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ॥ १२ ॥**

अमानित्वादिकमेव ज्ञानं चेत् तैश्च ज्ञेयं वस्तु किमित्यत्राह । ज्ञेयममानित्वादिसंपादनेन ज्ञेयं यद्वर्तते तत्प्रवक्ष्यामि । यत् ज्ञात्वा अमृतं शाश्वतसुखरूपं मोक्षमश्नुते अनुभवति साधकः किं तदित्यत्राह अनादिमदित्यादि । अनादिमत् उत्पत्तिरहितम् । इदं नाशराहित्यस्याप्युपलक्षणम् ।

एतादृशं परं ब्रह्म तदेव ज्ञेयम् । तच्च परं ब्रह्म सदित्यपि वक्तुमशक्यं, असदित्यपि वक्तुमशक्यम् । सकलप्रमाणातीतं वाङ्मनसोरगोचरं तदित्यर्थः । परशिवब्रह्म केवलं सद्रूपमेवेति न भाव्यतेऽनुभविभिः ; तथैव केवलमसद्रूप-मित्येव न भाव्यते । तथा च सदसदुभयात्मकमिति परिचिन्त्यम् । " अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन " इति भगवतैवोपदिष्टम् । सृष्टिकाले यत् सदसदात्मकं संपद्यते तदिदमेव परशिवब्रह्म प्रळये सदसदात्मकत्वमपि विहाय कैवल्यस्थितिरूपस्वस्थावस्थां भजते । " यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः " इति श्वेताश्वतरो महर्षिः परशिवस्य सदसदनु-भयात्मकत्वमुपदिशति । अयमेव शक्तिसङ्कोचकालीनः अवस्थाविशेषः । स एव परशिवः सृष्ट्युन्मुखावस्थायां शक्तिविकासेन सदसद्रूपतया परिणमति । तस्य शक्तिसंकोचावस्थैव अमूर्तस्थितिरिति च परिगण्यते ॥ १२ ॥

**सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ।**
**सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १३ ॥**

सदसदात्मकत्वादत्यन्तविलक्षणस्यास्य परशिवब्रह्मणः स्वरूपमद्य विशिष्य निर्दिशति । तत्परं ब्रह्म परशिवाख्यममूर्तं निरञ्जनमलक्षणपदास्पदमपि सर्वतः सर्वत्र पाणिपादं पाणिपादविशिष्टमेव सर्वत्र तत्तत्कार्यकरणशक्तम् । तथैव सर्वतोऽक्षिशिरोमुखन्तु चक्षुरादिकार्यकरणसमर्थम् । तथा लोके सर्वतः सर्वत्र श्रुतिमत् श्रोत्रेन्द्रियवत् । चक्षुरभावेऽपि सर्वं पश्यत्यमूर्तं ब्रह्म ; तथैव श्रोत्रेन्द्रियाभावेऽपि सर्वमपि शृणोति । न केवलं तदेव परन्तु सर्वमावृत्य व्याप्यैव तिष्ठति । एवं सर्वत्र स्थित्वा सर्वकार्यनिर्वाहकं तदेव परतत्त्वमित्यर्थः ॥ १४ ॥ -

**सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।**
**असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥ १४ ॥**

तत् परशिवाख्यं तत्त्वं सर्वेन्द्रियाणां चक्षुरादीनां गुणैस्तत्तत्कार्यैरेव

आभासमाभासते । तत्तदिन्द्रियकार्यैः रूपादिभिरेव तद्ग्रहणं भवितुमर्हतीति भावः । तथा च सर्वेन्द्रियव्यवहारमूलकरणभूतमिति यावत् । अथापि तद्वस्तु सर्वेन्द्रियविवर्जितमेव वर्तते । इन्द्रियादीनामाश्रयस्तु शरीरमेव न तु परं ब्रह्म । एवमेव तद्वस्तु असक्तं कुत्रापि सङ्गरहितम् । सर्वभृत् सर्वधारकम् । निर्गुणं सत्त्वरजस्तमोगुणरहितम् । अथापि गुणभोक्तृ तादृशगुणफलानुभवितृ च वर्तते ॥ १५ ॥

**बहिरन्तश्च भूतानामचरं चरमेव च ।**
**सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥ १५ ॥**

तत् परशिवतत्त्वं भूतानां प्राणिनां बहिरन्तस्सर्वत्र सदा वर्तमानं सर्वव्यापकमित्यर्थः । व्यापकत्वादेव अचरं गतिरहितम् । अथापि तत्तत्कार्यनिर्वहणात् चरमेव च सञ्चरणशीलमपि भवति । सूक्ष्मत्वात् तत् अविज्ञेयं नहीन्द्रियादिभिर्ज्ञातुमर्हम् । तत्परतत्त्वं एककाले दूरस्थमपि भूत्वा अन्तिके च समीपस्थमपि भवति । सर्वव्यापकत्वात् स्वातन्त्र्याच्च सः परशिवः नक्षत्रमण्डलादावपि वर्तमान एव अस्मासु तथैव सर्वप्राणिनामपि हृदयगुहायामावसति । परिपूर्णे तु तस्मिन् परस्परविरुद्धधर्माणामेकत्र समावेशनरूपं वैलक्षण्यं शब्दप्रमाणभूतयोः निगमागमयोः सम्यक् प्रदर्श्यते । अत्राप्यमुमेव क्रममनुसृत्य भगवानेव स्वस्यामूर्तस्थितेः प्रकृतिं हृदयंगमया रीत्या मितैरेव पदैर्निर्दिशति ॥ १५ ॥

**अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।**
**भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥ १६ ॥**

भूतेषु विभक्ततया दृश्यमानेषु प्राणिषु अविभक्ततया सर्वत्र एकरूपतया वर्तमानम् । अथापि विभक्तमिव परस्परविलक्षणमिव च स्थितम् । तत् भूतभर्तृ सर्वभूतधारकं ज्ञेयम् । तथैव ग्रसिष्णु प्रळयकाले सर्वसंहर्तृ । एवमेव प्रभविष्णु सृष्टिकाले सर्वस्रष्टृ च ज्ञेयम् । तथा च परशिवब्रह्मणोऽति-

विलक्षणत्वादेवं परस्परविरुद्धतया भासमानानां गुणानामपि तस्मिन्नेककाले संघटनायामपि न विरोध इति वैलक्षण्यकथनायैव तथोक्तम् ॥ १६ ॥

**ज्योतिषामपि मज्ज्योतिस्तमसः परमुच्यते ।**
**ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ॥ १७ ॥**

तत्परं ब्रह्म ज्योतिषां चन्द्रसूर्यादीनामपि ज्योतिः प्रकाशकम् । "तस्य भासा सर्वमिदं विभाति" "तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च तस्मात्प्रसृता पुराणी" इति श्रुतौ परमात्मनः सर्वप्रकाशकत्वं प्रसिद्धमेव । अत एव महालिङ्गाभिधं परशिवब्रह्म तमसः परं तमोऽतीतं परंज्योतिरित्युच्यते । 'भूतयोनिं समस्तसाक्षि तमसः परस्तात्" इति श्रुतौ परमात्मनः तमःपरत्वं स्पष्टं प्रतिपाद्यते । तच्च परतत्त्वं ज्ञानरूपमिति विज्ञेयम् । एवञ्च ज्ञानगम्यं तत्त्वज्ञानैकलभ्यं तत्परवस्तु सर्वस्य हृदि अन्तर्यामितया विष्ठितं स्थितम् ॥ १७ ॥

**इति क्षेत्रं तथा ज्ञान ज्ञेयं चोक्तं समासतः ।**
**मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥ १८ ॥**

इत्येवंरीत्या क्षेत्रं, तथा ज्ञानं, ज्ञेयं परशिवलिङ्गं च समासतः संक्षेपत उक्तं 'तत्क्षेत्रं यच्च' इत्यादिप्रतिज्ञानुरोधेन । एतदुक्तं विज्ञाय साधकः मद्भक्तो भूत्वा मद्भावाय अमूर्तशिवैक्यमधिगन्तुमनुभवितुं च उपपद्यते संपद्यते । "ब्रह्म वेद ब्रह्मैव भवति" इति श्रुत्या एतादृशः तत्त्वज्ञानात् परशिवसामरस्यरूपो मोक्षो भवतीत्यर्थः ॥ १८ ॥

**प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।**
**विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान् ॥ १९ ॥**

क्षेत्रक्षेत्रज्ञस्वरूपमुक्त्वा सप्तमाध्याये उक्तयोः प्रकृतिपुरुषयोः स्वरूपमत्र विमृशति । प्रकृतिं पुरुषं च उभावपि अनादी विद्धि । उभावपि नित्ये । तत्र विकारान् महदादिविकारजातं, गुणांश्च सत्त्वरजस्तमोगुणांश्च प्रकृतिसंभवान् विद्धि । इदं सर्वं प्रकृतेः संबद्धमित्यर्थः ॥ १९ ॥

कार्यकरणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥ २० ॥

कार्यं विकाररूपं शरीरम् । करणमिन्द्रियादीनि करणानि । तदुभयोः कर्तृत्वे हेतुस्तदुभयसृष्टौ कारणं प्रकृतिरुच्यते । प्रकृतिः शरीरेन्द्रियादिकारणमित्यर्थः । पुरुषस्तु सुखदुःखानां भोक्तृत्वे अनुभवितृत्वे हेतुरित्युच्यते । शारीरकादिकार्याणि प्रकृतिविकाररूपाण्येव । तत्फलभोक्ता तु पुरुष इत्युच्यते ॥ २० ॥

पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान्गुणान् ।
कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥ २१ ॥

पुरुषभोगमेवोपपादयति । अयं पुरुषश्चेतनः प्रकृतिस्थः प्रकृतिमध्यस्थः । शरीरस्थ इति यावत् । प्रकृतिजान् गुणान् प्रकृतिविकारभूतान् गुणान् सत्त्वरजस्तमांसि । तत्फलानीति यावत् । भुङ्क्ते अनुभवति । अस्य भोक्तुः पुरुषस्य सदसद्योनिजन्मसु सद्योनिप्राप्तौ असद्योनिप्राप्तौ वा समुचितब्राह्मणादिजन्मनो वा अनुचितश्वादिजन्मनो वा कारणं गुणसङ्ग एव त्रिगुणसंपर्क एवेत्यनुभविनोऽभिप्रयन्ति । सात्त्विकः उत्तमं जन्म प्राप्नोति । राजसतामसौ तु नीचं जन्म प्राप्नुत इत्यर्थः । अतः सर्वस्यास्य जननमरणरूपसंसारस्य मूलं गुणत्रयमेव ॥ २१ ॥

उपद्रष्टानुमन्ता च भर्ता भोक्ता महेश्वरः ।
परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परः ॥ २२ ॥

अस्मिन्देहे विद्यमानः परः पुरुषः परमात्मैव उपद्रष्टा सर्ववस्तूनां समीपे विद्यमानस्सन् द्रष्टा प्रेक्षकः साक्षी भवति । एवमेव क्रियमाणानां कर्मणामनुमन्ता च भवति । तथैव भर्ता सर्वरक्षणकर्ता च भवति । एवमेव भोक्ता सर्वफलानुभविता च संपद्यते । एवमद्भुतसामर्थ्यवान् स एव महेश्वरः परमात्मेति चाप्युक्तः सर्वत्र सर्वद वर्तमानः परमात्मैव सर्वं करोति सर्वमनुभवति चेत्यर्थः ॥ २२ ॥

**य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह ।**
**सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥ २३ ॥**

एवमुक्तायाः प्रकृतिपुरुषविवेचनायाः फलमाह । यः प्रकृतिं पुरुषं च तेषां प्रागुक्तैर्गुणैः सह वेत्ति सः सर्वथा सर्वप्रकारेण वर्तमानोऽपि भूयः नाभिजायते न जन्म प्राप्नोति । पुनर्जन्मनिवृत्त्या मुक्तो भवतीत्यर्थः । मन इन्द्रियाणि च प्रकृतिशब्देन निर्दिश्यन्ते । तानि सर्वदा गुणैर्व्यापृतान्येव वर्तन्ते । अनेन गुणसङ्गेन पुरुषे उत्पद्यमानानि रागद्वेषसुखदुःखादिद्वन्द्वानि आत्मनि संबध्यन्ते । अतः प्रकृतिपुरुषयोः गुणैर्यः संबन्धः संघटनात्मकोऽस्ति सः पुरुषेण यदि ज्ञायते तदैव तेन सर्वोऽपि व्यवहारः स्वाभाविकतया प्रवर्तत इति यथार्था परिस्थितिर्बुध्यते । अयमेव विवेकः पुरुषस्य बन्धविमोचनहेतुरिति परिगण्यते । एतादृग्विवेकी यत्र कुत्रापि येन केनापि संतुष्टः यया कयापि वृत्त्या जीवनं निर्वहन् निर्मलो निर्ममश्च निवसति । तस्य विवेकोऽप्येवं प्रसरति । 'स्वस्य प्रकृतेश्च संघटको यः परमात्मा सन्निहितः स एव तत्र तत्र अन्तर्नियामकस्सन् तच्चेतनांशभूतेन जीवेन तच्छक्त्यंशभूतायाः प्रकृत्यास्सकाशात् सर्वं कार्यं निर्वाहयति ।' एतादृगेव विवेकोऽत्र अभीप्स्यते । वस्तुतः परमात्मसान्निध्यादेव पुरुषाख्यो जीवः प्रकृत्या सह व्यवहर्तुं प्रभवति । प्रकृतिरपि तत्सान्निध्यादेव चेतनेव सर्वत्र प्रवर्तते । एवं सहजतया प्रवर्तमानं संसारचक्रं यो वेत्ति सः तत्संबन्धात्परिमुच्यते । संसारोऽपि पुरुषाय वैषयिकमेव भोगं प्रतिशृणोति । अयमेव भोगः पुरुषमन्धयन् प्रकृतिविलीनं करोति । अत एव पुरुषस्य बन्धनिवृत्तये प्रकृतिगुणविज्ञानमावश्यकमित्यनुभविनो वदन्ति । पञ्चेंद्रियेषु मनसि च सहजतया विराजमानाय परमेश्वराय तानि सर्वाण्यपींद्रियसुखानि यदि पुरुषः भक्त्या समर्पयति तदा तान्येव तत्प्रसादरूपतामापद्यन्ते । इदमेव षट्स्थलोपासनमुच्यते । पुरुषेण षडिन्द्रियस्थायेश्वराय षड्विधभक्तिभिः षड्विधानामिन्द्रियसुखानां समर्पणमेव षट्स्थलोपासनमित्यभिधीयते । इदमेवोपासनं देहे प्रवर्तमानस्य प्रकृतिपरमात्म-

व्यवहारस्य परिचयं पुरुषायोत्पादयति । अनेन च परिचयेन पुरुषस्य प्रकृतिसंसर्गः परिहीयते । पुरुषो यदा परमात्मनः संबन्धमभिवर्धयते तदा तस्य प्रकृत्याः संबन्धः क्रमशः क्षीयते । इयमेव प्रकृतिपुरुषविवेचनेत्युच्यते । एतादृशो विवेकः षट्स्थलात्मकस्य परमेश्वरस्य साहजिकं षडिन्द्रियसंबन्धमवलंबते । षडिन्द्रियेषु वर्तमानः परमात्मैव शक्तिविकासेन ईश्वर इति, शक्तिसङ्कोचेन जीव इति च व्यवह्रियते । अविवेकी जीवः सर्वाणीन्द्रियसुखानि स्वीयानि भावयति ; अत एव तत्प्राप्तये महद्दुःखमनुभवति च । विवेकी जीवस्तु तान्येव सुखदुःखानि ईश्वरप्रसादभावनया स्वीकृत्य नित्यसुखी संपद्यते । ' अहङ्कारविमूढात्मा कर्ताहमिति मन्यते " इति भगवानेव निर्दिशत्यविवेकिनः कर्तृत्वभावनाम् । विवेकिनि तावदस्याः भावनायाः प्रवृत्तिरेव न जायते । अतो वर्धिष्णूनां सर्वेषां षडिंद्रियेषु निर्लिप्ततया स्थितस्येश्वरस्यानुभव आवश्यकः । अनेनैव षट्स्थलोपासनरूपज्ञानेन मानवो निर्मलो भूत्वा शक्तिविकासेन जगदिदमेव शिवदृष्ट्या पुरस्कुर्वन् ईश्वरः संपद्यते । तस्य तावत्पुनर्जन्म नास्त्येव ॥ २३ ॥

**ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ।**
**अन्ये सांख्येन योगेन कर्मयोगेन चापरे ॥ २४ ॥**

परमात्मदर्शने कांश्चित्प्रकारान् निर्दिशति । केचिदनुभविनः ध्यानेन तैलधारावत्परमात्मसततचिन्तनेन आत्मनि बुद्धौ आत्मानमात्मना ध्यानसंस्कृतेनान्तःकरणेन पश्यन्ति । अन्ये सांख्येन योगेन ज्ञानयोगेन आत्मानं आत्मनि पश्यन्ति । अपरे च कर्मयोगेन स्वार्थबुद्धिं परित्यज्य कर्तव्यदृष्ट्या परमात्मप्रीत्यर्थमेव कर्मानुष्ठानरूपेण कायकाय्येन कर्मयोगेन परमात्मानं आत्मनि स्वस्मिन् पश्यन्ति । एवं केचन योगिनः हृदये विराजमानं परमात्मानं निरन्तरं चिन्तयन्तस्तत्रैव मनोबुध्यादिकं निवेश्य स्वयमपि विलीयन्ते । अयं च ध्यानयोगः वीरशैवसंप्रदाये प्राणलिङ्गिन उपासनायामनुष्ठियते । प्राणलिङ्गं सर्वदा ध्यानविषयमेव । केचित्साधकाः ज्ञानयोगमवलंबन्ते । साधको

ह्यात्मानं परमात्मांशभूतत्वात् तत्संबन्धिनमिति यज्जानाति तदेव ज्ञानयोगः। तथैव स्वस्मिन् प्रकृतौ च स एव परमात्मा स्वकल्याणसाधनाय निवसतीति यज्ज्ञायते तदपि ज्ञानयोग एव। अयं च ज्ञानयोगः सर्वेषां साधकानां प्रधानमवलंबनम्। देहेन्द्रियैर्व्यवहरतः शुद्धजीवस्य स्वस्मिन्नन्तर्यामितया निवसतो महादेवस्य च ज्ञानमध्यात्मसाधने विकासाय प्राधान्येनापेक्ष्यते। एतादृशदिव्यज्ञानामृतेन सिक्त एव साधकः परित्यक्तमलदोषो भूत्वा भक्तस्सञ्जायते। अयमेव भक्तः स्वीयसद्वर्तनेन सर्वेन्द्रियेषु निवसतः परमेश्वरस्य अतीव प्रियो भूत्वा माहेश्वरः संपद्यते। अयमेव माहेश्वरः स्वावृतं जगत्सर्वं शिवप्रसादभावनया प्रीणयन् प्रसन्नचेता भूत्वा प्रसादी संपद्यते। एतादृगेव प्रसादी सुनिर्मले स्वान्तरङ्गे महाप्रकाशरूपं प्राणलिङ्गमनुभवन् प्राणलिङ्गी संपद्यते। अयमेव प्राणलिङ्गी स्वस्य महालिङ्गस्य च भेदमजानन् लिङ्गानन्दे विलीय बाह्यां भेददृष्टिमपि विजहाति। प्राणलिंगानुभवेन निरस्तसमस्तकर्मपाशः साधकः आनन्दमये परमात्मनि सर्वथा शरणागतः स्वस्य व्यक्तित्वमपि विस्मरति। प्राणलिंगानुभववान् शिवमेव शरणं प्रपद्य तस्मिन् विलीनः स्वस्य शिवाद्भेदं न जानाति। भक्तस्थितिमारभ्य शरणस्थितिपर्यन्तं साधकः ज्ञानयोगस्यावलंबनेन कर्मयोगमनुतिष्ठन्नेव वर्तते। ज्ञानमवलम्ब्यैव यत्र कर्माचर्यते तत्रैव कर्मयोगः प्रपद्यते। नो चेत् तत्केवलं लौकिकं कर्मेत्येव भाव्येत। कर्म उदरपोषणाय यद्याचर्यते तदा कर्मयोगो ह्यात्मकल्याणाय लोककल्याणय चानुष्ठीयते। एतादृशेन कर्मयोगेन आत्मानं आत्मनि पश्यन्ति केचन साधकाः। एते त्रयोऽपि योगाः षट्स्थलोपासनमार्गे अनुस्यूततया मिळिताः साधकं भक्तस्थित्या शरणस्थितिपर्यन्तं देहेन्द्रियसहकारेणैवानायासेन आनयन्तो विराजन्ते। साधकः सर्वमपि प्रपञ्चं भक्तस्थितौ शिवभावनया शुश्रूषयन् माहेश्वरस्थितौ तथैवात्मीयतया प्रीणयन्, प्रसादिस्थितौ तमेव प्रपंचं प्रसादमिति भावयन्, प्राणलिंगिस्थितौ तमेव शिवात्मकत्वेन बहिरंतश्चानुभवन्, शरणस्थितौ स्वस्य जगद्रूपस्य परमेश्वरस्य च भेदमजान-

न्नेवानन्दमनुभवति। एतादृग्योगी लोके व्यवहरन्नपि तदासक्तिरहितः स्वार्थशून्यश्च वर्तमानः सर्वदा लोकहितैकदर्शीनित्यसुखी संपद्यते। सोऽपि निर्मले मनसि विराजमाने स्वांशिनि महादेवे शिखिकर्पूरयोगेन समरसतया विलीनः एकीभावमुपेतो महादेव एव संपद्यते। एवमेव योगत्रयसमावेशभूतस्य षट्स्थलोपासनयोगस्य सदनुष्ठानेन साधकास्सर्वेऽपि स्वान्तरङ्गस्थस्य महादेवस्य परिचयमधिगन्तुं प्रभवन्ति। अयमेव मानवकल्याणसाधको योगमार्गः गीतायामादित आरभ्य विस्तरशो निरूपितः ॥ २४ ॥

**अन्ये त्वेवमजानन्तः श्रुत्वान्येभ्य उपासते।**
**तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥ २५ ॥**

अन्ये तु एवं यथोक्तमात्मस्वरूपमजानन्तः अन्येभ्य आचार्येभ्यस्तत्त्वं श्रुत्वा आत्मानमुपासते। "श्रोतव्यो मंतव्यो निदिध्यासितव्यः" इति श्रुतेः आत्मविचारः प्रथमं श्रोतव्यः खलु। एवमेव श्रुतिपरायणाः तत्त्वश्रवणपरास्तेऽपि च मृत्युं संसारमतितरन्त्येव अतिक्रामन्त्येव। श्रवणपरा अपि संसारपाशान्मुक्ताः मोक्षं प्राप्नुवन्त्येव। एवं केवलश्रवणमननद्वारापि देहे शिवतत्त्वं विज्ञाय तदीयषट्स्थललीलायां पूर्णसहकारेण साधकः शिवयोगसुखं विन्दत एवेति भगवान् सर्वेषां साधकानां सुलभोपायमुपदिशत्यत्र ॥

**यावत्सञ्जायते किञ्चित्सत्त्वं स्थावरजंगमम्।**
**क्षेत्रक्षेत्रज्ञसंयोगात् तद्विद्धि भरतर्षभ ॥ २६ ॥**

अथ उपक्रमश्लोकोक्तं क्षेत्रक्षेत्रज्ञस्वरूपमधिकृत्य अवशिष्टं वदन् तद्विचारमुपसंहरति। हे भरतर्षभ अर्जुन! यावत्किंचित् यत्किंचित् स्थावरं वृक्षादिकं जङ्गमं पशुपक्ष्यादिकं वा सत्त्वं प्राणिजातं जायते तत् क्षेत्रक्षेत्रज्ञसंयोगात् उक्तस्य क्षेत्रस्य क्षेत्रज्ञस्य च संयोगादेवेति विद्धि। देहे प्रवर्तमानास्सर्वे व्यवहाराः देहजीवसंयोगं यथा अपेक्षन्ते तथा प्रपंचे प्रवर्तमानाः सर्वे सृष्ट्यादिव्यापाराः देहस्थानीयायाः प्रकृत्याख्यायाः मायाशक्तेः

मायापतिना परमेश्वरेण सहजतया विलसन्तं संबन्धपपेक्षन्ते । तथा च चराचरात्मकोऽयं प्रपंचस्सर्वोऽपि परमेश्वरमाययोर्नित्यसम्पर्कजन्य एव । अत एव जगति विद्यमानेषु सर्वेष्वपि वस्तुषु परमेश्वरः सद्रूपेण स्वयमेव विलसति । एतत्परिज्ञानेन सर्वत्र साधकानां सर्वेषामपि शिवभावना सहजतया उदेति । शिवविरहितस्य वस्तुन एव न कुत्राप्युपलभ्यमानत्वात् प्रकाशरूपेण शिवेन संयुक्तस्य एकैकस्यापि वस्तुनो याथार्थ्येन पुरस्करणमेव शिवज्ञानं शिवभावना-चेत्यनेकधा व्यवह्रियते । एवं सर्वमंगळकरस्य सार्वत्रिकस्य सर्वसन्निहितस्य शिवस्य नित्यस्मरणात् लोके व्यवहरणं साधकान् सर्वदा सुखयतीत्युपदिशति भगवानत्र ॥ २५ ॥

समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥ २७ ॥

अथ क्षेत्रज्ञं विविच्य दर्शयति । सर्वेषु भूतेषु कीटादारभ्य मनुष्य-पर्यन्तेषु सर्वप्राणिषु समं तिष्ठन्तं समतया वर्तमानम् । तारतम्यं तु कर्मकृत-मिति भावः । एवमेव दैहिकस्य तारतम्यस्य कर्मकृतत्वात् देहे स्थित्वापि स्वतः परमेश्वरं अमूर्तपरमात्मनो दिव्यांशभूतं, विनश्यत्सु देहादिषु नाशं प्राप्तवत्स्वपि स्वयमविनश्यन्तं नाशमनापद्यमानं क्षेत्रज्ञं शरीरस्वामिनं प्राण-लिङ्गाह्वयं हृदयस्थं प्रभुं यो जीव पश्यति निरन्तरोपासनेन साक्षात्करोति स एव पश्यति प्रशस्तदर्शनवानिति ज्ञायते । इतरे तु अन्धा एव भाव्यन्ते द्रष्टव्यस्यादर्शनात् । अयमेव प्राणलिंगाभिधो महादेवः सर्वत्र निर्विकारतया तिष्ठन् । उदासीनवदासीन इत्यर्थः । जीवानां सर्वेष्वपि व्यवहारेषु साक्षिभूतः तदुद्धारायैवानेकानवकाशान्परिकल्पयति । तथापि अविवकिनां मनोनेत्रं तत्र न प्रवर्तत एव । एतदपरिज्ञानेन मानवः प्रणष्टसर्वशक्तिर्मुह्यमानः क्षणं शोचन्नपि इन्द्रियाणां दुष्प्रेरणानुरोधेन समनन्तरमेव भोगे ह्यनुरज्यते । एवमतिभोगासक्तो जीवः युक्तायुक्तविवेकरहितस्सन् अन्धः संपद्यते । एतादृशमविवेकिनं विवेकिना सह तोलनेनैवं निर्दिशति शरणगीता “ अन्या मदीया कृतिरेव पश्य

वचस्तथान्यद्हृदि नास्ति शुद्धिः । यद्यैकरूप्यं वचने कृतौ च तदान्तरे तिष्ठति संगमार्यः ॥" इति । तत्रैव बसवार्यः आत्मशोधनावसरे स्वस्य भक्तिदारिद्र्यं पश्यन् तदर्थं परिशोचति । अयमस्य सत्यशोधनमार्गोऽस्मासु बहिरन्तश्च दिव्यां स्फूर्तिमुत्पादयति । "देहः कृशो नैव भवेद्यदा तु समष्टिभावे मनसोर्द्वयोश्च । रोमोद्गमो नैव यदा स्फुरेत्तु स्पर्शान्मिथो वारि पतेन्न नेत्रयोः ॥ उक्तौ न दृश्येत हि गद्गदस्वरः संगार्यभक्तेरिदमेव चिह्नम् । यतो न दृष्टं मयि सर्वमेतत् ततो ह्यहं डांभिकवेषधारी ॥" इति । एवं देहे विराजमानं शिवं विज्ञाय तदर्थं देहं मन इन्द्रियादिकं यो विनियुङ्क्ते स एव शिवस्य कृपाप्रसादयोर्भाजनं भवति । स एव चक्षुष्मान् भूत्वा साधुषु पापिष्वपि शिवमेव पश्यन् सर्वत्र समभावनयैव व्यवहरन् शिवयोगी भवति । नो चेत् सः सर्वत्र विद्यमानस्य शिवस्य दर्शनाऽलाभेन अन्ध एव भवेत् । अयमाशयः श्वेताश्वतरश्रुतौ सम्यगाविष्क्रियते । "अग्निर्यत्राभिमथ्यते वायुर्यत्राधिरुध्यते । सोमो यत्रातिरिच्यते तत्र संजायते मनः ॥" इति । अत्राभिहितमग्निमथनमेव ज्ञानयोग उच्यते । वाय्वधिरोहणमेव कर्मयोग अभिधीयते । अनेन ज्ञानक्रियासमन्वयमार्गेण प्राप्यं सोमातिरेचनं नाम जीवशिवसंयोग एव । शिवस्य सान्निध्यं भावयित्वा तत्संयोगाय प्राणादिवायुं निरुध्य सुषुम्नामार्गेण यः प्रयाति सोऽवश्यं उमाशक्तिविशिष्टेन परमेश्वरेण संयुज्यत एव । तदानीं तदीयं मनः मानवीं प्रकृतिं विहाय दैवीं प्रकृतिमाप्नोति । एतादृशीं स्थितिमधिगतवानेव पुरुषः चक्षुष्मान् भूत्वा सर्वत्र शिवमेव पश्यति । अन्ये अन्धेनैव नीयमाना अन्धा इव व्यर्थं जीवन्तीत्यर्थः ॥ २७ ॥

**समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम् ।**
**न हिनस्त्यात्मनात्मानं ततो याति परां गतिम् ॥ २८ ॥**

एतदात्मतत्त्वं ये न पश्यन्ति ते आत्मघातका एव भवेयुरित्याह । सर्वत्र प्राणिजातेषु समं समतया समवस्थितमीश्वरमेतत्क्षेत्रनियन्तारमात्मानं पश्यन् हि मनुष्यः आत्मना आत्मानं न हिनस्ति न नाशितवान् भवति ।

ततः एवमात्मना आत्मनोऽनाशनेन आत्मदर्शनेन सः परां गतिं परमपदं मोक्षं याति प्राप्नोति। आत्मदर्शिनो हि मोक्षः करस्थ एव। यः देहेन्द्रियादिभिर्व्यवहरन्नप्यात्मानमेव न पश्यति तस्य आत्मनाशो नियत एव भवेत्। यः आत्मानं पश्यति सः स्वान्तर्गतमीश्वरमपि पश्यति। आत्मा परमात्मा च चिद्रूपत्वात्परस्परमेकजातीयौ वर्तेते। तयोरंशांशिभावस्संबन्धोऽपि वर्तते। अल्पशक्तिकः सङ्कुचितश्चात्मा देहेन्द्रियैर्जीवन् जीव इति व्यवह्रियते। सः तज्जातीयस्यैव परमात्मनो दिव्यदर्शनेन उपासनेन च अपरिमिताद्भुतशक्तिमान् भवति। सः न कदापि विनश्यति। अत्रैव आनन्दमयो भूत्वा नित्यसुखमनुभवन् तदेव सुखं शाश्वतिकतया देहत्यागादनन्तरमप्यनुभवन् वर्तते सः। एतादृशमात्मकल्याणं सर्वैरपि वार्धिष्णुभिः साधनीयम् ॥ २८ ॥

**प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः।**
**यः पश्यति तथात्मानमकर्तारं च पश्यति ॥ २९ ॥**

आत्मनोऽकर्तृत्वमुपदिशति। त्रिगुणद्रव्येणैव सर्वशः सर्वप्रकारेणापि क्रियमाणानि कर्माणि। "प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः" इत्यादि बहुधोक्तमेव। एवं यः पश्यति सः आत्मानमकर्तरमेव पश्यति। "नैव किञ्चित्करोमीति युक्तो मन्येत तत्त्ववित्" इत्याद्यपि बहुधोक्तम्। देहस्थः परमेश्वरः स्वीयैरिंद्रियादिभिः सर्वान् व्यवहारान् निर्वाहयन् निर्लिप्ततया विराजते। प्रकृतिपरिणामभूतोऽयं देहः परमात्मसंबद्ध एव। अतो देहेन निर्वर्त्यमानानि सर्वाण्यपि कर्माणि परमात्मनैव निरूढानीति विवेकी पश्यति। दानादानादिकः सर्वोऽपि दैनंदिनो व्यवहारः परमात्मकर्तृक एवेति भावयन् तत्त्वज्ञानी स्वमात्मानमकर्तारं विजानाति। परमात्मसान्निध्येन प्रकृतिगुणाः जडा अपि चैतन्यवंत इव सर्वं व्यवहारं निर्वहंति। अतो विवेकी सर्वेष्वपि व्यवहारेषु स्वमकर्तारं केवलनिमित्तमात्रं भावयति। भगवत्सान्निध्येन प्रकृतिकर्तृकं सर्वव्यवहारनिर्वहणरूपं यज्ज्ञानं यैरनुभूयते तेषु स्वकर्तृत्वभावना सहजतया नोदेत्येव। एतद्भावनारहितत्वादेव मानवाः

अहङ्कारममकाराभ्यां विलसन्तः परमात्मनो भक्तानुग्रहलीलामेव विस्मृतवन्तः। अत एव बहवो जनाः स्त्रियः पुरुषाश्च आत्मज्ञानशून्याः प्रकृतिवशङ्गता भयशोकमोहग्रस्ता जीवंति। परमात्मापि सर्वं जगद्व्यापारं प्रकृत्या अनायासेनैव कारयन् स्वमप्यकर्तारं भावयन् स्वयमात्मारामः आनंदमयो विराजते। तथैव तदंशभूतो जीवात्मा किमर्थं सर्वस्य व्यवहारस्यात्मानमेव कर्तारं भावयेदित्ययमंशः श्रद्धया परिशीलनीयः। अन्येन क्रियमाणं सर्वं कार्यं स्वीयमिति भावयन् पुरुषः कथं वा मिथ्याचारी न भवेत्? तादृक् स्तेनः कथं वा आत्मश्रेयः साधयेत्। तथा च सर्वेषां श्रेयस्करमात्मज्ञानम-वश्यमस्मिन्नेव जन्मनि साधनीयमिति वीर्यवत्तरया वाण्या भगवान् न केवलमर्जुनं परंतु सर्वानपि साधकान् उपदिशति ॥ २९ ॥

**यदा भूतपृथग्भावमेकस्थमनुपश्यति ।**
**तत एव च विस्तारं ब्रह्म संपद्यते तदा ॥ ३० ॥**

यदा यस्मिन्काले भूतपृथग्भावं भूतानां प्राणिनां पृथग्भावं पृथक्त्वं एकस्थं एकस्मिन्नेवात्मनि वर्तमानं अनुपश्यत्यनुभवति "अविभक्तं च भूतेषु विभक्तमिव च स्थितम्" इत्यत्रोक्तं तत्त्वं यदा अनुभवति साधकस्तदा तस्मिन् काले तत एव कारणात् विस्तारं सर्वव्यापकं ब्रह्म अखण्डलिङ्गात्मकः परशिवः संपद्यते भवतीत्यर्थः। "यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति" इति प्रागेव सर्वस्य चराचरात्मकप्रपञ्चस्य लिङ्गरूपिणि परमात्मन्येव वर्तमानत्वं भगवतैवोपदिष्टम्। तादृशमनुभवं योऽधिगच्छति सः सर्वव्यापकेऽखण्डलिङ्गे समरसतया विलीयते। यस्य चर्मवदाकाश एव वेष्टनं भवेत् तस्य व्याप्ति-रनंताऽपरिमिता च भवति। एतादृगखण्डप्रकाशविलयनेन मानवो ह्यखण्ड-शक्तिमानात्मश्रीसंपन्नश्च भवति। इदमेवात्मैश्वर्यमवश्यमधिगंतव्यं मानवैर्ज्ञान-क्रियासमन्वयेन मार्गेण। यस्य परमात्मैव प्रसन्नो भवेत् तस्य न कुत्रापि दारिद्र्यदौर्बल्ययोः परिचयः संभवेत्। अयमाशय एवमुपवर्ण्यते शरण-गीतायाम्। "त्वयि प्रसन्ने सति काष्ठमेतदुज्जृंभते पल्लवितस्वरूपम्।

वशापि वाहाऽचिरमेव सूते किशोरमित्येव तु सिद्धमेतत् ॥ तवाप्रसादाद्भवितामृतं विषं विषं प्रसादाद्भविताऽमृत नु । त्वयि प्रसन्ने सकलाः पुमर्थाः समापतेयुर्गुरुसङ्गमार्य ॥ " इति । एवमनेन परमात्मदर्शनेन मानवजीवनमेव न केवलममृतमयमेव परन्तु नित्यसुन्दरमपि भूत्वा सफलीभवेत् ॥ ३० ॥

**अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः ।**
**शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥ ३१ ॥**

हे कौन्तेय ! अव्ययो व्ययरहितः अयमपि परमात्मा शरीरस्थोऽपि सर्वप्राणिशरीरेष्वपि अन्तर्यामितया स्थितः । " ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति " इत्युच्यते किल । स्वतः अनादित्वात् उत्पत्तिरहितत्वात् सत्त्वरजस्तमोरहितत्वात् न करोति न किञ्चिदपि कर्म करोति । सर्वमपि कर्म त्रिगुणैर्निर्वर्त्यमानमेव कार्यजातमपि त्रिगुणात्मकमेव वर्तते । एवं कार्यकारणयोरुभयोरपि त्रिगुणात्मकत्वात् तादृग्गुणरहितस्य परमात्मनः कर्तृत्वं न संभवत्येव। अत एव भगवान् स्पष्टमुपदिशति " त्रिगुणा प्रकृतिरेव हि सर्वं करोति " इति। एवं शरीरस्थोऽपि परमात्मा यदि यत्किञ्चिन्न करोति चेत् सः न कदापि लिप्यते तादृशकर्मफलैः सक्तो न भवत्येव । यः कर्म करोति स एव कर्मफलैर्लिप्यते । निर्लिप्तस्यात्मारामस्य परमेश्वरस्य कर्माचरणकर्मफलसंबन्धयोरभावात् निर्विकारत्वं स्वाभाविकम् ॥ ३१ ॥

**यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।**
**सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ॥ ३२ ॥**

देह एव विद्यमानस्यापि परमात्मनः तदीयप्रकृतिक्रियमाणकर्मफलसंबन्धः कथं न संभवेदित्यत्र सदृष्टान्तं समाधानमाह । यथा सर्वगतं सर्वत्र विद्यमानमप्याकाशं सौक्ष्म्यात् अतिदुर्विज्ञेयसूक्ष्मस्वभावात् नोपलिप्यते तत्तद्वस्तुभिर्न संपृक्तं भवति तथैव देहे सर्वत्र सर्वदेहेष्वपि अवस्थित आत्मापि परमात्मापि अतिसूक्ष्मत्वादेव नोपलिप्यते ; तादृशदेहनिबन्धनकर्मादिभिर्न

संपृक्तो भवति। "परमात्मा यथा कर्मणा तत्फलेन वा नोपलिप्यते तथा तदंशभूतो जीवोऽपि सहजतया कर्मफलाभ्यां नोपलिप्यते" इत्याशयमाविष्कर्तुं भगवान् आत्मपदमत्र सामान्यतः प्रयङ्क्ते। तथापि जीवः स्वस्य परमात्मनश्च परिचयाभावात् कर्मण्यभिप्रवृत्तः फले सज्जति। स्वपरज्ञानात् मानवः अनासक्तिलाभं परिगृह्णाति। एतादृशज्ञानसंपन्नतायैव भगवानत्र स्पष्टमुपदिशति। सतां सङ्गादेवैतादृशं ज्ञानमुदेति साधकेषु। अत एव मानवैः सर्वैरपि आसुप्तेरामृतेः कालं सत्सङ्गे स्थित्वा वेदान्तविचारः करणीयः॥

**यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः।**
**क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत॥ ३३॥**

हे भारत अर्जुन! एक एव सन्नपि रविः सूर्यः कृत्स्नं समस्तमिमं लोकं प्रकाशयति स्वतेजसा व्याप्य तिष्ठति। तथैव क्षेत्र क्षेत्रज्ञोऽयं परमेश्वरः कृत्स्नमिदं क्षेत्रं शरीरं प्रकाशयति; स्वचैतन्यशक्त्या व्याप्य तिष्ठति। तस्यैव भासा शरीरमिदं विभाति। "अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः" इति हि श्रूयते। "स विश्वकृद्विश्ववित्" "निष्कलं निष्क्रियं शांतं निरवद्यं निरञ्जनम्" इति च परमात्मनि मिथो विरुद्धधर्माणां सान्निध्यं श्रूयते। तथैव सः "प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः" इति श्रुतौ प्रशंस्यते! एतादृशाद्भुतशक्तिमतः स्वतन्त्रस्य परिपूर्णस्य सर्वमपि संपद्यते॥ ३६॥

**क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा।**
**भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम्॥ ३४॥**

एवं क्षेत्रक्षेत्रज्ञस्वरूपनिरूपणमुपसंहरति। तयोस्तु क्षेत्रस्य शरीरस्य, क्षेत्रज्ञस्य परमात्मनश्च यदन्तरं परस्परवैलक्षण्यं तत् ज्ञानचक्षुषा ज्ञानाख्येन चक्षुषा ये जीवा विदुर्दृष्टवन्तः, एवमेव भूतप्रकृतिमोक्षं च भूतानां प्राणिनां प्रकृतेः त्रिगुणमयसंसारबन्धात् विमोचनप्रकारं च ये विदुः। "कारणं

गुणसङ्गोऽस्य सदसद्योनिजन्मसु " इत्यादावयमर्थ उपदिष्टः । ते परं महा-लिङ्गाख्यं परशिवब्रह्म यान्ति । तेन एकरूपा भवन्ति । देहे परमात्मा षडिन्द्रियैर्यं व्यवहारं लोककल्याणार्थमनासक्त एव अनायासेन निर्वहन्विराजते तं यदि मानवो जानाति तदा तस्य प्रकृतिर्व्यवस्थिता सती तं नित्यसुखिनं करोति । अतः सर्वेषामपि व्यावहारिकाणां क्षेत्रक्षेत्रज्ञज्ञानं तत्कल्याणदृष्ट्या अनिवार्यतयापेक्ष्यते । इदमेव क्षेत्रक्षेत्रज्ञज्ञानं वीरशैवसंप्रदाये षट्स्थलोपासन-मार्ग इति व्यवह्रियते । अनेन मार्गेण जीवपरमौ एकैकस्मिन्निन्द्रिये वर्तमानौ तत्तदिन्द्रियव्यवहारान् निर्लिप्ततया निर्वहन्तौ वर्तेते । जीवः तत्तदिन्द्रियसुख-दुःखानि तदानीमेव स्वप्रभवे परमेश्वराय भक्त्या समर्पयति । परमेश्वरोऽपि तानि प्रेम्णा स्वीकृत्य प्रसादरूपतया तस्मा एव अनुगृह्णाति । प्रभुर्न किञ्चि-दपि करोति भुनक्ति चेति प्रागुक्तमेव । तथापि भक्त्युपहृतमश्नामीति तेनै-वोपदिष्टत्वात् जीवः भक्त्या यद्ददाति तदवश्यं प्रभुः स्वीकृत्य तदेव तस्मै प्रसादरूपतया प्रत्यर्पयति । इयमेव षट्स्थललीला क्षेत्रक्षेत्रज्ञविज्ञानमित्यत्रोप-दिश्यते । एतत्परिज्ञानादेव मानवः प्रसादभोगी संपद्यते । एवमेव सर्वैरपि साधकैः प्रसादजीविभिर्भाव्यमिति भगवानाशास्ते । अनेन प्रसादजीवनेन भूमिरेव स्वर्गायते ; विषमप्यमृतायते, दुःखमपि सुखायते । इदमेवामृतजीवनं शक्तिविकास इत्यनुभविभिः कथ्यते । षट्स्थलज्ञानमन्यत्र विस्तरशो निरूपितं श्रद्धालुभिरवलोकनीयमित्यलमतिप्रसङ्गेन ॥ ३४ ॥

---

## चतुर्दशाध्यायः

" यावत्सञ्जायते किंचित्सत्त्वं स्थावरजङ्गमम् । क्षेत्रक्षेत्रज्ञसंयोगात् तद्विद्धि भरतर्षभ ॥" इति पूर्वाध्याये क्षेत्रक्षेत्रज्ञसंयोगरूपः मायिनो महेश्वरस्य

मायाशक्त्या सह संपर्क एव सर्वोत्पत्तेर्हेतुरित्युक्तम् । एवमेव "कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु" इति गुणसंबन्ध एव बन्धहेतुरिति चोक्तम् । एवं सङ्ग्रहेणोक्तस्यार्थस्य विवरणमस्मिन्नध्याये क्रियते । श्रीभगवानुवाच—

**परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।**
**यज्ज्ञात्वा मुनयस्सर्वे परां सिद्धिमितो गताः ॥**

ज्ञानानामुत्तममेतत्परं ज्ञानमवश्यज्ञातव्यं परमरहस्यज्ञानमेव भूयः पुनरपि, पूर्वमुक्तमपि अत्यावश्यकत्वादादरातिशयेन पुनरपि प्रवक्ष्यामि यज्ज्ञानं ज्ञात्वा विज्ञाय सर्वे मुनयो महर्षयस्सर्वेऽपि इतः एतद्देहबन्धात् परां सिद्धिं परममुक्तिरूपां सिद्धिं गताः प्राप्ताः ॥ १ ॥

**इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।**
**सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ २ ॥**

परां सिद्धिमित्यस्यैव विवरणमाह । इदमुत्तमं ज्ञानमुपाश्रित्य संपाद्य ते मुनयो मम मया साकं साधर्म्यं समानधर्मतां "निरञ्जनः परमं साम्यमुपैति", 'ब्रह्मवित् ब्रह्मैव भवति" इत्यादिश्रुतेः समानगुणयोगं समागताः प्राप्ताः । देहे विराजमानस्य इष्टप्राणभावात्मकस्य महालिङ्गस्वरूपस्य परमेश्वरस्य परिचयेन त्यागभोगयोगात्मको जीवः इष्टमूर्त्युपासनेन स्वार्थं परित्यज्य प्राणदेवस्य प्रसादमुपभुज्य भावात्मकेन परवस्तुना च संयुज्य स्वीयसच्चिदानंदस्वरूपानुभवे सन्तिष्ठते । देहे स्थित्वापि जीवस्य देहबन्धाद्विमोचनं नामैतादृक्स्वरूपानुभवाधिगम एव । पुरा अनेके मुनय एतादृशीं दशां प्राप्ता आसन् । ते तु देहस्थेऽमूर्ते भावलिङ्गे सामरस्यमधिगतवन्तः तस्यामेव स्थितौ देहत्यागादनन्तरमधुनापि वर्तन्ते । ते तु नित्यजीविन इति परिकीर्तिताः । अत एव ते सर्गेऽपि जगत्सृष्टिकालेऽपि नोपजायन्ते पुनर्जन्म न प्राप्नुवन्ति । पुनर्जन्मनिवृत्या तेऽमृतानुभविनो न पुनः स्त्रीयोनिं प्रविशन्ति । प्रलये प्रलयकालेऽपि न व्यथन्ति च ते न नश्यन्ति च । ते हि परशिवैक्य-

मनुभवन्ति प्रलयकालेऽपि न विनाशं प्राप्नुवन्ति । तथा च जन्ममरणबंधाद्विनिर्मुक्ता भवन्ति ते ये इहैव अमृतभाजो भवेयुः । अत एव " इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः " इति श्रुतेरुपदेशोऽन्वर्थंतया शोभते । इह यदि स्वदेह एव साधकः ज्ञानक्रियासमन्वयमार्गेण शिवैक्यमधिगम्य शिवानन्दमनुभवेत् तदा सः नित्यमेव तादृशमानन्दमनुभवति । " स्वदेहमरणिं कृत्वा प्रणवं चोत्तरारणिम् । ध्याननिर्मथनाभ्यासाद्देवं पश्येन्निगूढवत् ॥ तिलेषु तैलं दधिनीव सर्पिरापः स्रोतस्वरणीषु चाग्निः । एवमात्माऽऽत्मनि गृह्यतेऽसौ सत्येनैनं तपसा योऽनुपश्यति ॥" इत्येवं श्रुतौ परमात्मदर्शनं साधकः स्वदेह एवाधिगच्छेदिति स्पष्टमुपदिश्यते । अत एव आत्मदर्शनमतिसूक्ष्मं गंभीरमव्यक्तमित्यभिधीयतेऽनुभविभिः । देहसहकारेणैवेदमात्मदर्शनं साधनीयम् । श्रवणमननिदिध्यासानां देह एव प्रधानमवलम्बनम् । व्यवहारिका जना स्वदेहे तत्रापि परमात्मावासभूते हृदये महता विश्वासेन इहपरसौख्ययोरुभयोरपि दत्तदृष्ट्यो भवेयुरिति भगवत आशयः ॥

**मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम् ।**
**संभवः सर्वभूतानां ततो भवति भारत ॥ ३ ॥**

हे भारत अर्जुन ! मम मदीयं यत् महत् व्यापकं ब्रह्म विस्तृतं च त्रिगुणद्रव्यमस्ति तदेव योनिः सर्वजगदुत्पत्तिकारणत्वात् सर्वस्यापि मूलमुच्यते । तस्यां योनौ अहं गर्भं चैतन्यशक्तिधारणरूपं गर्भं दधामि । ततस्तस्मादेव भूतानां सर्वप्राणिनामपि संभव उत्पत्तिर्भवति । अचेतनप्रकृतौ चैतन्यशक्तिसंयोगादेव सकलजगदुत्पत्तिर्भवतीत्यर्थः । अहमेव क्षेत्रक्षेत्रज्ञसंयोग इत्युच्यते अनुभविभिः । अत एव सर्वमेव जगत् चेतनाचेतनमिश्रमित्युच्यते । तथैव देहोऽपि चेतनाचेतनमिश्र एव वर्तते । अचेतनं शरीरमाश्रित्यैव चेतनो जीवः स्वशक्तिविकासाय स्वीयबंधुं परमात्मानमुपास्ते । परमात्मैव शरीरं च संपद्यते । तदीया अचेतना मायाशक्तिः शरीरं भवति ; चेतनरूपः

परमात्मैव इच्छाज्ञानक्रियाशक्तिसङ्कोचेन जीवो भवति । तथा च शिवांशो जीवः शिवध्याननैरंतर्येण सर्वतोमुखं शक्तिविकासमधिगच्छति । अनेन शक्तिविकासेन सः शिवैक्यसुखमिहैवानुभवन् निर्लिप्ततया व्यवहरन् लोककल्याणाय प्रयतते । निग्रहानुग्रहसमर्थः सः शिव एव भूत्वा सर्वदा लोकं शिवदृष्ट्यैव पश्यन् सर्वत्र शिवमेव कुर्वन् विराजते । एवमेव सः चेतनाचेतनात्मकमिदं शरीरं जगच्च ईशावास्यमिति भावयन् तामेव भावनामितरेष्वप्युत्पादयति ॥

**सर्वयोनिषु कौन्तेय मूर्तयः संभवन्ति याः ।**
**तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥ ४ ॥**

हे कौन्तेय अर्जुन ! सर्वयोनिषु देवमनुष्यादिसर्वविधयोनिष्वपि याः मूर्तयो देहसंस्थानरूपा मूर्तयः संभवंति उत्पद्यंते तासां मूर्तीनामपि महत् व्यापकमेव ब्रह्म त्रिगुणद्रव्यमेव योनिः कारणं संपद्यते । अहं तु तत्र बीजप्रदः चैतन्यशक्तिरूपबीजदाता पिता जनको भवामि । सर्वेषामपि मूर्तरूपाणां प्राणिनां शरीरभावमापन्ना प्रकृत्याख्या मायाशक्तिरेव मातृस्थानीया वर्तते ; तथैव चेतनभावमापन्नः परमेश्वर एव पितृस्थानीयो वर्तते । अत एव " जगतः पितरौ वंदे पार्वतीपरमेश्वरौ " इति महाकविकालिदासेन तयोः मातापितृत्वेन निर्देशः सम्यक् शोभते ॥ ४ ॥

**सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः ।**
**निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥ ५ ॥**

जीवानामेवमुत्पत्तिक्रममुक्त्वा अथ बंधक्रममाह । हे महाबाहो अर्जुन ! प्रकृतिसंभवाः त्रिगुणद्रव्यादुत्पन्नाः सत्त्वं रजः तमः इति एते गुणा एव अव्ययं स्वत उत्पत्त्यादिरहितं देहिनं जीवं देहेऽस्मिन् शरीरे निबध्नन्ति । त्रिगुणद्रव्यमेव जीवस्य शरीरबंधहेतुरित्यर्थः ॥ ५ ॥

**तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम् ।**
**सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥ ६ ॥**

तत्र त्रिगुणमध्ये सत्त्वं सत्त्वगुणो निर्मलत्वात् स्वच्छत्वात् अनामयं निरुपद्रवं प्रकाशकं प्रकाशहेतुर्भवति । आत्मस्वरूपप्रकाशकं संपद्यत इत्यर्थः । हे अनघ अर्जुन ! तत्सत्त्वं सुखसङ्गेन सुखे सङ्गोत्पादनेन, ज्ञानसङ्गेन ज्ञाने तादृशसुखसंपादके ज्ञाने सङ्गोत्पादनेन च बध्नाति सुखासक्तिमुत्पाद्य तद्द्वारा जीवं चेतनं बंधयति । सुखमपि मोक्षप्रतिबंधकत्वात् बंध एवेति भाव्यते ज्ञानिभिः । तथा च सत्त्वं आत्मज्ञानसाधकमपि तादृशे ज्ञाने जीवस्यासक्त्युत्पादनद्वारा बंधकमेव भवेत् ॥ ६ ॥

**रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।**
**तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ॥ ७ ॥**

रजः रजोगुणोऽपि रागात्मकं अनुरागकार्यस्य अभिमानस्य वर्धकत्वात् तादृशमेव बंधकमेव । तच्च तृष्णासङ्गसमुद्भवं तृष्णाया विषयभोगाभिलाषाया यस्सङ्गस्तेन समुत्पन्नं विद्धि । अत एव तद्रजः, हे कौन्तेय ! देहिनं जीवं कर्मसङ्गेन कर्मसु संबन्धोत्पादनेन सदा सर्वकालेष्वपि अर्थकामादिव्यापारोत्पादनेन बध्नाति बंधमुत्पादयति । तथा च रजोगुणः विषयभोगाभिलाषमुत्पाद्य तत्रैव जीवस्यासक्तिमभिवर्ध्य अर्थकामार्जन एव तं विशेषतः संसक्तं करोति ॥ ७ ॥

**तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ।**
**प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥ ८ ॥**

तमस्तु अज्ञानजमज्ञानाज्जायमानं सर्वदेहिनां सर्वप्राणिनां मोहनं मोहहेतुं विद्धि । हे भारत अर्जुन ! तत् तमः प्रमादालस्यनिद्राभिः । प्रमादोऽनवधानता । आलस्यं निद्रा च प्रसिद्धे । तैर्जीवं बध्नाति बद्धं करोति । तमोगुणः जीवेषु व्यामोहदृष्टिमुत्पाद्य निद्रालस्यप्रमादादिभिस्तान् निबध्नाति ॥ ८ ॥

सत्त्वं सुखे संजयति रजः कर्मणि भारत ।
ज्ञानमावृत्य तु तमः प्रमादे संजयत्युत ॥ ९ ॥

तथा च हे भारत अर्जुन ! सत्त्वं सत्त्वगुणःजीवस्य सुखेन सञ्जयति सङ्गमुत्पादयति । रजः रजोगुणः जीवस्य कर्मणि संबन्धमुत्पादयति । तमस्तु ज्ञानमावृत्य नाशयित्वा प्रमादे अनवधानतायां जीवस्य सञ्जयति सङ्गमुत्पादयति ॥ ९ ॥

रजस्तमश्चाभिभूय सत्त्वं भवति भारत ।
रजस्सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥ १० ॥

हे भारत अर्जुन ! सत्त्वं स्वकाले रजस्तमश्च रजोगुणं तमोगुणं च अभिभूय मर्दयित्वा भवति स्वकार्योत्पादनसमर्थं भवति । एवमेव रजः रजोगुणः स्वकाले सत्त्वं तमश्च अभिभूय स्वकार्यं साधयति । तथैव तमोऽपि स्वकाले सत्त्वं रजश्च अभिभूय स्वीयं कार्यं करोति । तथाच उद्भवाभिभवाभ्यामेते गुणाः स्वस्वकार्याणि साधयन्ति । सर्वेष्वप्येते गुणा न्यूनाधिकप्रमाणतो विद्यन्त एव। क्वचिदेकस्य प्राधान्यात् इतरयोरभिभवः । एवं क्रमेण देवेषु स्वर्गनिवासिषु सत्त्वस्य, मनुष्येषु मर्त्यनिवासिषु रजसः, दानवेषु पाताळनिवासिषु तमसश्च प्राबल्यात् सर्वत्र इतरयोर्गुणयोरभिभूतत्वं सर्वानुभवसिद्धम् । तथैव मानवेष्वपि क्वचित् सत्त्वस्य क्वचिद्रजसः क्वचित्तमसश्च प्राधान्यात् इतरयोरप्राधान्यात् अनेकप्रकारता परिदृश्यते । एवमेव गुणवैविध्यात् चिदंशानां जीवानामपि वैविध्यं संभवति । अत एव जीवाः प्रतिशरीरं भिन्ना विचित्राश्च सन्ति ॥ १० ॥

सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते ।
ज्ञानं यदा तदा विद्यात् विवृद्धं सत्त्वमित्युत ॥ ११ ॥

ननु तत्तद्गुणानामुद्भवस्य किं लिङ्गमिति चेत्तत्राह । अस्मिन् देहे शरीरे सर्वद्वारेषु ज्ञानद्वारभूतेषु सर्वेष्वपीन्द्रियेषु प्रकाशः ज्ञानरूपः प्रकाशो

यदा यस्मिन्काले उपजायते तदा सत्त्वं सत्त्वगुणः विवृद्धमिति उद्भूतमिति विद्धि जानीहि । इन्द्रियेषु निर्लिप्ततया निवसतः षट्स्थलात्मकस्य परमात्मनो ज्ञानं गुरूपदेशश्रवणेन यस्य साधकस्य हृदये यदा विलसति तदा तस्मिन् सत्त्वगुणः उद्भूत इति ज्ञेयम् । यदा च इन्द्रियादीनिः साधनानि तत्रत्येश्वरस्य ज्ञानमुत्पादयन्ति तदा सत्त्वगुणः उद्भूतः, रजस्तमसी अभिभूते इत्यवगन्तव्यमित्यर्थः । परमात्मैव सर्वाणीन्द्रियाणि भूत्वा तत्रैव चेतनात्मकतया निवसंश्च व्यवहरति । स एव चक्षुषी द्रष्टा च वर्तते । स एव श्रोत्रे श्रोता च वर्तते । एवमेव सः नासिका भूत्वा गन्ध घ्राता च संपद्यते । तथैव सः रसना भूत्वा तत्रत्यो रसयिता च वर्तते । एवमेव सः चर्म भूत्वा तत्र स्पर्शसुखभोक्ता च वर्तते । एवं स एव मनो भूत्वा तत्र तृप्तिसुखानुभविता च वर्तते । तथा च सर्वेन्द्रियेषु सहजतया स्थितः परमशिवो यदा यस्मिन् सत्त्वविकासस्सञ्जायते तदा अनुभाव्यत इत्यनुभविभिः कथ्यते ॥ ११ ॥

लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा ।
रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥ १२ ॥

हे भरतर्षभ अर्जुन ! रजसि रजोगुणे विवृद्धे सति लोभः द्रव्यप्राप्तीच्छायां तृप्त्यभावः । अत एव तदर्थं प्रवृत्तिः कर्मणामारंभः उपक्रमः, अशम इन्द्रियादीनां शान्त्यभावः, स्पृहा उत्तरोत्तरेच्छा एतानि जायन्ते । इद सर्वं रजोगुणकृत्यमित्यर्थः । अर्थसंपादनेऽतीवाशा, तदर्थं सततप्रवृत्तिरारंभस्तत्र अशांतिश्च यदा यस्मिन् विशेषत उत्पद्यन्ते तदा तस्मिन् रजोगुणो विकसित इति ज्ञेयम् ॥ १२ ॥

अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥ १३ ॥

हे कुरुनन्दन अर्जुन ! तमसि तमोगुणे विवृद्धे सति विशेषतो व्याप्तिं गते सति अप्रकाश अविवेकः । अप्रवृतिः कर्तव्येष्वपि कार्येषु प्रवृत्त्यभावः

औदासीन्यम् कर्तव्यपराङ्मुखतेत्यर्थः । प्रमादोऽनवधानता । "प्रमादं वै मृत्युमहं ब्रवीमि" इति सनत्सुजातीये श्रुतम् । जीवतो मरणसदृशः प्रमादः तमसः कार्य एव । मोह एव च मौढ्यं चेत्येतानि जायन्ते । युक्तायुक्तविवेचनां विनैव कर्मारंभः, कर्तव्यपरित्यागः अकर्तव्यस्वीकारः, अपात्रे मीहः सत्पात्रे द्वेषश्च । निद्रालस्यविवादैः कालयापनमित्येतानि तमसा तमोगुणेन जायंते ॥ १३ ॥

**यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् ।**
**तदोत्तमविदां लोकानमलान् प्रतिपद्यते ॥ १४ ॥**

अथ मरणकाले सत्त्वादिगुणानां कृत्यमाह । यदा यस्मिन्काले सत्त्वे सत्त्वगुणे प्रवृद्धे सति अभिवृद्धे सति देहभृत् जीवः प्रळयं मरणं पञ्चत्वं याति प्राप्नोति तदा स जीवः उत्तमविदां तत्त्वज्ञानिनामलान् मलरहितान् पुण्यान् लोकान् प्रतिपद्यते प्राप्नोति ॥ १४ ॥

**रजसि प्रळयं गत्वा कर्मसङ्गिषु जायते ।**
**तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥ १५ ॥**

रजसि रजोगुणे प्रवृद्धे सति देहभृत् प्रळयं मरणं गत्वा प्राप्य कर्मसङ्गिषु कामासक्तियुक्तेषु लोकेषु जायते उत्पद्यते । कर्मिणो यत्र निवसन्ति तादृशं कर्मलोकं मर्त्यलोकं भूलोकं पुनः प्राप्नुवंति ते ये रजोगुणविकासकाले म्रियंते । एवमेव तमसि तमोगुणे प्रवृद्धे प्रळयं गत्वा देहभृत् जीवः मूढयोनिषु पश्वादियोनिषु जायते जन्म प्राप्नोति । तमःप्रचुरे काले यो देहं त्यजति सः पश्वादीनां जन्म प्राप्नोति ॥ १५ ॥

**कर्मणः सुकृतस्याहुः सात्त्विकं निर्मलं फलम् ।**
**रजसस्तु फलं दुःखमज्ञानं तपसः पलम् ॥ १६ ॥**

उक्तमर्थं संगृह्याह । सुकृतस्य पुण्यकर्मणः निर्मलं परिशुद्धं सात्त्विकं सत्त्वगुणसंबन्धिफलमाहुर्ज्ञानिनः । एवमेव रजसः रजोगुणस्य तु दुःखं

फलमाहुः । तथैव तमोगुणस्य अज्ञानमेव तत्त्वाऽनभिज्ञानमेव फलमाहुः ॥

सत्त्वात्सञ्जायते ज्ञानं रजसो लोभ एव च ।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥ १७ ॥

सत्त्वगुणात् ज्ञानं सञ्जायते ज्ञानस्य सत्त्वगुणकार्यत्वात् । एवमेव रजसो रजोगुणात् लोभः दुराशा जायते । रजोगुणहेतुकत्वं दुराशायाः विश्रुतमेव । तथैव तमसः तमोगुणात् प्रमादमोहौ प्रमादोऽनवधानता, मोहो- मौढ्यम् तथा अज्ञानमविवेकश्च जायते ॥ १७ ॥

ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥ १८ ॥

सत्वस्थाः सत्वगुणनिष्ठा ऊर्ध्वं ऊर्ध्वलोकं गच्छन्ति । राजसा रजो- गुणनिष्ठा मध्ये लोके तिष्ठन्ति । तामसाः तमोनिष्ठास्तु जघन्यगुणवृत्तिस्था जघन्यो नीचः यो गुणः तमोगुणस्तद्वृत्तिस्थास्तत्कार्यपराः सन्तः अधः अधो- लोकं गच्छन्ति प्राप्नुवन्ति ॥ १८ ॥

"सत्वं रजस्तम इति गुणाः प्रकृतिसंभवाः । निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥" इत्युक्तार्थ एव एतावता ग्रन्थेन विवृतः । अथ गुणातीतावस्था सर्वोत्तमरूपा वर्ण्यते—

नान्यं गुणेभ्यः कर्तारं यदा द्रष्टाऽनुपश्यति ।
गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥ १९ ॥

द्रष्टा जीवः यदा यस्मिन् काले गुणेभ्यस्त्रिगुणेभ्योऽन्यं कर्तारं नानुपश्यति । गुणा एव सर्वत्र सर्वकर्मणां कर्तार इति पश्यतीत्यर्थः । एवमात्मानं गुणेभ्यस्त्रिगुणेभ्यः परं भिन्नमुत्तमं च वेत्ति सः मद्भावं परशिवब्रह्मभावरूपमुक्ति- मेव अधिगच्छति प्राप्नोति । आत्मनः परमात्मनस्तदंशस्य स्वस्य च अकर्तृत्वं यो जानाति सः मुक्तो भवति । आत्मन आसुप्तेरामृतेः कालं प्रकृतेर्गुणाः सर्वत्र व्यापृताः सर्वान् व्यवहारान् निर्वहन्ति । परमात्मन एव सान्निध्येन

अयमिन्द्रियव्यवहारः प्राकृतिकतया निरुह्यते। परमात्मनस्समीपे तदीयो बन्धुस्तदंशो जोवोऽपि वर्तत एव। तयोः सान्निध्यमेव कार्यनिर्वाहोपयोगि भवेदिति यो जानाति तस्मिन् कर्तृत्वाद्यहङ्कारो न प्रवर्तेत। कर्तृत्वबुद्धिं विना यः इन्द्रियव्यवहारयोः साक्षी भवेत् तस्य जन्मान्तरावाप्तेः बीजमेव विहन्येत। सः जीवितसमये दग्धपटवत् अनासक्त्यैव वर्तमानः सर्वमपि व्यवहारं लोककल्याणदृष्ट्या निर्वहति। स एव अमृतः आनन्दमय इति च व्यवह्रियते॥

**गुणानेतानतीत्य त्रीन् देही देहसमुद्भवान्।**
**जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते॥ २०॥**

मुक्तस्यामृतस्थितिमेवात्र विवृणोति। देही जीवात्मा देहसमुद्भवान् देहोत्पत्तिबीजस्थानापन्नात् एतात् त्रीन् गुणान् सत्त्वरजस्तमांसि आतीत्य अतिक्रम्य जन्ममृत्युजरादुःखैः जन्म जननं, मृत्युर्मरणं, जरा दुःखं च एभिर्विमुक्तस्सन् अमृतं नित्यानन्दमनुभवति। अतश्च जीवस्य त्रिगुणातिःक्रमणाभावे मुक्तिरपि न स्यादिति भावः। यदा जीवस्त्रिगुणैः पाशरूपैर्बद्धस्तेष्वेव संसज्य प्रवर्तते तदा सः संसारीति व्यवह्रियते। यदा सः त्रिगुणकार्यं ज्ञात्वा आत्मानमकर्तारं मनुते तदा सः त्रिगुणातीतो भवति। गुणानां वशवर्तीव दृश्यमानोऽपि सः तदसंस्पृष्ट एव स्वतन्त्रस्तन्मूलभूते स्वांशिनि शिवे समरसतया विलीयते॥ २०॥

**कैर्लिङ्गैस्त्रीन् गुणानेतानतीतो भवति प्रभो।**
**किमाचारः कथं चैतांस्त्रीन् गुणानतिवर्तते॥ २१॥**

एवमुक्ता गुणातीतावस्था प्राप्तेति कैर्लिङ्गैर्ज्ञातुं शक्यत इति ज्ञातुमर्जुन उवाच। हे प्रभो सर्वेश्वर श्रीकृष्ण! जीवः कैर्लिङ्गैः चिह्नैरेतान् सत्त्वादीन् त्रीन् गुणान् अतिवर्तते अतिक्रम्य वर्तते? तादृशश्च किमाचारः कीदृशाचारयुक्तो भवेत्? कथं च केनोपायेन च एतात् त्रीन् गुणान् अतिक्रम्य वर्तेत सः? त्रिगुणातीतस्य चिह्नं किम्? तस्य व्यापारः कीदृशः? तदतिक्रमणोपायश्च कः? एतान् प्रश्नान् पृच्छत्यर्जुनः॥ २१॥

**प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव ।**
**न द्वेष्टि संप्रवृत्तानि न निवृत्तानि कांक्षति ॥ २२ ॥**

हे पाण्डव अर्जुन ! प्रकाशं च सत्त्वकार्यभूतं प्रकाशं रजःकार्यभूतां प्रवृत्तिं च एवमेव तमःकार्यभूतं मोहं चैतानि संप्रवृत्तानि प्राचीनकर्मवशात् प्राप्तानि न द्वेष्टि न तेषु द्वेषं करोति तत्तन्निबन्धनतया क्लेशादिकं न प्राप्नोति, तथैव तन्निवृत्त्यर्थं न यतते च । अत एव निवृत्तान्यपि तानि सुखादीनि न कांक्षते नाभिलषति । यत् प्राप्तं तत् तूष्णीमनुभवतीत्यर्थः ॥ २२ ॥

**उदासीनवदासीनो गुणैर्यो न विचाल्यते ।**
**गुणा वर्तन्त इत्येव योऽवतिष्ठति नेङ्गते ॥ २६ ॥**

सत्त्वादिकार्येषु प्रवृत्तेष्वपि यः उदासीनवत् तेषु स्वयमसक्तवदेव आसीनो वर्तमानस्सन् तैर्न विचाल्यते न चाञ्चल्यं प्राप्नोति । किन्तु सत्त्वादयस्ते स्वस्वभावे वर्तन्त इत्येव मन्यमानोऽवतिष्ठति नेङ्गते न चलति च सः गुणातीत इत्युच्यते । इन्द्रियाणि इन्द्रियार्थेषु वर्तन्त इति मत्वा यस्तेष्वेव साक्षि-रूपतया निर्विकारतया च तिष्ठति सः त्रिगुणातीत उच्यते ॥ २५ ॥

**समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः ।**
**तुल्यप्रियाप्रियो धीरस्तुल्यानिन्दात्मसंस्तुतिः ॥ २४ ॥**
**मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।**
**सर्वारंभपरित्यागी गुणातीतः स उच्यते ॥ २५ ॥**

समे सुखदुःखे यस्य सः । स्वस्थः स्वस्मिन् आत्मनि स्थितः प्रसन्नः समलोष्टाश्मकाञ्चनः लोष्टाश्मकाञ्चनान् समान् भावयन् । लोष्टं कपाल-चूर्णादि, अश्म पाषाणः काञ्चनं सुवर्णं इदं सर्वमपि समं यस्य तादृशः समदर्शन इत्यर्थः । तुल्यप्रियाप्रियः प्रियमिष्टं, अप्रियमनिष्टं तदुभयमपि यस्य तुल्यं तादृशः । धीरो बुद्धिमान् । तुल्यनिन्दात्मसंस्तुतिः निन्दा आत्मनिन्दा, आत्मसंस्तुतिः स्वप्रशंसनं, एतादृगुभयमपि यस्य तुल्यं तादृशः । मानापमानयोः

मानं संमाननं अपमानं, प्रसिद्धं तयोस्तुल्यः समताभावनावान्। एवं मित्रारिपक्षयोः मित्रपक्षे शत्रुपक्षे च तुल्यः निष्पक्षपातः। सर्वारंभपरित्यागी सर्वे च आरंभा ऐहिकामुष्मिकफलव्यापारास्तान् परित्यक्तवान् य एतादृशः सः गुणातीत उच्यते ॥ २४–२५ ॥

**मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।**
**स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥ २६ ॥**

एवं गुणातीतस्य चिह्नान् तद्व्यापारांश्चोक्त्वाऽथ सः कथं चैतांस्त्रीन् अतिवर्तत इत्यस्योत्तरमाह मां परमेश्वरं सर्वकारणभूतं योऽव्यभिचारेण व्यभिचारदोषरहितेन सदैकरूपेण भक्तियोगेन भक्त्याख्ययोगेन सेवते उपास्ते सः एतान् त्रीनपि समतीत्य अतिक्रम्य ब्रह्मभूयाय परशिवब्रह्मस्वरूपैक्यप्राप्तये कल्पते समर्थो भवति। मद्भक्तिरेकैव तदतिक्रमोपाय इत्यर्थः ॥ २३ ॥

**ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ।**
**शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥ २७ ॥**

कथं भक्त्या गुणातिक्रमः सुगमो भवेदित्यत्राह। हि यस्मात्कारणात् अहमेव ब्रह्मणश्चतुर्मुखस्य प्रतिष्ठा पराकाष्ठाभूतोऽस्मि। अहमेवामूर्तं परशिवब्रह्म यतः परशिवब्रह्मास्मीत्यर्थः। एवमव्ययस्य नाशरहितस्यामृतस्यऽमर्त्यभावस्य यतोऽहमेव प्रतिष्ठा आधारभूतोऽस्मि। एवमेव शाश्वतस्य नित्यस्य सद्रूपस्य धर्मस्य यतोऽहमेव प्रतिष्ठा आश्रयोऽस्मि। ऐकान्तिकस्य दुःखामिश्रितस्य सुखस्य च यतोऽहमेव प्रतिष्ठा अतो मां योऽव्यभिचारेण भक्तियोगेन सेवते स एतान् त्रीनतिक्रम्य ब्रह्मभावाय परशिवैक्यप्राप्तये कल्पते प्रभवति। "अवजानन्ति मां मूढाः मानुषीं तनुमाश्रितम्। परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥" इत्यादिना स्वतत्त्वमसकृत् पूर्वमेव प्रतिपादितम्। एवमेव "न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः। माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः ॥" इत्यत्र च मायापहृतात्मैश्वर्याणां मूढानां त्रिगुण-

बद्धानां दुःखावस्थोपवर्णिता। तथा च व्यावहारिकाः जीवाः स्वेषां गुणानां च सम्बन्धं सम्यक् ज्ञात्वा तैः सहजतया क्रियमाणेषु कार्येषु तादात्म्यबुद्धिं परित्यज्य स्वीयपितृस्थानीये परमेश्वरे संयुज्य शिवानन्दमनुभवन्त एव अहङ्कारममकारयोस्तत्प्रयुक्तयोः रागद्वेषयोः अवकाशं न परिकल्पयेयुरिति भगवान् निरीक्षते ॥ ९७ ॥

---

## पञ्चदशाध्यायः

एवं संसारिणो जीवस्य परमात्मभक्त्या मोक्षप्राप्तिः अतीताध्यायान्ते प्रतिपादिता। स एवार्थः अस्मिन्नध्याये प्रपञ्च्यते। तत्र संसारिणः स्वरूपं प्रतिपादयितुं प्रथयं संसारस्वरूपमाह—

ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम्।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥ १ ॥

ऊर्ध्वमूलम्। संसारस्य जननमरणरूपस्य मूलं हि अज्ञानमयो मलपाशः। स च भवबीजभूतः। संसारमूलकारणत्वात् संसारवृक्षस्य बीजं कालतः वस्तुस्वरूपतश्च ऊर्ध्वमित्युच्यते। तस्मादयं संसारवृक्षः अधःशाख इत्युच्यते। सर्वेषां वृक्षाणां मूलमधोभागे शाखाश्चोर्ध्वभागे वर्तन्ते। अस्य तु संसारवृक्षस्य एतत् द्वयमपि विपर्यस्तं विद्यत इत्येतदेवात्र आश्चर्यम्। पाशमयाज्ञानरूपं भवबीजं पिण्डाण्डमये देहे ऊर्ध्वं शिरसि संलग्नम्। इन्द्रियादयस्तु शाखास्थानीयाः अधःस्थाः अधो व्याप्य वर्तन्ते। तादृशमिममश्वत्थं संसारवृक्षमव्ययं नित्यमनादिसिद्धमाहुः ज्ञानिनः। यस्यास्य संसारवृक्षस्य छन्दांसि ऋगादिवेदा एव पर्णानि पत्राणि। यथा वृक्षः पर्णानाश्रित्य तैः रक्षितस्तिष्ठति तथा धर्माधर्ममूलकोऽयं संसारः वेदाधीनस्तिष्ठतीत्यर्थः। यस्तदेतादृक् संसारतत्त्वं

वेद स एव वेदरहस्यवित् नान्यः । अस्य तु देहरूपस्य वृक्षस्य अश्वत्थ इति नाम अन्वर्थं वर्तते । वृक्षाणामश्वत्थः श्रेष्ठः खलु । परमात्मदर्शनाय अयं संसारवृक्षः प्रधानसाधनतया सहायको वर्तते । तस्मिन्नंशे विवेकिभिः निकृष्टभावना न कर्तव्या ॥ १ ॥

**अधश्चोर्ध्वं प्रसृतास्तस्य शाखा गुणप्रवृद्धा विषयप्रवालाः ।**
**अधश्च मूलान्यनुसन्ततानि कर्मानुबन्धीनि मनुष्यलोके ॥ २ ॥**

त्रिगुणद्रव्यैः प्रकर्षेण वृद्धिं गताः विषयप्रवालाः शब्दादिविषया एव प्रवालाः किसलयाः यासु तादृशाः शाखाः अधश्चोर्ध्वं च नानामुखतया प्रसृतास्तिष्ठन्ति शब्दादिविषयैरतिविस्तृतोऽयं वृक्षः नानादिक्षु प्रसरन् वर्तत इत्यर्थः । अस्य वृक्षस्य कर्मानुबन्धीनि कर्मनिबन्धानानि मूलानि अधश्च अधोलोके मनुष्यलोकेऽपि अनुसन्ततानि सततं व्याप्तानि तिष्ठन्ति ॥ २ ॥

**न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च संप्रतिष्ठा ।**
**अश्वत्थमेनं सुविरूढमूलमसङ्गशस्त्रेण दृढेन छित्त्वा ॥ ३ ॥**
**ततः पदं तत्परिमार्गितव्यं यस्मिन्गता न निवर्तन्ति भूयः ।**
**तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी ॥ ४ ॥**

अस्य उक्तसंसारवृक्षस्य रूपमिहास्मिन् लोके तथा उक्तरीत्या नोपलभ्यते संसारिजीवस्य न प्रत्यक्षीभवति । न तावन्मात्रमेव, अन्तरवसानमपि नोपलभ्यते ; आदिर्मूलमपि नोपलभ्यते ; संप्रतिष्ठा आधारोऽपि नोपलभ्यते । सुविरूढमूलं सुतरां विशेषेण च रूढमूलमेनमश्वत्थं संसारवृक्षमसङ्गशस्त्रेण संसारे स्थित्वापि तत्सङ्गपरित्यागरूपेण दृढेन प्रबलेन शस्त्रेण छित्वा नाशयित्वा ततः पश्चात् तत् परं पदं परमपदाख्यं तत्रैव शिरसि सहस्रारकमलमध्ये विराजमानं भावलिङ्गाख्यं स्थानं परिमार्गितव्यं तत्प्राप्तये समुचित उपायः अन्वेषणीयः । यस्मिन् परमपदे गताः भूयः पुनः न निवर्तन्ते तादृशामृतस्थितिप्राप्तये मार्ग अन्वेणीयः । कथं

परिमार्गितव्यमित्यत्राह तमेवेत्यादि । यतः यस्मात्परमपुरुषादमूर्तशिवात्पुराणी संसारमायावृक्षप्रसूतिः अभूत् तमेव आद्यं सर्वकारणभूतं पुरुषं भावलिङ्गाख्यं परमशिवमहं शरणं प्रपद्ये इत्येव तस्मिन् अनन्यभावेन शरणागत्या तच्च भावलिङ्गस्थानं परिमार्गितव्यम् । 'प्रपद्येत्' इति पाठे तु तादृशं परमपुरुषं इष्टप्राणभावात्मकं महादेवं उक्तसंसारवृक्षच्छेदनपूर्वकमोक्षार्थं प्रपद्येत् शरणं गच्छेत् इत्यर्थः स्वरस एव ॥ ३–४ ॥

निर्मानमोहा जितसङ्गदोषा अध्यात्मनित्या विनिवृत्तकामाः ।
द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञैर्गच्छन्त्यमूढाः पदमव्ययं तत् ॥ ५ ॥

निर्मानमोहाः मानो गर्वः, मोह अज्ञानं तद्रहिताः । जितसङ्गदोषाः जितः सङ्गो विषयसम्बन्धस्तदधीतो यो दोषो यैस्ते जितसङ्गदोषाः । अध्यात्मनित्याः नित्यं सदा अध्यात्मासक्तचित्ताः देहेन्द्रियसहाकारेणेष्टलिङ्गमष्टविधोपचारैरर्चयन्तस्तदानीमेव हृदयस्थं प्राणलिङ्गमपि ध्यानयोगेन निर्मले मनसि अनुभवन्तः । एवं बहिरन्तश्च परमात्माभियुक्ताः । अत एव विनिवृत्तकामाः संपूर्णतया निवृत्तविषयाभिलाषाः । सुखदुःखसंज्ञैः सुखदुःखलाभालाभजयापजयादिरूपैः द्वन्द्वैर्विमुक्ताः परित्यक्ताः । अत एव अमूढाः विवेकिनः । एतादृशा एव अव्ययं शाश्वतं तत्पदं स्थानं शिवयोगप्राप्यमनामयमृतमयं ब्रह्मस्थानं गच्छन्ति । जगत्यैकैकवस्तुदर्शनेनापि तदन्तर्गतस्य सद्रूपस्य परमात्मनः स्फूर्त्या साधकः सुषुम्नामार्गेण ब्रह्मस्थानापन्नं शिरः प्रविश्य तत्रत्ये भावरूपे महालिङ्गे समरसतया विलीयते । यः सर्वदा शिरस्येव विलीनः शिवभावेन निरभिमानतया व्यवहरति सः न कदापि दुःखभाग्भवेत् । जगतो निर्लिप्ततया दर्शनमेव शिवभावः । तस्यैव अभिमानवत्तया दर्शनं तु जीवभाव उच्यते । एवं व्यावहारिकाः सर्वे हृदयद्वारा अमृतस्थाने शिरसि निविष्टास्सन्तः शिवभावेन यदि व्यवहरेयुस्तदा संपत्समृद्धिवैभवमत्रैवाधिकतया संशोभेत ॥ तादृश एव अमृतानुभविनः

देहावसानेऽपि तदेव दिव्यामृतं शाश्वतिकतया अनुभवेयुः ॥ ५ ॥

**न तद्भासयते सूर्यो न शशाङ्को न पावकः ।**
**यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥ ६ ॥**

तच्च पदममृतस्थानं सूर्यः न भासयते प्रकाशयति । शशाङ्कः चन्द्रो वा न भासयते ; तथैव पावकः अग्निरपि न प्रकाशयति । तादृशं यत् स्थानं गत्वा पुनस्तस्मान्न निवर्तन्ते प्रत्यागच्छन्ति तत्र परमं धाम मम मदीयमेव । मानवदेहे ब्रह्मस्थानाह्वये शिरसि कोटिसूर्यप्रकाशं दिव्यज्योतिर्यद्भावलिङ्गं विराजते तत् सूर्यचन्द्राग्नीनामपि प्रेरकं प्रकाशकं च वर्तते । न तत्र सर्वेषामपि गन्तुं शक्यते । षडिन्द्रियेषु षड्विधविषयग्राहकमीश्वरं यश्च श्रद्धानिष्ठावधानानुभवानन्दसमरसाख्यया भक्त्या साक्षात्करोति स एवामृतस्थानं प्रवेष्टुं प्रभवति । एतदमृतस्थानप्राप्तिरेवाध्यात्मव्यवसायस्यान्तिमं फलम् । एतत्फलाननुभवे अध्यात्मव्यवसाय एव निरर्थको भवेत् ॥ ६ ॥

**ममैवांशो जीवलोके जीवभूतः सनातनः ।**
**मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥ ७ ॥**

प्रकृतिमये देहे भावरूपेण निवसन्तं महादेवं दृष्टवन्तो योगिनः प्राकृता इव लोके व्यवहरन्तोऽपि न हि दुःखभाजो भवेयुः । ते तावत् संसारे स्थित्वापि परित्यक्ताभिमाना दग्धपटा इव वर्तन्ते । महादेवदर्शनानन्तरमपि ते सामान्यजना इव कुतः संसारे न प्रवर्तेरन् ? कुतस्ते भोगमार्गं न पुनः स्वीकुर्युः ? इत्याशङ्कायां जीवात्मतत्त्वमुपदिशन् जीवानां सर्वेषामपि परमात्मांशत्वादेव अंशानामंशिप्राप्तिः सहजैवेति समाधानं वदति । जीवलोकेऽस्मिन् जीवानां लोके जीवभूतो यः सनातनः अनादिसिद्धश्च आत्मा प्रकृतिसंबन्धेन क्षीणशक्तिको वर्तते सः ममैवामूर्तपरशिवस्य साक्षादंशभूतः । परन्तु सः अनादिकर्मवशात् प्रकृतिसंबद्धस्सन् प्रकृतिस्थानि मनष्षष्ठानि इन्द्रियाणि कर्षति आकर्षति । 'इदं कर्मेन्द्रियाणामप्युपल-

क्षणम् । एवं सः कर्मफलभोगाय सर्वेषामिन्द्रियाणां सहकारमपेक्षत इत्यर्थः ॥

**शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।**
**गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥ ८ ॥**

अयं च इन्द्रियादिसंबन्धस्तस्य सदा अस्तीत्याह । ईश्वरः एतच्छरीरस्वामी जीवः यत् शरीरं नूतनतया आप्नोति, यच्चापि शरीरं उत्क्रामति परित्यजति तदा सर्वदापि वायुः पवनः आशयात्पुष्पादेः गन्धानिव एतानि मन आदीनीन्द्रियाणि गृहीत्वैव स्वेन सह स्वीकृत्यैव संयाति गच्छति । वायुर्यदा पुष्पमेकं परित्यज्य अन्यं गच्छति तदा तदीयं गन्धं गृहीत्वैव याति । गन्धसहित एव सः इतस्ततश्चलति । गन्धं विना तस्य चलनमेव यथा न संभवति तथा जीवः इन्द्रियैरेव देहाद्देहान्तरं गच्छति ॥ ८ ॥

**श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ।**
**अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ ९ ॥**

कानि तानि गृहीत्वा गच्छति जीव इत्यत्राह । श्रोत्रं, चक्षुः, स्पर्शनं त्वगिन्द्रियं, रसनं, घ्राणमेव । मनश्चेत्येतानि अधिष्ठायाश्रित्य अयं जीवः विषयान् शब्दादीन् उपसेवते अनुभवति ॥ ९ ॥

**उत्क्रामन्तं स्थितं वापि भुञ्जानं वा गुणान्वितम् ।**
**विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥ १० ॥**

अयं जीवात्मा कथमिदं शरीरं परत्यज्यान्यत्र गच्छति ? शरीरे कथं वर्तते ? शब्दादिविषयान् कथमनुभवति ? कथं गुणबद्धो व्यवहरति ? एतानंशान् अज्ञानिनो न जानन्ति । तत्त्वज्ञानिन एव तत्सर्वं ज्ञातुं प्रभवंति । अयमेवाशयोऽत्र निर्दिश्यते । उत्क्रामन्तं शरीरं परित्यज्यान्यत्र गच्छन्तं, शरीरे विद्यमानं, भुञ्जानं शब्दादिविषयाननुभवन्तं वा गुणान्वितं वा गुणैः सत्त्वादिभिः समन्वितं वा एनमात्मानं विमूढा अज्ञानिनो नानुपश्यन्ति न जानन्त्येव । ये पुनर्ज्ञानचक्षुषो ज्ञानिनस्त एव पश्यन्ति जीवस्य व्यवहारं

प्रस्थानं चास्मिन् संसारवृक्षे । तथा च जीवात्मा अतिसूक्ष्मो दुर्दर्श इत्यर्थः। सः कथमस्मिन् वृक्षे निवसति, व्यवहरति, भुनक्ति ? एते अंशाः विचित्रा एव वर्तन्ते । तस्य देहाद्देहान्तरगमनन्त्वतिविचित्रमेव । तदेव यो जानाति स एव विद्वान् नित्यसुखी निरामयश्च संपद्यते ॥ १० ॥

**यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् ।**
**यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥ ११ ॥**

योगिनस्समाहितचित्ता योगाभ्यासरताश्च आत्मनि स्वदेह एव अवस्थितमेनं जीवात्मानं स्वयमेव यतन्तः प्रयत्नं कुर्वन्तः पश्यन्ति । अकृतात्मानस्तु असंस्कृतान्तःकरणास्तु अचेतसोऽज्ञानिनो यतन्तोऽपि प्रयत्नं कुर्वन्तोऽपि एनं जीवात्मानं स्वयमेव न पश्यन्ति न हि द्रष्टुं शक्नुवन्ति । यः आत्मानमेवाऽपश्यन् केवलं पञ्चभूतात्मकं प्रपंचं पश्यति सः तदन्तस्थं प्रकाशरूपं चैतन्यं द्रष्टुं न प्रभवति । एवमात्मदर्शनविमुखः प्रपञ्चव्यामोहेन दुःखभाग्भवेत् । स संसारसागरे मज्जन् निमज्जंश्च वर्तते । एवमस्य गतागतादिकं स्वयमेवाजानन् मूढो भयशोकमोहग्रस्तो वर्तते ॥ ११ ॥

**यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।**
**यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥ १२ ॥**

एवं जीवस्वरूपं निरूप्य तदनन्तरं स्वस्य परमात्मनश्च स्वरूपमुपदिशति भगवानेव । आदित्यगतं सूर्ये वर्तमानं यत्तेजश्च प्रकाशो ह्यखिलं जगत् सकलप्रपञ्चमपि भासयते प्रकाशयति, यच्च यादृशं तेजश्चन्द्रमसि चन्द्रेऽस्ति, यच्च यादृशं तेजश्चाग्नौ वर्तते तदिदं तेजश्च मामकं मदीयमेवेति विद्धि जानीहि । सूर्यचन्द्राग्निगतो दिव्यप्रकाशो हि परमात्मसंबद्ध एव । तेष्वन्तर्यामितया स्थित्वा स एव प्रकाशत इत्यर्थः ॥ १२ ॥

**गामाविश्य च भूतानि धारयाम्यहमोजसा ।**
**पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ॥ १३ ॥**

गां भूमिं आविश्य प्रविश्य भूतानि सर्वानपि प्राणिनः ओजसा मद्बलेन अहमेव धारयामि । एवमेव रसात्मको सर्वरसमयस्सोमश्चन्द्रो भूत्वा अहमेव सर्वा ओषधीश्च पुष्णामि पोषयामि । 'ओषधीशो निशापतिः' इति चन्द्रस्य ओषधीपत्वं प्रसिद्धमेव । सर्वेऽपि प्राणिनः परमात्मानमाश्रित्यैव तिष्ठंते । तदवलम्बनेनैव सर्वे जीवन्ति । एवं सर्वविश्रान्तिस्थलभूतः परमात्मा शिवागमेषु स्थलशब्देनैव व्यवह्रियते । न केवलं सृष्ट्यनंतरं किंतु प्रळयकालेऽपि सर्वेषां जीवानां पञ्चतत्त्वानां च स एव विश्रांतिस्थलं संपद्यते । तथा च प्राक्, अद्य उत्तरकाले च स एव चराचरात्मकस्यास्य जगत आश्रयभूतं विश्रांतिस्थलं वर्तते । अतस्तस्य स्थलाभिधानं सम्यक् शोभते । एवमेव चिदचितां लयगमनाश्रयत्वात् सः लिङ्गमित्यप्यधीयते । अस्याखण्डलिङ्गस्य प्रकाशेनैव न केवलं सूर्यादयः परं त्वितरेऽपि जीवाः प्रकाशंते ॥ १३ ॥

**अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।**
**प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ १४ ॥**

अहमेव वैश्वानरो जठराग्निर्भूत्वा प्राणिनां देहमास्थित आश्रितस्सन् प्राणापानसमायुक्तः प्राणापानाभ्यां सहितश्चतुर्विधमन्नं भक्ष्यभोज्यलेह्यचोष्य-रूपं चतुःप्रकारमाहारं पचामि पक्वं करोमि ॥ १४ ॥

**सर्वस्य चाहं हृदि संनिविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च ।**
**वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् ॥ १५ ॥**

सर्वस्यापि प्रणिजातस्य अहमेव हृदि हृदयगुहायां सन्निविष्टोऽन्तर्यामि-तया अवस्थितः । स्मृतिः स्मरणं, ज्ञानं, अपोहनं ज्ञानविनाशः इदं सर्वमपि मत्त एव मत्कारणादेव भवति । सर्वस्यास्य अहमेव कारणमित्यर्थः । सर्वैरपि वेदैः ऋगादिभिरहमेव वेद्यः ज्ञेयोऽस्मि । सर्वे वेदा मामेव प्रति-पादयन्ति । अहमेव वेदान्तकृत् वेदान्तानामुपदेष्टा । वेदविदेव चाहं अहमेव सर्ववेदविदस्मि । सर्वव्यापकस्य मूर्तामूर्तरूपस्य परमात्मनो महत्त्वप्रशंसका

वेदाः पर्णशब्देन प्रागेव निर्दिष्टाः । अत एवं अद्भुतशक्तिविष्टस्य परमात्मनो महिमातिशयं वर्णयन्तो वेदाः तत्तत्रूपविज्ञानाय परमप्रमाणस्थानीया वर्तन्ते ॥

**द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।**
**क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ १६ ॥**
**उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।**
**यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ १७ ॥**

एवमेतावता संसारिरूपचेतनस्य स्वरूपं, ततो विशुद्धस्य जीवात्मनः परमात्मांशरूपत्वं, ततः परमात्मस्वरूपं चोपदिष्टम् । एवमुक्तमर्थं त्रिधा विभज्य वदति निष्कर्षतया ज्ञातुं सुलभ इति भावनया । लोके इमौ द्वौ क्षरश्चाक्षरश्चेति पुरुषौ स्तः । तत्र सर्वाणि भूतानि प्राणिजातानि क्षरः क्षरशब्दनिर्दिष्टानि । कूटस्थः निर्विकारः शुद्धस्तु चेतनः अक्षर इत्युच्यते । आभ्यामुत्तम उत्कृष्टोऽन्यः परमात्मेत्युदाहृतः । यः परमात्मा अव्ययो नित्यः ईश्वरः सर्वेश्वरस्सन् लोकत्रयमप्याविश्य सर्वलोकमपि व्याप्य तत्रान्तर्यामितया स्थित्वा बिभर्ति सर्वान् लोकान् धारयति । एवं च सर्वे प्राणिनः क्षरा उच्यन्ते । गुर्वनुग्रहेण दीक्षायां सुसंस्कृतो जीवः अक्षर उच्यते । अयमेव परमात्मलीलाविनोदभूमित्वात् अङ्गमिति व्यवह्रियते । सोऽपि पुरुषपदवाच्यः संपद्यते । तथैव उत्तमः पुरुष इत्यभिधीयमानः परमात्मा सर्वलोकव्याप्यपि प्रकृतिसंपर्कात् क्षीणशक्तिकस्य स्वबन्धोः पुरुषाह्वयस्य जीवस्योद्धाराय तदन्तर्यामितया तस्मिन् इष्टप्राणभावात्मकतया निवसन् लिङ्गमित्यभिधीयते । अङ्गलिङ्गयोरनयोरैक्यरूपं सामरस्यमधिगन्तव्यमस्मिन्नेव देहे इन्द्रियाणां सहकारेणेत्यसकृदुक्तमेव ॥ १६–१७ ॥

**यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।**
**अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ १८ ॥**

एवमितरापेक्षयोत्कृष्टस्य पुरुषोत्तमत्वे हेतुमुक्त्वा अहमेव स इत्युपदिशति ।

यस्मात् अहं उक्तं क्षरमक्षरं चातीतः अतिक्रम्य वर्तमानः उत्तमश्च वर्तामि। अत एव कारणात् लोके वेदे च पुरुषोत्तम इति प्रथितः प्रसिद्धोऽस्म्यहम्। विश्वव्यापकस्यामूर्तपरमशिवस्य पुरुषत्वं पुरुषसूक्ते स्पष्टं प्रतिपाद्यते। तस्मादधिकस्यान्यस्याभावात् तस्य पुरुषोत्तमत्वं प्रसिद्धम्। "विश्वाधिको रुद्रो महर्षिः" इत्यपि श्रूयते। कृष्णस्तु शिवतादात्म्येनैवं वदति ॥ १८ ॥

**यो मामेवमसंमूढो जानाति पुरुषोत्तमम्।**
**स सर्वविद्भजति मां सर्वभावेन भारत ॥ १९ ॥**

एवमुक्तार्थज्ञानस्य फलमाह। हे भारत अर्जुन! यः असम्मूढो मोहरहितः विवेकी मामेवमुक्तप्रकारेण पुरुषोत्तमं जानाति स एव सर्ववित् सर्वरहस्यज्ञो भूत्वा सर्वभावेन 'गतिर्भर्ता प्रभुस्साक्षी' इत्याद्यात्मना सर्वमप्यहमेवेति भावनया मां भजति सेवेत। एवं च मत्स्वरूपज्ञानामेव मद्भजनं सुशकं भवेदित्यर्थः ॥ १९ ॥

**इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ।**
**एतद्बुध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत ॥ २० ॥**

एतादृशस्य स्वतत्त्वज्ञानस्य परमरहस्यत्वं परमोपादेयत्वं च वदन् अध्यायमुपसंहरति। हे अनघ दोषरहित अर्जुन! इत्येवं प्रकारमिदं गुह्यतममत्यन्तरहस्यभूतं शास्त्रं मया उक्तमुपदिष्टम्। हे भारत अर्जुन! एतत् रहस्यं बुध्वा तेनैव नरः बुद्धिमान् स्यात् नात्वन्यज्ञानेन। एवमेतज्ज्ञानेनैव च सः कृतकृत्यस्स्यात्। मनुष्यजन्म संप्राप्य यत्कर्तव्यं तदपि तदानीमेव कृतं स्यात्। अन्यथा तु निरर्थकमेव तस्य जन्मेति भावः ॥ २० ॥



## षोडशाध्यायः

पूर्वं नवमाध्याये "दैवीं प्रकृतिमाश्रिताः" 'आसुरं भावमाश्रिताः' इत्यादिना दैवीप्रकृतिः आसरीकृतिश्चेति प्रकृतिद्वयं निर्दिष्टम्। तयोः स्वरूपमवश्यज्ञेयत्वादस्मिन्नध्याये विस्तरेणोपदिश्यते ॥

**अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।**
**दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥ १ ॥**
**अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम् ।**
**दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ॥ २ ॥**
**तेजः क्षमाः धृतिः शौचमद्रोहो नातिमानिता ।**
**भवन्ति संपदं दैवीमभिजातस्य भारत ॥ ३ ॥**

श्रीभगवानुवाच । अभयं भयाभावो धैर्यम् । सत्त्वसंशुद्धिस्सत्त्वस्यान्तःकरणस्य परिशुद्धता । ज्ञानयोगव्यवस्थितिः ज्ञानयोगे द्वितीयाध्यायादौ उपदिष्टे निष्ठा । दानं यथाशक्ति स्वद्रव्यस्य परेभ्यस्त्यागः । दमो बाह्येन्द्रियाणामुपशमः । यज्ञो स्वेष्टदेवपूजनम् । स्वाध्यायः स्वस्य शाखाध्यायनम् । तपः उतरत्र वक्ष्यमाणं कायिकं वाचिकं मानसिकं च त्रिविधम् । आर्जवं सर्वदा ऋजुतया वर्तनम् । अहिंसा प्राणिपीडनवर्जनम् । सत्यं अप्रियानृतवर्जितं भूतहितवचनम् । अक्रोधः परैः पीडितस्यापि कोपाऽकरणम् । त्यागः मानसिकाशानां त्यागः । शान्तिरन्तःकरणोपशमः । अपैशुनं परस्मै परदोषप्रकटनाऽभावः । दया दुःखितेषु कृपा । अलोलुप्त्वं विषयसान्निध्येऽपि इन्द्रियाचापल्याभावः । मार्दवमकठिनहृदयत्वम् । ह्रीरकार्यादौ लज्जा । अचापलं मनस अचाञ्चल्यम् । तेजश्च प्रभावः । क्षमा सहना । धृतिः देहादिपीडनेऽपि तदलक्षीकरणाख्यं मनस्स्थैर्यम् । शौच बाह्याभ्यन्तरशुद्धिः । अद्रोहः परवञ्चनाभावः । नातिमानिता अत्यन्तं मानोऽतिमानो गर्वस्तदभावः । हे भारत अर्जुन ! एतानि दैवीं संपदं अभि अभिमुखीकृत्य जातस्य

जीवस्य संभवन्ति । एतादृग्गुणवतः पुरुषस्य दिव्यैश्वर्यप्राप्त्याद्यर्हता अस्तीत्यवगन्तव्यमित्यर्थः ॥ १–३ ॥

**दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च ।**
**अज्ञानं चाभिजातस्य पार्थ संपदमासुरीम् ॥ ४ ॥**

अथ आसुरीं संपदमाह । दम्भो धर्मकंचुकत्वं, कीर्त्याद्यर्थं धर्माचरणमित्यर्थः । दर्पो विद्याधनादिप्रयुक्तो मदः । अभिमानो गर्वः । क्रोधः कोपशीलता । पारुष्यं क्रौर्यम् । अज्ञानमविवेकः । हे पार्थ अर्जुन ! एतानि आसुरीं संपदमपि अभिमुखीकृत्य जातस्य जीवस्य भवन्ति । एतादृशगुणवान् असुरभावार्ह इत्यवगन्तव्यमित्यर्थः ॥ ४ ॥

**दैवी संपद्विमोक्षाय निबन्धायासुरी मता ।**
**मा शुचः संपदं दैवीमभिजातोऽसि पाण्डव ॥ ५ ॥**

दैवी संपत् विमोक्षाय मोक्षप्राप्तये मता । आसुरी संपच्च निबन्धाय पुनःपुनः संसारबन्धाय मता तत्तत्फलप्रदेत्यर्थः । एवं भगवतोक्ते किमहमासुरीसंपद्वान् उत दैवीसंपद्वान् इति संशयमापन्नमर्जुनमिङ्गितादिभिर्ज्ञात्वा भगवान् तस्य धैर्यमुत्पादयति मा शुचेति । हे पाण्डव अर्जुन ! त्वं दैवीं संपदमभिमुखीकृत्यैव जातोऽसि न त्वासुरीसंपदम् । अतो भवतो मोक्षार्हतायाः सत्त्वात् मा शुचः शोको न कर्तव्यो भवता ॥ ५ ॥

**द्वौ भूतसर्गौ लोकेऽस्मिन्दैव आसुर एव च ।**
**दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु ॥ ६ ॥**

एवमासुरीसंपदः सङ्ग्रहेणोपदेशेन अतृप्यन् भगवान् अवश्यज्ञेयत्वेन आसुरीसंपत्स्वरूपं विस्तरेण वक्तुं पीठिकामारचयति । हे पार्थ अर्जुन ! अस्मिन् लोके दैव आसुर एवेति द्वौ भूतसर्गौ भूतानां प्राणिनां सृष्टी द्विविधा सृष्टिः कृताऽस्ति । तयोर्दैवस्सर्गो विस्तरशश्च प्रोक्तः ' अभयं सत्त्वसंशुद्धि'रित्यादिना । अद्य विस्तरशश्च आसुरं आसुरसर्गं वदामि शृणु ॥

प्रवृत्तिं च निवृत्तिं च जना न विदुरासुरा ।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥ ७ ॥
असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसंभूतं किमन्यत्कामहैतुकम् ॥ ८ ॥

ते आसुरा ह्यासुरीप्रवृत्तिमन्तः पुरुषास्तु जगत्सर्वमपि असत्यं मिथ्यैवेति आहुः । एवमप्रतिष्ठं अस्य जगत आधारत्वेन परब्रह्मादिकं न किञ्चिदस्ति इत्याहुः । अत एवेदं जगत् अनीश्वरमीश्वररहितं आहुः । तर्हि जगतस्तु प्रवृत्तिरेव कथमिति ते जानन्तीत्यत्राह । अपरस्परसंभूतं परस्पर-संपर्कवशाज्जातं अत एव कामहैतुकं 'सर्वमपि काममूलकस्त्रीपुरुषसंपर्कादेव प्रवर्तते नान्यत्किञ्चित् दैवादिकं कारणमस्ति' इत्याहुः ॥ ८ ॥

एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥ ९ ॥

एतां दृष्टिं उक्तनास्तिक्यबुद्धिमवष्टभ्याश्रित्य नष्टात्मानो ह्यात्मनाशं संपादितवन्तोऽत एवाल्पबुद्धयो विषयासक्तमानसास्तदर्थमुग्रकर्माणो जगतोऽहिता लोकशत्रवो जगतो हि क्षयाय लोकनाशार्थं प्रभवन्ति उद्भवन्ति । ते आसुरप्रकृतय एवं लोकं नाशयन्ति ॥ ९ ॥

काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः ।
मोहाद्गृहीत्वाऽसद्ग्राहान् प्रवर्तन्तेऽशुचिव्रताः ॥ १० ॥

दुष्पूरं पूरयितुमशक्यं कामं तृष्णामाश्रित्य वर्तमाना दम्भमानमदा-न्विता जम्भाहङ्कारदर्पैर्युक्ता ह्यसद्ग्राहान् असदर्थविषये ग्राहास्तान् गृहीत्वा तद्वन्त इत्यर्थः । अशुचिव्रता ह्यपरिशुद्धाचरणपराः प्रवर्तन्ते । स्वकामपूरणाय सर्वदा प्रयतन्त इत्यर्थः ॥ १० ॥

चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः ।
कामोपभोगपरमा एतावदिति निश्चिताः ॥ ११ ॥

**आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ।**
**ईहन्ते कामभोगार्थमन्यायेनार्थसञ्चयान् ॥ १२ ॥**

अपरिमेयां अवधिरहितां प्रळयान्तां सर्वनाशे पर्यवसायिनीं चिन्तामुपाश्रिताश्च कामोपभोगपरमा विषयोपभोग एव परमपुरुषार्थ इति मन्वानाः, एतावदिति निश्चिता एतदपेक्षया नान्यत् किञ्चिदस्तीति निश्चयवन्तो ह्याशापाशशतैः आशा एव पाशास्तेषां शतैर्बद्धा नियमिताः कामक्रोधपरायणाः कामक्रोधपरवशा ह्यन्यायेन अपामार्गेण अर्थसञ्चयान् द्रव्यसंपादनानि कृत्वा कामभोगार्थं केवलविषयभोगार्थमीहन्ते प्रयतन्ते ॥ ११–१२ ॥

**इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम् ।**
**इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥ १३ ॥**

**असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।**
**ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी ॥ १४ ॥**

**आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ।**
**यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥ १५ ॥**

**अनेकचित्तविभ्रान्ता मोहजालसमावृताः ।**
**प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥ १६ ॥**

"इदं धनादिकमद्य मया मयैव लब्धं, इमं च मनोरथं मनसा उद्दिष्टं प्राप्स्ये लप्स्य एव । इदं च ममैवास्ति । इदमपि धनं पुनर्ममैव भविष्यति" इत्येवमादिरर्थाशानामनुवादः । "असौ शत्रुरिदानीं मयैव हतः । एवमेव अपरानपि मदनिष्टकारिणो हनिष्ये ।" "अहमेव ईश्वरस्सर्वसमर्थः । अहमेव भोगी । अहमेव सिद्धस्संपन्नः । अहं बलवान्, सुखी आढ्यो धनादिभिश्च पूर्णः । अभिजनवानुत्तमकुलजातोऽहमस्मि । मया सदृशोऽन्यः को वाऽस्ति । यक्ष्ये दास्यामि, मोदिष्ये इति सर्वं कर्तुमहं समर्थोऽस्मीत्यस्यानुकरणम् । इत्येवमज्ञानेन विमोहिता ह्यविवेकमापन्नाः । अनेकचित्त-

विभ्रान्ताः उच्चैरनेकविधैश्चित्तैर्विशेषेण भ्रान्ताः । मोहजालसमावृता मोह एव जालं बन्धसाधनं तेन समावृतास्तदन्तःपतिताः । कामभोगेषु इन्द्रियसुखेषु प्रसक्ताः प्रकर्षेण सक्तास्तदेकपरायणाः । एतद्दशा एते आसुरप्रकृतयोऽन्ततो ह्यशुचौ नरके निरये पतन्ति ॥ १३–१६ ॥

**आत्मसंभाविताः स्तब्धा धनमानमदान्विताः ।**
**यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥ १७ ॥**

आत्मसंभाविता आत्मानं सर्वगुणविशिष्टतया आत्मनैव संभावयंतस्स्तब्धा अविधेयाः धनमानमदान्विता धनेन मानेन अहङ्कारेण मदेन च अन्विता दम्भेन स्वस्य योग्यत्वादिख्यापनोद्देशेन नामयज्ञैराडम्बरप्रयुक्तनामोच्चारणरूपैर्यज्ञैराराधनैरविधिपूर्वकं अक्रमरीत्या यजंते यज्ञादिकर्म आचरंति ॥

**अहंकारं बलं दर्पं कामं क्रोधं च संश्रिताः ।**
**मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥ १८ ॥**

अहङ्कारं सर्वोत्तमतया आत्मनः परिज्ञानमहङ्कारस्तम् । बलं शरीरादिबलम् । दर्पं कामं क्रोधं च संश्रितास्तानाश्रित्य वर्तमाना आत्मपरदेहेषु स्वपरशरीरेषु सर्वत्र अंतर्यामितया वर्तमानं मां प्रद्विषन्तोऽपलपंतः । अभ्यसूयका असूयापरवशा एते 'दम्भेन नामयज्ञैर्यजंते' इत्यनेनान्वयः ॥

**तानहं द्विषतः क्रूरान्संसारेषु नराधमान् ।**
**क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ १९ ॥**

**आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।**
**मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥ २० ॥**

एवमासुरीप्रकृतिस्वरूपमुक्त्वा तद्गतां गतिमाह । द्विषतस्सन्मार्गद्वेषिणः क्रूरान् संसारेषु सर्वलोकेषु नराधमान् परमनीचान् तान् अशुभान् पापिनोऽजस्रं सर्वदा आसुरीष्वेव योनिषु जन्मसु क्षिपामि । एवमासुरीं योनिं जन्म आपन्नाः प्राप्तास्ते जन्मनि जन्मनि प्रतिजन्म मूढा मूर्खा भूत्वा हे

कौन्तेय अर्जुन ! मां परमात्मानमप्राप्यैव कदाप्यप्राप्य ततस्ततोऽप्यधमां गतिं यांति । पुनर्न तेषामुत्पत्तिरिति भावः ॥ १९–२० ॥

**त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।**
**कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥ २१ ॥**

आसुरीसंपदं सङ्गृह्याह । कामः क्रोधो लोभ इतीदं त्रिविधं नरकस्य द्वारं आत्मनो नाशनं विनाशकं च । इदं त्रयमेव सर्वानर्थमूलम् । तस्मात् कारणात् एतत्त्रयं त्यजेत् दूरतो वर्जयेत् 'शिवध्यानपरायणो विवेकी अन्यथा सर्वनाश एव संभवेत् ॥ २१ ॥

**एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः ।**
**आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ॥ २२ ॥**

एतत्त्रयपरित्यागफलमप्याह—हे कौन्तेय अर्जुन ! तमोद्वारैर्नरकद्वारभूतैरेतैस्त्रिभिः कामक्रोधलोभैर्विमुक्तो नर आत्मनस्स्वस्य श्रेयो हितमाचरति आचरितुमर्हो भवति । एवं भगवदाराधने भगवद्भक्तशुश्रूषायां च आसक्तो भवति । तादृशः श्रेयस आचरणेन परां गतिं अमृतस्थितिं भावलिङ्गैक्यं याति प्राप्नोति अनुभवतीत्यर्थः ॥ २२ ॥

**यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।**
**न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ २३ ॥**
**तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।**
**ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥ २४ ॥**

आत्मनो हितं कथं ज्ञातुमनुभवितुं शक्यमस्माकमित्यत्राह । यो नरः शास्त्रविधिक्रममुत्सृज्य कामकारतस्स्वेच्छाचारतः प्रवर्तते व्यवहरति सः सिद्धिं पुरुषार्थसिद्धिं नावाप्नोति । अत एव सुखमपि नाप्नोति, परां गतिं सद्गतिं च नाप्नोति । तस्मात् ते तव कार्याकार्यव्यवस्थितौ इदं कार्यं इदमकार्यं इति

निर्णये शास्त्रमेव प्रमाणं नान्यत्। अतश्च शास्त्रविधानोक्तं क्षत्रियस्य युद्धादिकं यत्कर्म तदेव कर्तुमर्हसि त्वं, न तु स्वेच्छाचारतः स्वधर्मत्यागं कर्तुमर्हसि। इत्यर्जुनमुपादिशत्परमात्मा ॥ २३–२४ ॥

---

## सप्तदशाध्यायः

"यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः। न स सिद्धिमवाप्नोति न सुखं न परां गतिम्' इति भगवतोक्ते तर्हि तेषां का गतिरिति जिज्ञासुरर्जुन उवाच—

**ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः।**
**तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ॥ १ ॥**

ये तु केचन शास्त्रविधिं शास्त्रोक्तक्रमं उत्सृज्य परित्यज्य श्रद्धया आस्तिक्यबुध्या अन्विता युक्ताः सन्त एव यजन्ते देवादीन् पूजयन्ति, हे कृष्ण! तेषां निष्ठा अवस्थानं का किंरूपम्? सत्त्वं किं सत्त्वरूपम्? आहो अथवा रजः रजोरूपम्? अहो तमः तमोरूपम्? श्रद्धयान्विता इत्युक्तत्वात् सात्विकत्वमपि भवितुमर्हतीति प्रष्टुरर्जुनस्याशयः ॥ १ ॥

**त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा।**
**सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥ २ ॥**

प्रश्नस्योत्तरं श्रीभगवानुवाच। देहिनां प्राणिनां स्वभावजा सहजा सा श्रद्धा सात्विकी राजसी तामसी चेति त्रिविधा भवति। तां वक्ष्यमाणां शृणु ॥ २ ॥

**सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत ।**
**श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥ ३ ॥**

हे भारत अर्जुन ! सर्वस्य हि प्राणिनः श्रद्धा सत्त्वानुरूपा तत्तदन्तः-करणानुरूपा भवति । अन्तःकरणं च प्रतिपुरुषविलक्षणम् । अतश्च श्रद्धापि सहजत एव परस्परविलक्षणा भवतीत्यशयः । अयं हि पुरुषः श्रद्धामयः । अस्यैव विवरणमिदम् । यो यच्छ्रद्धः यादृशश्रद्धावान् भवति सः तादृशश्रद्धामय एव भवति । सदा तदेकचित्तस्य तद्भावापत्तिर्दृश्यत एव । यस्य सर्वाण्यपीन्द्रियाणि सर्वदा परमात्मानमेव लक्षीकुर्वंति सः परमात्मनिष्ठ एव भवति ; तदीयं मनश्च तदेकासक्तं सत् तद्भावमेवा-धिगच्छति । निर्मलं मन एव शिखिकर्पूर इव महादेवस्वरूपं भवतीति अनुभविनो वदंति ॥ ३ ॥

**यजन्ते सात्त्विका देवान्यक्षरक्षांसि राजसाः ।**
**प्रेतान्भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥ ४ ॥**

कथमयं श्रद्धाभेदो ज्ञातुं शक्येतेत्यत्राह । सात्विकाः सात्विक-श्रद्धावन्तो जना देवान् यजन्ते पूजयंति । राजसाः राजसश्रद्धावन्तो जना यक्षरक्षांसि यजंते । अन्ये च तामसाः तामसश्रद्धावंतो जनाः प्रेतान् भूत-गणान् भूतप्रेतपिशाचादीन् प्रसिद्धान् यजंते । एवमेषां कार्येणैव तेषां श्रद्धायाः स्वरूपमपि अनुमेयमित्यर्थः । शरणास्त्वत्र उदाराशयमभिव्यक्तवंतः । भूतप्रेतोपासनविषये तेषामभिप्रायो विलक्षणो वर्तते । “ मारीति लोके प्रथिताऽतिरिक्ता नास्त्येव, वक्रेक्षणमेव मारी । विभिन्नरूपेण च भाषमाणा जिह्वैव मारी कथिता नयज्ञैः । स्मर्तव्यवस्त्वस्मरणं हि मारी, ह्येतां च मारीं त्यजतः सुखं स्यात् ॥ ” इति । एवं भूतादिशक्त्युपासनस्य अपरमर्थं परिकल्पयंतः शरणाः सच्चारित्र्यस्य प्रामुख्यतां वदन्तः सर्वेष्वपि वर्तमानस्य मार्याख्यदोषस्य विसर्जनार्थं वीर्यवत्तरया वाण्योपदिशन्ति ॥ ४ ॥

अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः ।
दम्भाहंकारसंयुक्ताः कामरागबलान्विताः ॥ ५ ॥
कर्षयन्तः शरीरस्थं भूतग्राममचेतसः ।
मां चैवान्तःशरीरस्थं तान्विद्ध्यासुरनिश्चयान् ॥ ६ ॥

एवं श्रद्धाविभागमुक्त्वा प्रकृतस्यार्जुनप्रश्नस्योत्तरमाह । अशास्त्रविहितं शास्त्रोक्तक्रमरहितं घोरं प्राणिनां आत्मनो वापि पीडाकरं तपः ये जना दम्भाहङ्कारासंयुक्ता दम्भेन अहङ्कारेण च संयुक्ताः । कामरागबलान्विताः कामः काम्यमानस्वर्गादिविषयकेच्छा । रागो नाम तद्विषयभोगाभिलाषरूपः । एवं बलं हठात् कार्यसाधनोपयोगि दैहिकं बलम् । एभिरन्वितास्संतः तपस्तप्यन्ते । अन्ये तु शरीरस्थं स्वशरीरे विद्यमानं भूतग्रामं करणसमुदायं, अन्तश्शरीरस्थं अन्तर्यामित्वेन तच्छरीरान्तर्वर्तिनं मां चैव कर्शयन्तः कृशीकुर्वन्तः । पीडयन्त इति भावः । अचेतसोऽविवेकिनस्तप्यन्ते तानासुरनिश्चयान् असुरसन्बन्ध्युग्रनिश्चयवतो विद्धि जानीहि । अत्राद्यश्लोकेन रजोनिष्ठाः, द्वितीयश्लोकेन तमोनिष्ठाश्च पुरुषाः कथिताः । एतदुभयविधदोषरहिता एव सात्त्विकनिष्ठा इति स्वतः सिध्यतीत्याशयः ॥ ५–६ ॥

आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः ।
यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥ ७ ॥

एवं निष्ठाया यथा त्रैविध्यं तथा आहारादावपि अस्ति त्रैविध्यमिति प्रसङ्गादुपदिशति । सर्वस्य जगतः आहारोऽपि तत्तदनुगुणतया प्रियस्त्रिविधो भवति । एवमेव यज्ञस्तपो दानं चेति सर्वं तथैव त्रिविधम् तेषामिदं वक्ष्यमाणभेदं शृणु ॥ ७ ॥

आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः ।
रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः ॥ ८ ॥

आयुर्जीवनम् । सत्त्वमन्तःकरणशुद्धिः । बलं कार्यकरणोपयोग-

शक्तिः । आरोग्यं रोगाभावः । सुखं तृप्तिः । प्रीतिस्तु संतोषः । एतेषां विवर्धना वर्धकाः । रस्या रसोपेताः । स्निग्धास्स्नेहयुक्ताः । स्थिरा देहे चिरकालं वर्तमाना हृद्या हृदयङ्गमाश्च आहारास्सात्त्विकप्रियास्सात्त्विकजनभोग्याः ॥

कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ।
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥ ९ ॥

कटुस्तिक्तः । अम्लो लवणः । अत्युष्णः । तीक्ष्णः । रूक्षः स्नेहरहितः । एतादृशो विदाहिनस्सन्तापजनकाः । दुःखशोकामयप्रदाः दुःखं पीडा, भूतः, आमयो व्यधिरेतत्प्रदा आहारा राजसस्य रजोगुणप्रकृतिकस्य शोकस्तत्फलशरीरस्य इष्टा भवन्ति ॥ ९ ॥

यातयामं गतरसं पूति पर्युषितं च यत् ।
उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥ १० ॥

यातयामं मंदपक्वम् । गतरसं नीरसम् । पूति दुर्गंधम् । पर्युषितं परित्यक्तम् । उच्छिष्टं तुच्छमपरिशुद्धं च यद्भोजनं तत् तामसप्रियं तमोगुण-प्रकृतिकस्य शरीरस्य प्रियं भवति ॥ १० ॥

अफलाकांङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते ।
यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥ ११ ॥

अफलाकांक्षिभिः फलाकांक्षारहितैर्नरैर्विधिदृष्टः शास्त्रोक्तो यज्ञो यष्टव्य-मेवेति मनस्समाधाय ममेदं कर्तव्यमिति मनसि निर्णयेन य इज्यते क्रियते स यज्ञस्सात्विकः कथ्यते । विनैव फलापेक्षां देहेन्द्रियमनोबुध्यादिभिस्सकलैः करणैः क्रियमाणमाराधनं मदीयं कर्तव्यमिति भावनया यो गुरुदेवपूजारूपो यज्ञः क्रियते स सात्विकस्स्मृतः ॥ ११ ॥

अभिसन्धाय तु फलं दम्भार्थमपि चैव यत् ।
इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥ १२ ॥

हे भरतश्रेष्ठ अर्जुन ! फलमभिसंधाय फलोद्देशेन दंभार्थं कीर्त्या वा यत् इज्यते क्रियते तं यज्ञं राजसं विद्धि । कीर्तिप्रतिष्ठाकांक्षया पुत्राद्यैहिकफलप्राप्तये वा यो यज्ञो भगवधाराधनरूपः आडंबरेण क्रियते स राजसः कथ्यते ॥ १२ ॥

**विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।**
**श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥ १३ ॥**

विधिहीनं शास्त्रक्रमरहितम् । असृष्टान्नं शिवानुभविभोजनादिरहितम् । मंत्रहीनं मंत्ररहितम् । अदक्षिणं दक्षिणरहितम् । श्रद्धाविरहितं च कर्मतामसं परिचक्षते । एतादृशं भगवदाराधनं निरर्थकमनर्थकारि च भवेत् ॥

**देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।**
**ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥ १४ ॥**

अथ तपस्त्रैविध्यमाह । देवा इन्द्रादयः । द्विजाः ब्रह्मज्ञानसाधकं प्रसादरूपं द्वितीयं जन्म प्राप्तवन्तः । गुरुस्तत्त्वोपदेष्टा आचार्यः । प्राज्ञो ब्रह्मज्ञानी । एतेषां पूजनं, शौचं परिशुद्धिः । आर्जवं ऋजुत्वम् । ब्रह्मचर्यमिन्द्रियजयः । अहिंसा च शारीरं तप उच्यते । देहस्तु भगवत्पूजार्थमेव समागत इति शरणा अपि स्वानुभवं प्रमाणीकृत्य वदंति । भगवद्भावनया जगत्प्रीणनमपि शारीरं तप एव । दीनदरिद्रानाथानां क्लेशपरिहारोऽपि तदेव । यद्य क्रियते तत्सर्वमपि दैहिकं तप एव ॥ १४ ॥

**अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।**
**स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥ १५ ॥**

अनुद्वेगकरं इतरस्य दुःखानुत्पादकं यद्वाक्यं सत्यं यथार्थं प्रियहितं च यदस्ति तदेव वाङ्मयं तप उच्यते । तथैव स्वाध्यायो वेदाध्ययनम् । तच्च वाङ्मयं तप एव । वाङ्मयं तप एवं प्रशंस्यते शरणैः । "उक्तं तु मुक्ताफलसन्निभं स्यात् तथैव तत्स्यान्मणिदीप्तितुल्यम् । तथैव तत्स्यात्स्फटिकोपमं हि

तदेव चिद्रूपमखण्डलिङ्गम् ॥ हृदन्तरे सन्निहितं च लिङ्गं स्यात्स्यादितीमां प्रवदेद्धि वाचम् । उक्तानुरूपं यदि कर्म न स्यात् देवस्सदा नैति वशं नरस्य ॥ अतस्तु वाक्कायकसामरस्यं निरीक्ष्यते सज्जनचातकैस्तु ।" इति । एवं त्रिकरण-शुद्ध्या परहितार्थं यदुच्यते तदेव वाङ्मयं तप इत्यनुभविभिरुच्यते । तादृक्सर्वाभयप्रदानं भगवत्प्रियं सत् वाङ्मयं तप इति परिकीर्तितम् । एतदेव मानवस्य हृदयनैर्मल्यमावेदयति ॥ १५ ॥

मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।
भावसंशुद्धिरित्येतत् तपो मानसमुच्यते ॥ १६ ॥

मनःप्रसादो मनसः प्रसन्नता । सौम्यत्वं सौमनस्यम् । मौनं वाक्-संयमहेतुभूतो मनस्संयम आत्मविनिग्रहः अन्तःकरणजयः । भावसंशुद्धिः मनोभावस्य परिशुद्धता । इत्येतत् मानसं तप उच्यते ॥ १६ ॥

श्रद्धया परया तप्तं तपस्तत् त्रिविधं नरैः ।
अफलाकांक्षिभिर्युक्तैः सात्विकं परिचक्षते ॥ १७ ॥

एवं कायिकवाचिकमानसिकभेदेन तपस्त्रैविध्यमुक्त्वा इदानीं सात्विका-दिभेदेनापि तस्य त्रैविध्यमाह । परया उत्तमया श्रद्धया निष्ठया सह अफला-कांक्षिभिः फलापेक्षारहितैर्युक्तैः समाहितैर्नरैर्यत् त्रिविधं कायिकं वाचिकं मानसिकं च तपः तत् सात्विकं तप इति परिचक्षते वदन्ति ज्ञानिनः । फलापेक्षां विनापि श्रद्धया क्रियमाणं तपस्सात्विकं तप इत्यर्थः ॥ १७ ॥

सत्कारमानपूजार्थं तपो दम्भेन चैव यत् ।
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥ १७ ॥

सत्कारमानपूजार्थं सत्कारः पुरस्कारः । मानः सम्माननम् । पूजा प्रणामार्चनादिः । एतदुद्देशेन दम्भेन प्रतिष्ठाकामनादिना वा यत्तपः उक्त-त्रिविधतः क्रियते तत् तपः राजसं प्रोक्तम् । तच्च चलमध्रुवं च प्रोक्तम् ।

चलं न स्थिरम् । अध्रुवं कादाचित्कफलं च । सत्काराद्युद्देशेनैव तपःकरणात् तदुद्देशप्राप्तौ स्वयमेव तदपि निवर्तेतेत्यर्थः ॥ १८ ॥

मूढग्राहेणात्मनो यत्पीडया क्रियते तपः ।
परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥ १९ ॥

मूढग्राहेण अविवेकमूलकाग्रहेण दुरभिमानेन आत्मनः पीडया आत्महिंसनपुरस्सरं परस्योत्सादानार्थं इतरहिंसनार्थं बा यत् तपः क्रियते तत् तपः तामसमुदाहृतम् । स्वपरहिंसाफलकं तपस्तामसमित्यर्थः ॥ १९ ॥

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥ २० ॥

दातव्यमिति । इदं मम कर्तव्यमिति कर्तव्यभावनया अनुपकारिणे प्रत्युपकारासमर्थायापि । देशे पुण्यदेशे, काले पुण्यकाले, पात्रे गुरुदेवरूपे सत्पात्रे च यद्दानं दीयते । फलं पचतीतिवत् प्रयोगः । दीनानाथेभ्य-श्चेश्वरप्रीत्यर्थं यत् दीयते तत् दानं सात्विकमिति स्मृतम् ॥ २० ॥

यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।
दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् ॥ २१ ॥

यत्तु दानं प्रत्युपकारार्थं प्रत्युपकारोद्देशेन वा फलमुद्दिश्य वा पुण्यादि-फलप्राप्त्युद्देशेन परिक्लिष्टं खेदपुरस्सरं दीयते तद्दानं राजसं स्मृतम् ॥ २१ ॥

अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।
असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥ २२ ॥

अदेशे काले अदेशे अकाले च अपुण्यदेशे अपुण्यकाले चेत्यर्थः । अपात्रेभ्य असत्पात्रेभ्यश्च असंस्कृतं सत्काररहितं यथा तथा अवज्ञातं तिरस्कारनिन्दादिपूर्वकं वा यद्दानं क्रियते तत्तामसं दानमुदाहृतं कथितम् ॥ २२ ॥

**ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः पुरा ।**
**ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥ २३ ॥**

यज्ञदानतपःप्रभृतीनां कर्तव्यप्रकारमुपदेष्टुमिच्छन् तत्पीठिकामाह । ब्रह्मणः परमशिवस्य ओं तत्सदिति निर्देशः कथनं त्रिविधः त्रिप्रकारः स्मृतः शिवानुभविभिः कथितः । ब्राह्मणाः तन्नामानः वेदभागाः, वेदा ऋगादयः, यज्ञाश्च भगवदाराधनानि पुरा सृष्ट्यारंभे तेन त्रिविधनिर्देशेनैव विहिताः सृष्टाः । ब्राह्मणाः, वेदाः, यज्ञाश्च परशिवस्य निकटसम्बन्धवन्तः । अतः परशिवनिर्देशकैः ओं तत्सदिति शब्दैरेव ते सृष्टा इत्यर्थः । " वेदशब्देभ्य एवादौ देवादीनां चकार सः " इत्यादौ वेदशब्देभ्य एव सकलजगत्सृष्टिः प्रसिद्धा ॥ २३ ॥

**तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।**
**प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥ २४ ॥**

उक्तस्यार्थस्य प्रकृते प्रयोजनकथनम् । तस्मात् ओं तत्सदितिशब्दस्य परमात्मनिर्देशरूपत्वादेव ब्रह्मवादिनां ब्रह्मवदनशीलानां ब्राह्मणानां विधानोक्ताश्शास्त्रोक्तास्सर्वा अपि यज्ञदानतपःक्रिया यज्ञो यागः, दानं तपश्चेत्येताः क्रियास्सततं सर्वदा प्रवर्तन्ते आचर्यन्ते । उक्तशब्दत्रयोच्चारणपूर्वमेव सर्ववैदिककर्मसु ज्ञानिनां प्रवृत्तिर्दृश्यत इत्यर्थः ॥ २४ ॥

**तदित्यनभिसंधाय फलं यज्ञतपःक्रियाः ।**
**दानक्रियाश्च विविधाः क्रियन्ते मोक्षकांक्षिभिः ॥ २५ ॥**

सामान्यन्यायमुक्त्वा विशेषन्यायमप्याह । तदिति परशिववाचकपदेन फलमनभिसंधाय फलोद्देशमन्तरा मोक्षकांक्षिभिर्मोक्षार्थिभिर्विविधा बहुविधा यज्ञतपःक्रिया यज्ञरूपास्तपोरूपाश्च क्रियास्तथैव दानक्रियाश्च क्रियन्ते अनुष्ठीयन्ते । तत्तत्कर्मणो विहितं फलमनुद्दिश्य केवलपरमात्मप्रीत्यर्थं तन्मूलमोक्षावाप्तये च क्रियमाणं यज्ञादिकं सर्वमपि तदेवेति परशिववाचकपदो-

च्चारणपूर्वकं कर्तव्यमित्यर्थः ॥ २५ ॥

**सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते ।**
**प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते ॥ २६ ॥**

सच्छब्दस्य विनियोगं विवक्षुः प्रथमं सच्छब्दस्यार्थमाह । हे पार्थ अर्जुन ! सद्भावे समीचीनभावे । अस्यैव विवरणं साधुभाव इति । सद्भावो नाम साधुभाव एव । सत्पुरुषं निर्दिश्य " साधुरयं " इति लोके व्यवहारो दृश्यते । अतस्सद्भावे साधुभावे च सदित्ययं शब्दः प्रयुज्यते । तथा तद्वदेव प्रशस्ते उत्तमे कर्मणि च सच्छब्दः प्रयुज्यते । सत्पुरुष इतिवत् उत्तमं कर्मापि सत्पदेन लोके निर्दिश्यते ॥ २६ ॥

**यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते ।**
**कर्म चैव तदर्थीयं सदित्येवाभिधीयते ॥ २७ ॥**

यज्ञे तपसि दाने वा सदितिशब्दस्य स्थितिरूपयोग उच्यते । तेषां शास्त्रविहितत्वेन सत्कर्मत्वात् तत्र सच्छब्दप्रयोगश्च पण्डितैः क्रियत इत्यर्थः । तदर्थीयं परमेश्वरतृप्तिप्रयोजनकं कर्म च तद्वदेव सत्कर्मत्वात् सदित्येवाभिधीयते । तथा च भगवत्प्रीत्यर्थं क्रियमाणानां सर्वेषामपि सत्कर्मणां ओं तत्सदिति शब्दत्रयेण निर्देशः कथितः ॥ २७ ॥

" ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः । तेषां निष्ठा तु का ? " इति प्रश्ने शास्त्रक्रममुद्दिश्य क्रियमाणानां राजसतामसत्वं प्रतिपाद्य प्रसङ्गात् यज्ञदानतपःप्रभृति सात्विकादिभेदं चोपदिश्य अन्ते श्रद्धाविहीनं कर्म शास्त्रचोदितमपि नैव फलप्रदं भवेदित्युपसंहरति—

**अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।**
**असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥ २८ ॥**

अश्रद्धया हुतं श्रद्धां विना यत् हुतं होमादिकं कृतं, दत्तं दानं कृतं, तपस्तप्तमाचरितं, यच्चान्यत् स्तुतिनमस्कारादिकं कृतं, हे पार्थ अर्जुन ! तत्

असदित्युच्यते असत्कर्मेत्येवोच्यते । असत्कर्म प्रेत्य मरणानन्तरमपि न च नोद्दिष्टफलप्रदं भवेत् ; नो इह अत्रापि न फलति । अतश्शास्त्रविहितत्वं श्रद्धा उभयमप्यावश्यकम् । नत्वन्यतरेण फलप्राप्तिरित्यर्थः ॥ २८ ॥

## अष्टादशाध्यायः

एवमुपदेष्टव्यं सर्वमुपदिष्टं भगवता अर्जुनाय । परन्तु मुख्यविषयाणां यत्र तत्र विक्षिप्तत्वात् सुलभतया मनस अवधानं न कर्तुं शक्यमिति सर्वशास्त्रसारोऽस्मिन्नध्याये उपदिश्यते । तदनुगुणतया च प्रश्नोपक्षेपार्थमर्जुन उवाच—

**संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम् ।**
**त्यागस्य च हृषीकेश पृथक्केशिनिषूदन ॥ १ ॥**

हे महाबाहो ! केशिनिषूदन ! हृषीकेश ! इति भक्त्यतिशयेन कृष्णं प्रति संबोधनत्रयम् । केशिनामकं कञ्चन असुरं कृष्णो निषूदितवानिति भागवते कथा श्रूयते । अतस्सः केशिनिषूदन इत्युच्यते । अहं संन्यासस्य त्यागस्य च पृथक् असङ्कीर्णतया तत्त्वं निष्कृष्टस्वरूपं वेदितुं ज्ञातुमिच्छामि । किं संन्यासस्त्यागश्च एक एव ? उत भिन्नौ ? किं तर्हि तयोः स्वरूपमित्यादिकं ज्ञातुमिच्छामि । तदुपदिशेत्यर्थः ॥ १ ॥

**काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः ।**
**सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥ २ ॥**

एवं पृष्टो भगवानुवाच । काम्यानां स्वर्गादिफलकाग्निहोत्रादिकाम्य-

कर्मणां न्यासं त्यागमेव संन्यासं कवयः पण्डिता विदुर्जानन्ति । विचक्षणाश्च केचित्पण्डितास्सर्वकर्मफलत्यागं सर्वेषां कर्मणां फलत्यागमात्रमेव न तु कर्माणामेव परित्यजनं त्यागं प्राहुः । तथा च काम्यकर्मणां त्यागस्संन्यासः, तेषां फलत्यजनमेव त्याग इत्युभयोर्वैलक्षण्यमित्यर्थः ॥ २ ॥

**त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ।**
**यज्ञदानतपःकर्म न त्याज्यमिति चापरे ॥ ३ ॥**

एके मनीषिणः पण्डितास्तु दोषवत् बन्धरूपदोषापादकत्वात् कर्म कर्मसामान्यमपि त्याज्यमिति प्राहुः । अपरे च विद्वांसो यज्ञदानतपःकर्म यज्ञदानादिरूपं कर्म न त्याज्यं सर्वथा न त्यक्तुमर्हमिति प्राहुः । देशहितदृष्ट्या परशिवतुष्ट्यै सकलं कर्म आचरणीयमेव ॥ ३ ॥

**निश्चयं शृणु मे तत्र त्यागे भरतसत्तम ।**
**त्यागो हि पुरुषव्याघ्र त्रिविधः संप्रकीर्तितः ॥ ४ ॥**

एवं पण्डितानामेव परस्परमभिप्रायभेदे कस्तर्हि सिद्धान्तः ? इति शङ्कायां भगवानाह । हे भरतसत्तम अर्जुन ! तत्र उक्तविषये निश्चयं मे मत्सकाशात् शृणु । हे पुरुषव्याघ्र पुरुषश्रेष्ठ अर्जुन ! त्यागो हि त्रिविधस्त्रिप्रकारस्स्मृतः ॥ ४ ॥

**यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ।**
**यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥ ५ ॥**

के ते प्रकारा इत्यत्र सात्विकराजसतामसभेदेन त्रैविध्यं ' नियतस्य तु संन्यासः ' इत्यादिना वक्ष्यन् प्राक् सिद्धांतं तावदाह । यज्ञो दानं तप इत्यादिकं यत्कर्म तत् न त्याज्यमेव न त्यक्तुमर्हं ; किन्तु तत्कर्म कार्यमेव । कुत इति चेत् यज्ञो दानं तपश्चेति एतानि कर्माणि मनीषिणां मनुष्याणां पावनानि पवित्राणि सर्वपापहराणि । अतो न त्याज्यानि तानि ॥ ५ ॥

**एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ।**
**कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥ ६ ॥**

हे पार्थ अर्जुन! एतानि पूर्वोक्तानि कर्माणि सङ्गं तदीयासक्तिं फलानि तत्फलानि च त्यक्त्वा कर्तव्यान्येवेति मे मम निश्चितमुत्तमं मतं सिद्धांतः । एवं च सङ्गत्यागपूर्वकं कर्माचरणं आवश्यकमेवेति तेषां कर्मणां संपूर्णतस्त्यागो न युक्त एवेत्यर्थः ॥ ६ ॥

**नियतस्य तु संन्यासः कर्मणो नोपपद्यते ।**
**मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ॥ ७ ॥**

एवं फलत्यागमन्तरा स्वरूपत एव नियतस्य स्वस्ववर्णाश्रमधर्मत्वेन नित्यप्राप्तस्य कर्मणस्संन्यासस्त्यागो नोपपद्यते न युज्यत एव । अतो मोहाद-ज्ञानात् तस्य कर्मणः परित्यागस्तामसः परिकीर्तितः ॥ ७ ॥

**दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत् ।**
**स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥ ८ ॥**

दुःखं कर्तुं क्लेशो भवतीत्येव कारणात् कायक्लेशभयात् कायक्लेशो भवतीति भीत्या यः कर्म त्यजेत् स राजसं त्यागं कृत्वा त्यागफलं नैव लभेत् प्राप्नुयात् । आलस्यादिना कर्मत्यागो राजस इत्यर्थः ॥ ८ ॥

**कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन ।**
**सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्विको मतः ॥ ९ ॥**

अथ सात्विकं त्यागमुपादेयमाह । हे अर्जुन ! नियतं शास्त्रतः नियमप्राप्तं कार्यमित्येव 'मम कर्तव्यमिदं' इति भावनयैव केवलं, सङ्गं बन्धुमित्रादिमोहं त्यक्त्वा फलानि कर्मफलसंबन्धं परित्यज्य यत्कर्म क्रियते स त्यागस्सात्विको मतः । फलसङ्गत्याग एव सात्विकत्यागः । कर्मणां पूर्णत्यागस्तु तामसः । आलस्यादिना तत्त्यागस्तु राजस इति त्याग-त्रैविध्यमुक्तम् ॥ ९ ॥

**न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते ।**
**त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः ॥ १० ॥**

एतादृशसात्त्विकत्यागशीलं प्रशंसति । त्यागी उक्तसात्त्विकत्याग-शीलोऽत एव सत्त्वसमाविष्टस्सत्त्वगुणसंपन्नो मेधावी बुद्धिमान् छिन्नसंशयः कर्तव्यत्वांशे संशयरहहितः यः सः अकुशलं कर्मापि न द्वेष्टि कुशले कर्मण्यपि नानुषज्जते नासक्तो भवति । यतस्तस्य कुत्रापि सङ्गो न विद्यते, फलापेक्षापि नास्ति अतस्तस्य सर्वमपि कर्म एकरूपमेव भवेत् ॥ १० ॥

**न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ।**
**यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥ ११ ॥**

पूर्णत्याग एव त्यागशब्दार्थः कुतो न स्यादित्यत्राह । देहभृता प्राणिमात्रेण अशेषतः पुर्णतः कर्माणि त्यक्तुं न हि शक्यम् । अन्ततः शरीररक्षणार्थं भोजनादीनां वा कर्मणामनिवार्यतैवेति सर्वानुभवसम्मतम् । अतो यस्तु कर्मफलत्यागी न तु कर्मत्यागी स एव त्यागीत्यभिधीयते ॥

**अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।**
**भवत्यत्यागिनां प्रेत्य न संन्यासिनां क्वचित् ॥ १२ ॥**

एवं सङ्गफलत्याग एव त्यागशब्दार्थ इत्युक्त्वा एतादृशं त्यागम-कुर्वतां निन्दामप्याह । अत्यागिनां एवमुक्तत्यागमकुर्वतां तथैव कर्माण्या-चरतां नराणां कर्मणः फलभूतमनिष्टं इष्टं मिश्रं वा फलं प्रेत्य मरणानन्तरं भवत्येव । यतस्ते फलत्यागमकृतवन्तोऽतः फलं तैरवश्यमनुभवितव्यमेव । संन्यासिनां त्यागिनां तु क्वचिदपि एवं फलप्राप्तिर्न तु नैव संभवति । अतस्त्याग एव कर्तव्य इत्यर्थः ॥ १२ ॥

**पञ्चैतानि महाबाहो कारणानि निबोध मे ।**
**सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥ १३ ॥**

एवं कर्मणां पूर्णत्यागः न कर्तुं शक्य एवेति 'न हि देहभृता शक्य'-

मित्यादिना उक्तम् । तत्र कर्मणां कर्तृत्वस्वरूपमाह । हे महाबाहो ! इमानि वक्ष्यमाणानि सर्वकर्मणामपि सिद्धये कारणानि सांख्ये कृतांते सांख्य-सिद्धान्ते प्रोक्तानि मे मम सकाशात् निबोध जानीहि । 'अनुक्रमविरुद्ध-मन्यतो ग्राह्यं' इति न्यायेन सांख्यमते उक्तत्वेऽपि वेदान्तिनामस्माकमप्य-विरुद्धत्वात् तानि उपादेयान्येव । न तु वृथा द्वेषः कुत्रापि कर्तव्य इति सूचनाय 'सांख्ये कृतान्ते' इत्युक्तम् ॥ १३ ॥

**अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।**
**विविधाश्च पृथक्चेष्टाः दैवं चैवात्र पञ्चमम् ॥ १४ ॥**

कानि तानि पञ्चेत्यत्राह । अधिष्ठानं शरीरम् । शरीरं हि सर्वस्य व्यापारस्याधारभूतम् । तच्च पृथग्विधं नानाविधम् । इन्द्रियाणि हि एकादश । तथा पृथग्विधा विलक्षणा विविधाश्चेष्टाश्शरीरव्यापाराः । अत्रैवं कार्यनिर्वर्तने दैवं चैव पञ्चमं कारणमुच्यते ॥ १४ ॥

**शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः ।**
**न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥ १५ ॥**

नरो मनुष्यः शरीरवाङ्मनोभिः शरीरेण वाचा मनसा वा यत्कर्म न्याय्यं धर्मयुक्तं तद्विपरीतं वा अधर्मरूपं वा आरभते । सर्वविधस्यापि कर्म-णस्तस्यैते पञ्च मिळित्वैव हेतवः कारणभूतानि । न तु एषु एकमात्रं कारणं भवेत् ॥ १५ ॥

**तत्रैवं सति कर्तारमात्मानं केवलं तु यः ।**
**पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥ १६ ॥**

तथा कार्यनिर्वर्तनविषये एवं सति एवं रीत्या पञ्चभिर्निर्वर्त्यमाने कार्ये यः मूढः आत्मानं केवलं आत्मानमेव कर्तारं पश्यति जानाति सः दुर्मतिर्दुष्टबुद्धियुक्तः । अत एव न पश्यति ; तत्त्वं नैव जानाति । पञ्चभिः क्रियमाणे व्यापारे आत्मानमेव कर्तारं पश्येच्चेत् सः मूढ एवेत्यर्थः ॥ १६ ॥

**यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।**
**हत्वापि स इमाँल्लोकान्न हन्ति न निबध्यते ॥ १७ ॥**

विवेकिनः स्वरूपमाह । यस्य तु विवेकिनो भावः मनोभावः नाहंकृतः अहङ्कारयुक्तो न भवति, यस्य च बुद्धिः तेषु कर्मसु न लिप्यते अहमेव कर्म करोमीति न सक्ता भवति स इमान् सर्वान् लोकान् हत्वापि हननकर्ता भवेच्चेदपि तान् न हन्त्येव । अत एव न निबध्यते । तत्प्रयुक्त-बन्धपरवशो न भवति । केवलस्य आत्मनः कर्तृत्वाभावात् सः हनन-कर्तापि न भवति । अत एव तत्प्रयुक्तपापभागपि न भवतीत्यर्थः ॥ १७ ॥

**ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना ।**
**करणं कर्म कर्तेति त्रिविधः कर्मसंग्रहः ॥ १८ ॥**

कर्मसु मनुष्यस्य प्रवर्तककारणमाह । ज्ञानं, ज्ञेयं, परिज्ञाता ज्ञाता चेति कर्मचोदना कर्मविषयिणी चोदना प्रवृत्तिस्त्रिविधा त्रिप्रकारा । एतत् त्रितयं मिळित्वैव कर्मणां प्रवृत्तिर्भवति । एवं करणं कर्म कर्ता इत्यपि कर्म-संग्रहः कर्मणः संग्रहः क्रोडीकारस्त्रिविधः । एतेषु त्रितयेष्वेव कर्महेतुत्वं पर्याप्तमित्यर्थः ॥ १८ ॥

**ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः**
**प्रोच्यते गुणसंख्याने यथावच्छृणु तान्यपि ॥ १९ ॥**

एवमेतादृशेषु ज्ञानादिषु सात्विकादिभेदानाह । ज्ञानं, कर्म, कर्ता योऽयं निर्दिष्टः सः गुणसंख्याने सत्त्वादिगुणमूलकतया गणने कृते भेदतः सत्त्वादि-गुणत्रैविध्यात् त्रिधा प्रोच्यते । तान्यपि मया वक्ष्यमाणानि यथावत् शृणु ॥

**सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।**
**अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥ २० ॥**

प्रथमं सात्विकज्ञानमाह । विभक्तेषु अव्यक्तादिस्थावरान्तत्वेन विभक्तेषु सर्वभूतेषु सर्ववस्तुष्वपि येन ज्ञानेन विभागरहितं एकं भावं समताभावं

ईक्षते पश्यति जीवः तत् ज्ञानं सात्विकं विद्धि । एवं सर्वत्र समताभावना-हेतुभूतं ज्ञानं सात्विकमित्यर्थः ॥ २० ॥

**पृथक्त्वेन तु यज्ज्ञानं नानाभावान्पृथग्विधान् ।**
**वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥ २१ ॥**

यच्च ज्ञानं सर्वेषु भूतेषु सर्ववस्तुषु पृथग्विधान् परस्परविलक्षणान् नानाभावान् नानात्वानि । वैविध्यमित्यर्थः । पृथक्त्वेनैव यथावदेव पृथक्त्वेन वेत्ति तत् ज्ञानं राजसं विद्धि । यथा प्रतीयमानतयैव यत् ज्ञानं भवति तद्राजसमित्यर्थः ॥ २० ॥

**यत्तु कृत्स्नवदेकस्मिन्कार्ये सक्तमहैतुकम् ।**
**अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥ २२ ॥**

यत्तु ज्ञानं कृत्स्नवत् समस्तमप्येकस्मिन्नेव कार्ये सक्तं न त्वन्यं लेशतोऽपि स्पृशति तत्रैव परिसमाप्यते, अहेतुकं समीचीनकारणं विनैव यदृच्छया च जायते । अत एवाल्पमेकस्मिन्नेव परिसमाप्तत्वात् । अतत्त्वार्थवत् अनत्त्वार्थविषयकं च तत् ज्ञानं तामसमुदाहृतम् ॥ २२ ॥

**नियतं सङ्गरहितमरागद्वेषतः कृतम् ।**
**अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते ॥ २३ ॥**

अथ कर्मणः सात्त्विकादिभेदमाह । नियतं शास्त्रनियमप्राप्तं सङ्गरहितमासक्तिवर्जितं अफलप्रेप्सुना फलापेक्षारहितेन पुरुषेण अरागद्वेषतः रागद्वेषमन्तरा कृतं यत्कर्म तत् सात्विकमुच्यते ॥ २३ ॥

**यत्तत्कामेप्सुना कर्म साहंकारेण वा पुनः ।**
**क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥ २४ ॥**

यत्तु कर्म कामेप्सुना फलेच्छावता साहङ्कारेण वा अहङ्कारयुक्तेन

वा पुरुषेण बहुलायासं बहुविधक्लेशसहितं यत् कर्म क्रियते तत् कर्म राजसमुदाहृतम् ॥ २४ ॥

अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम् ।
मोहादारभ्यते कर्म यत्तत्तामसमुच्यते ॥ २५ ॥

अनुबन्धं पश्चाद्भावि अनर्थफलं क्षयं आत्मन एव नाशं हिंसां वा तेन जायमानां स्वपरपीडां, पौरुषं आत्मनः शक्तिं वा अनपेक्ष्य अचिन्तयित्वा मोहात् अज्ञानात् यत्कर्म आरभ्यते तत्कर्म तामसमुच्यते ॥ २५ ॥

मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः ।
सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्विक उच्यते ॥ २६ ॥

अथ कर्तुस्त्रैविध्यमाह । मुक्तसङ्गः कर्मसु स्वकर्तृत्वसङ्गरहितः । अनहंवादी अहंकाररहितो धृत्युत्साहसमन्वितो धृत्या धैर्येणोत्सहेन च युक्तः । एवमेव सिद्ध्यसिद्ध्योः फलसिद्धावसिद्धौ वा निर्विकारो विकाररहित एकरूपतया वर्तमानः कर्ता सात्विक उच्यते ॥ २६ ॥

रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ।
हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥ २७ ॥

रागी आसक्तिमान् कर्मफलप्रेप्सुः कर्मफलापेक्षावान् लुब्धो लौभ्ययुक्तः । हिंसात्मकः परपीडास्वभावः । अशुचिरशुद्धः । हर्षशोकान्वितः फलावाप्तौ हर्षेण, तदभावे शोकेन च युक्तः कर्ता राजसः परिकीर्तितः ॥

अयुक्तः प्राकृतः स्तब्धः शठो नैष्कृतिकोऽलसः ।
विषादी दीर्घसूत्री च कर्ता तामस उच्यते ॥ २८ ॥

अयुक्तः असमाहितः प्राकृतोऽसंस्कृतबुद्धिः स्तब्धोऽविनीतः, शठो मूर्खः, नैष्कृतिको मात्सर्यवान्, अलसः प्रयत्नशून्यो, विषादी सदा दुःखी, दीर्घसूत्री विलम्बेन कर्मकरश्च कर्ता तामस उच्यते ॥ २८ ॥

**बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु ।**
**प्रोच्यमानमशेषेण पृथक्त्वेन धनंजय ।। २९ ।।**

अथ बुद्धेर्धृतेश्च सात्विकादिभेदं प्रतिजानीते । हे धनञ्जय अर्जुन ! बुद्धेर्धृतेश्च गुणतः सत्वादिभ्यस्त्रिविधभेदं पृथक्त्वेन विलक्षणत्वेन अशेषेण कृत्स्नशो मया प्रोच्यमानं शृणु । अहं वदिष्यामि शृण्विति भगवानर्जुनं वदति ।।

**प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये ।**
**बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी ।।**

हे पार्थ अर्जुन ! प्रवृत्तिं बन्धहेतुभूतं प्रवृत्तिमार्गं निवृत्तिं मोक्षहेतुभूतं निवृत्तिमार्गं एवं कार्याकार्ये इदं कार्यं इदमकार्यमिति, एवं भयाभये इदं भयकारणं इदमभयकारणमिति, एवमेव सर्वस्यापि फलभूतं बन्धं मोक्षं च बन्धस्य मोक्षस्य च स्वरूपं या बुद्धिर्वेत्ति सा बुद्धिः सात्विकी मता ।।

**यया धर्ममधर्मं च कार्यं चाकार्यमेव च ।**
**अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी ।। ३१ ।।**

हे पार्थ अर्जुन ! धर्ममधर्मं कार्यमकार्यं ना अन्यद्वा उक्तं भयाभयादि च या बुद्धिरयथावत् प्रजानाति यथावत् न जानाति तेषां स्वरूपं यथा वर्तते तथा निष्कर्षेण न जानाति सा बुद्धिः राजसी ।। ६१ ।।

**अधर्मं धर्ममिति या मन्यते तमसावृता ।**
**सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ तामसी ।। ३२ ।।**

हे पार्थ ! या तु बुद्धिस्तमसा तमोगुणेन आवृता आच्छादिता अधर्मं धर्ममिति, अकार्यं कार्यमित्येवंरीत्या सर्वानप्यर्थान् विपरीततयैव जानाति सा बुद्धिस्तामसीति कथ्यते ।। ३२ ।।

**धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः ।**
**योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी ।। ३३ ।।**

धृतिभेदमाह । यया धृत्या मनःप्राणेन्द्रियक्रियास्सर्वाः मनसः प्राणस्य पञ्चविधस्य प्राणवायोः इन्द्रियाणां चक्षुरादीनां च सर्वाः क्रियाः तत्तद्व्यापारान् अव्यभिचारिण्या अविच्छिन्नया यया धृत्या योगेन योगबलेन धारयते व्यवस्थापयति सा धृतिः सात्विकी स्मृता ॥ ३३ ॥

**यया तु धर्मकामार्थान्धृत्या धारयतेऽर्जुन ।**
**प्रसङ्गेन फलाकांक्षी धृतिः सा पार्थ राजसी ॥ ३४ ॥**

हे पार्थ ! यया धृत्या धर्मकामार्थान् मोक्षव्यतिरिक्तपुरुषार्थान् प्रसङ्गेन तेष्वासक्त्या फलाकांक्षी सन् फलापेक्षाविशिष्टः सन् धारयते सा धृती राजसी स्मृता ॥ ३४ ॥

**यया स्वप्नं भयं शोकं विषादं मदमेव च ।**
**न विमुञ्चति दुर्मेधाः धृतिः सा पार्थ तामसी ॥ ३५ ॥**

दुर्मेधा, दुर्बुद्धिः पुरुषो यया धृत्या स्वप्नं निद्रां, भयं, भीतिं, शोकं मनसो विषादं, इतरेन्द्रियाणां मदमवलेपं च न विमुञ्चति तत्रैवासक्तो भवनि सा धृतिस्तामसी मता ॥ ३५ ॥

**सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ ।**
**अभ्यासाद्रमते यत्र दुःखान्तं च निगच्छति ॥ ३६ ॥**

अथ सुखभेदं प्रतिजानीते । हे भरतर्षभ अर्जुन ! इदानीं त्रिविधं सुखं मे मत्तः शृणु । यत्र यस्मिन् सुखे तदनुभवे अभ्यासात् अभ्यासवशात् रमते दुःखान्तं दुःखनाशं च निगच्छति मानवः तादृशं त्रिविधसुखस्वरूपं वक्ष्यामि शृणु ॥ ३६ ॥

**यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ।**
**तत्सुखं सात्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥ ३७ ॥**

अग्रे आरम्भे पुरतः विषमिव दुःखमिव भयात् , परिणामे अन्ते च

अमृतोपममममृततुल्यं स्यात्, आत्मबुद्धिप्रसादजं आत्मनो बुद्धेः प्रसादेन प्रसन्नतया जातन्तु यत्सुखं तत् सात्त्विकमभिधीयते ॥ ३७ ॥

**विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम् ।**
**परिणामे विषमिव तत्सुखं राजसं स्मृतम् ॥ ३८ ॥**

यत्सुखमग्रे पूर्वमारम्भे विषयेन्द्रियसंयोगात् शब्दादिविषयाणां श्रोत्रादीन्द्रियाणां च सम्बन्धात् जातममृतोपमममृतसदृशं, परिणामे च विषमिव दुःखमयमेव स्यात् तत्सुखमेव राजसं स्मृतम् ॥ ३८ ॥

**यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ।**
**निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥ ३९ ॥**

यत्तु सुखमग्रे आरम्भेऽनुबन्धे परिणामे च आत्मनो मोहजनकमेव निद्रालस्यप्रमादोत्थं निद्रया आलस्येन, प्रमादेन अनवधानतश्च जायमानमेव यत्सुखं तत्तामसमुदाहृतम् ॥ ३९ ॥

**न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।**
**सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात् त्रिभिर्गुणैः ॥ ४० ॥**

तथा च सत्त्वरजस्तमसां भेदानुक्त्वा तेषां व्याप्तिमाह । पृथिव्यां भूलोके, दिवि देवेषु द्युलोकगतेषु देवेषु वा यत्सत्त्वमेव प्राणिजातमस्ति तेष्वेकमपि एभिस्त्रिभिः प्रकृतिजैर्गुणैस्सत्त्वादिभिर्मुक्तं वर्जितमेव नास्ति । प्राणिजातस्य सर्वस्यापि त्रिगुणसंबन्ध अवर्जनीय इत्यर्थः ॥ ४० ॥

एवं संसारस्यास्य त्रिगुणव्याप्तत्वात् तदनुगुणवैलक्षण्यस्यावर्जनीयत्वेन, सर्वेषामेव प्राणिनां कर्तव्यादिकमपि नैकरूपं भवेत् । अतस्तत्तत्कर्तव्यमेव एकैकोऽपि ज्ञात्वा तदनुगुणतया वर्तयित्वा बन्धात् मुक्तो भवेत् । अतो मानुषेष्वपि तत्तत्सत्त्वादिगुणभेदेन ब्राह्मणादिवर्णाश्रमधर्मास्सृष्टिसहजसिद्धाः । तदनुरूपान् धर्मान् ज्ञात्वा अनुष्ठाय साधको मुक्तो भवेदित्येतदर्थमेव वर्णधर्मान् प्रतिजानीते—

**ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप ।**
**कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥ ४१ ॥**

हे परन्तप अर्जुन ! ब्राह्मणक्षत्रियविशां शूद्राणाम् । विशो वैश्याः । एषामेव चतुर्णां कर्माणि कर्तव्यानि स्वभावप्रभवैर्गुणैः सहजसिद्धैस्सत्त्वादिभिस्स्वयमेव प्रविभक्तानि असङ्कीर्णतया व्यवस्थापितानि सन्ति ॥ ४१ ॥

**शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।**
**ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥ ४२ ॥**

तत्र शमो मनोजयः । दमो बाह्येन्द्रियजयः । तपः प्रसिद्धम् । शौचमेव तु परिशुद्धिः । क्षान्तिस्सहना । आर्जवञ्च ऋजुत्वम् । ज्ञानं सात्विकं पूर्वमुक्तम् । विज्ञानं शास्त्राध्यनजन्यमनेकविधं ज्ञानम् । अस्तिक्यमेव श्रद्धा । इतीदमेव कर्म स्वभावजं सहजसिद्धमेव ब्रह्मकर्म ब्राह्मणकर्म प्रोक्तम् ॥

**शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।**
**दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥ ४३ ॥**

शौर्यं शूरभावः । तेजस्साहजिकः प्रभावः । धृतिर्धैर्यम् । दाक्ष्यमपि दक्षता । युद्धे रणरङ्गे अपलायपमराङ्मुखत्वम् । दानमीश्वरभावो नियन्त्रणमपि चेति इदमेव स्वभावजं क्षात्रकर्म क्षात्रियस्य कर्म प्रोक्तम् ॥ ४३ ॥

**कृषिगौरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम् ।**
**परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥ ४४ ॥**

कृषिर्व्यवसायः, गोरक्षणमेव पशुपालनं, वाणिज्यमेव व्यापारः स्वभावजं वैश्यकर्म वैश्यस्य कर्म प्रोक्तम् । शूद्रस्य परिचर्यात्मकमुक्तवर्णत्रयशुश्रूषारूपमेव कर्म स्वभावजमभिहितम् । एवमेव तत्तत्प्रकृतिभेदादेव ब्राह्मणादिविभागः, तत्प्रयुक्तः कर्मविभागश्चावर्जनीय इत्यर्थः ॥ ४४ ॥

**स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।**
**स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ॥ ४५ ॥**

अथ एवमुपदेशस्य फलं निर्दिशति । स्वे स्वे कर्मणि उक्ते स्वे स्वे कर्तव्ये अभिरत आभिमुख्येन आसक्तो नरस्संसिद्धिं मोक्षं लभते । स्वकर्मनिरतः स्वस्य वर्णाश्रमधर्मनिष्ठो नरः सिद्धिं शिवैक्यरूपमोक्षं जीवितकाल एव यथा येन प्रकारेण विन्दति प्राप्नोति तमेव प्रकारमद्य वक्ष्यामि शृणु ॥४५॥

**यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।**
**स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥ ४६ ॥**

भूतानां सर्वप्राणिनां यतो यस्मान्मूलात् प्रवृत्तिः, येन च वस्तुना परशिवाख्येन सर्वं जगत् ततं व्याप्तं तमेव परशिवं साधकः स्वकर्मणा स्वस्ववर्णधर्मानुष्ठानेन पूजयित्वा सिद्धिं विन्दति प्राप्नोति । तथा च वर्णाश्रमधर्मानुष्ठानमपि सर्वजगन्मूलभूतपरशिवार्चनरूपमेव । तथाच परशिवार्चनरूपेण स्वधर्मेण परशिवप्राप्तिरूपा मुक्तिर्भवत्येवेत्यत्र न संशयस्यावकाश इत्यर्थः ॥

**श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।**
**स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ ४७ ॥**

तस्मात् स्वनुष्ठितात् सम्यगनुष्ठितात् गुणयुक्तादपि परधर्मात् स्ववर्णाश्रमव्यतिरिक्तात् धर्मात् विगुणोऽपि किञ्चिद्गुणहीनोऽपि स्वधर्मः स्वस्ववर्णाश्रमधर्मत्वेन प्राप्तो धर्म एव श्रेयान् श्रेष्ठः । उपादेय इत्यर्थः । कुत इत्यत्राह स्वभावेत्यादि । सृष्टिसहजसिद्धस्वभावानुरूपं कर्म कुर्वन् पुरुषः किल्बिषं पापं नाप्नोति न कदापि प्राप्नोति ! परवर्णधर्मस्तु परत्वादेव आपाततः स्वहितत्वेन भासमानोऽपि स्वसहजसिद्धगुणाननुरूपत्वात् अपायकारी भवति ॥

**सहजं कर्म कौन्तेय सदोषमपि न त्यजेत् ।**
**सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः ॥ ४८ ॥**

एतदेव विवृणोति । हे कौन्तेय अर्जुन ! स्वस्वभावसिद्धं कर्म सदोषमपि किञ्चिद्विगुणत्वेन भासमानमपि न त्यजेन् तावता न परित्यजेत् । हि यस्मात्कारणात् सर्वारम्भास्सर्वविधव्यापारा अपि धूमेनाग्निरिव दोषेण किंचित्किंचिन्मलदोषेण आवृता युक्ता एव । सर्वस्य वस्तुनस्त्रिगुणमयत्वेन

सत्त्वरजस्तमसां त्रयाणामपि सत्त्वात् रजस्तमोभागकृततया सर्वत्रापि किंचित्किंचित् न्यूनता तु सृष्टिसहजैव । अतस्तावन्मात्रेण स्वधर्मं नरो न कदापि त्यजेदिति भावः । तत्र दृष्टान्तो धूमेनाग्निरिवेति । प्रकाशस्वरूपस्याप्यग्नेः धूमस्सहज एव गुणस्तमोऽधीनो दृश्यत एवेत्यर्थः ॥ ४८ ॥

**असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः ।**
**नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥ ४९ ॥**

अतस्स्वसहजं कर्म कुर्यादेवेत्याह । सर्वत्र सर्वेष्वपि विषयेषु असक्तबुद्धिरसक्ता अनासक्ता बुद्धिर्यस्य तादृक् सङ्गरहितः । जितात्मा जितान्तःकरणो विगतस्पृहः फलापेक्षारहितश्च सन् संन्यासेन उक्तरूपेण एतदध्यायारम्भोक्तेन फलत्यागरूपेण परमामुत्तमां नैष्कर्म्यसिद्धिं निष्कामकर्मयोगाख्यां सिद्धिमधिगच्छति प्राप्नोति । तथा च विगुणस्यापि स्वधर्मस्यापि फलापेक्षां विना करणे तत्त्वज्ञानसिद्धिर्भवत्येव । 'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते' इति न्यायात् शिवज्ञानोदयेन सर्वविधमलकर्महानिर्जायते ॥ ४९ ॥

**सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे ।**
**समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा ॥ ५० ॥**

एतादृशसिद्धेः फलमपि संक्षिप्याह । हे कौन्तेय ! ज्ञानस्य या परा निष्ठा काष्ठा तादृशीमेव सिद्धिं प्राप्तस्तु परंशिवब्रह्म यथाप्नोति तत्प्रकारमपि समासेनैव संक्षेपेणैव कथ्यमानं मे मत्तो निबोध शृणु ॥ ५० ॥

**बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च ।**
**शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥ ५१ ॥**
**विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।**
**ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥ ५२ ॥**
**अहंकारं बलं दर्पं कामं क्रोधं परिग्रहम् ।**
**विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ॥ ५३ ॥**

विशुद्धया दोषरहितया बुद्ध्या युक्तस्सहितो ह्यात्मानं मनस्तु धृत्या

दृढनिर्णयेन नियम्य दमनं कृत्वा शब्दादीन् ब्रह्मविषयान् युक्त्वा रागद्वेषादींश्च व्युदस्य निरस्य, विविक्तसेवी एकान्तप्रियो लघ्वाशी अल्पाहारवान् यतवाक्कायमानसो नियमितशरीरवाङ्मनाः सदा ध्यानयोगपरश्च परमात्मध्यानपरो वैराग्यं परमात्मातिरिक्तविषये रागाभावं समुपाश्रितस्सम्यगुपाश्रितः, अहङ्कारं, स्वसामर्थ्यं, दर्पमदकामक्रोधांश्च परिग्रहं बाह्योपकरणसंग्रहं च विमुच्य निर्ममो ममतारहितः, अत एव शान्तो मनुष्यो ब्रह्मभूयाय ब्रह्मभावाय कल्पते समर्थो भवति ; परशिवैक्यसुखमनुभवितुमर्हो भवति । तथा च ज्ञानस्य परा निष्ठा तु शिवैक्यानुभव एवेत्यर्थः ॥ ५१–५३ ॥

**ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।**
**समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥ ५४ ॥**

ब्रह्मभूतः एतादृशशिवसामरस्यमापन्नस्तु प्रसन्नात्मा प्रसन्नचित्तस्सन् न कांक्षति सुखदुःखादिकमेव न गणयति । एतादृशस्तु सः सर्वेषु भूतेषु समस्समताभाववान् परामेव मद्भक्तिं भक्तेः परां काष्ठां निष्कामरूपिणीं शिवैक्यरूपकैवल्यसाधिकां श्रेष्ठां भक्तिं लभते । इतरविधास्तु भक्तयः सोपानरूपा ह्यैहिकफलसाधिकाः । परा भक्तिस्तु मुक्तस्य चिदाकाशरूपभावलिङ्गसामरस्यसंपादिकेति विशेषः । इयमेव भक्तिः षट्स्थलोपासनमार्गे समुपयुज्यते । सा च श्रद्धानिष्ठावधानानुभवानन्दसमरसभेदेन षड्विधेति प्रागुक्तमेव । एते तु भक्तेरवस्थाविशेषाः मानवेषु भक्तिविकासं प्रकाशयन्ति । भक्तस्तु श्रद्धाभक्त्या आरभ्य निष्ठादिक्रमेण समरसभक्तेराचरणेन हृदयस्थे प्राणलिङ्गे शिरोविराजमाने भावलिङ्गे च ससरसतया विलीनो भुत्वा दग्धपट इव लोके निवसति । अस्मिन् विषयेऽधिकं शक्तिविशिष्टाद्वैतदर्शनस्योत्तरे भागेऽवलोकनीयम् ॥ ५४ ॥

**भक्त्या मामभिजानाति यावन्यश्चास्मि तत्त्वतः ।**
**ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥ ५५ ॥**

तादृश्या च परया भक्त्या अहं तत्त्वतो यावान् यावत्प्रमाणो, यश्च

यादृशश्चास्मि तादृशमेव मामभिजानाति सम्यक् जानाति भक्तः। तदनन्तरं मामेव तत्त्वतो ज्ञात्वा तत एव हेतोर्ममेव विशते प्रविशति। "भक्त्या त्वनन्यया शक्यः" इति पूर्वमेवोक्तम्, तथा च ज्ञाननिष्ठायाः पराकाष्ठा परशिवेन सहैकीभाव एवत्यर्थः॥ ५५॥

**सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः।**
**मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम्॥ ५६॥**

तथाच निष्कर्षतया सर्वमपि शास्त्रार्थमुपदिश्य उपसंहारं—'आहत्य एतावानेव सारांश' इति वक्तुमुपक्रमते। सदा सर्वकालेऽपि मद्व्यपाश्रयो मामेवाश्रित्य वर्तमानस्सन् सर्वकर्माण्यपि कुर्वाणस्सर्वोऽपि नरो मत्प्रसादात् मदनुग्रहादेव नित्यमव्ययं नाशरहितमेव पदममृतस्थानरूपं मोक्षमवाप्नोति॥

**चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः।**
**बुद्धियोगमुपाश्रित्य मच्चितः सततं भव॥ ५७॥**

अतस्त्वमपि सर्वकर्माणि त्वया क्रियमाणानि चेतसा मनसा मयि परमेश्वरे संन्यस्यार्पयित्वा मत्परो मदेकपर एतादृशमेव बुद्धियोगं ज्ञानयोग-मुपाश्रित्यावलम्ब्य मच्चित्तो मदेकपरचित्तस्सन् सततं सदा भव वर्तस्व॥

**मच्चितः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि।**
**अथ चेत्त्वमहंकारान्न श्रोष्यसि विनङ्क्ष्यसि॥ ५८॥**

एवमेव मच्चित्तस्त्वं मत्प्रसादादेव सर्वदुर्गाणि सर्वाण्यप्यनिष्टानि तरिष्यसि। अथ चेद्यदि च मयोक्तमिदमपि त्वमहङ्कारादहमपि सर्वज्ञ एवेति दुरहङ्कारात् न श्रोष्यसि तर्हि विनंक्ष्यसि नाशमवाप्स्यसि॥ ५८॥

**यदहंकारमाश्रित्य न योत्स्य इति मन्यसे।**
**मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति॥ ५९॥**

भगवत्सङ्कल्पाननुसरणात् न तवेष्टसिद्धिरित्याह। अहंकारमाश्रित्य 'न योत्स्ये' इति यच्च त्वं मन्यसे तदा एष ते व्यवसायो निश्चयः मिथ्यैव

भविष्यति । यतस्त्वां त्वत्प्रकृतिरेव नियोक्ष्यति कर्मानुष्ठानाय प्रेरयिष्यति । सर्वथा भवतो योद्धव्यतैव भविष्यतीत्यर्थः ।। ५९ ।।

**स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा ।**
**कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि तत् ।। ६० ।।**

एतदेवाह—हे कौन्तेय अर्जुन । स्वभावजेन स्वेन कर्मणा निबद्धस्त्वं मोहादज्ञानात् यत्कर्तुमिदानीं नेच्छसि तदेव त्वमवश एव गत्यन्तराभावेन प्रकृतिवशङ्गतस्सर्वमपि कर्म प्रकृते प्रसक्तमिदं युद्धमवश्यं करिष्यसि ।।

**ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।**
**भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ।। ६१ ।।**

कुत इत्यत्राह—हे अर्जुन ! सर्वभूतानामपि ईश्वरः परमात्मा यन्त्रारूढानीव यन्त्रनिबद्धानीव सर्वभूतान्यपि सर्वान् जीवान् मायया स्वाचिन्त्यमायाशक्त्या भ्रामयन् चालयन् हृद्देशे तिष्ठति । अतो न कोऽपि तमतिक्रम्य किञ्चिदपि कर्तुं शक्नोति । सर्वेऽपि व्यवहारास्तदिच्छानुरोधेनैव सहजतया प्रवर्तन्ते । तदानीं यस्सन्तोषेण सहकारहस्तो भवति स एव सुखं विन्दते । अत एवेश्वरेच्छा बलीयसी स्मृता ।। ६१ ।।

**तमेव शरणं गच्छ सर्वभावेन भारत ।**
**तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ।। ६२ ।।**

अतस्त्वमपि तमेव परमात्मानं शरणं गच्छेत्याह । हे भारत अर्जुन ! तमेव तव हृदये वर्तमानं तव प्रेरकं परमात्मानं सर्वभावेन सर्वात्मना न केवलं बाह्यदृष्ट्या परन्त्वात्मना च शरणं गच्छ । तत्प्रसादादेव त्वं परां शान्तिं शाश्वतं स्थानं च प्राप्स्यसि । शान्तेर्नान्या गतिस्तव वर्तत इत्यर्थः ।।

**इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया ।**
**विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ।। ६३**

ते तुभ्यं इत्येवंरीत्या गुह्याद्रहस्यादपि गुह्यतरं परमरहस्यं ज्ञानं मया " शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नं " इति भवता शरणकरणात् आख्यात-

मुपदिष्टम् । एतन्मदुक्तमशेषेण संपूर्णतो विमृश्य पर्यालोच्य यथेच्छसि यथा ते रोचते तथा त्वं कुरु ॥ ६३ ॥

**सर्वगुह्यतमं भूयः शृणु मे परमं वचः ।**
**इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ॥ ६४ ॥**

एवं वदन्नपि भगवान् कारुण्यात्पुनराह । सर्वगुह्यतमं सर्वेभ्योऽपि रहस्येभ्यः परमं रहस्यं गंभीरतमं मे वचो भूयः पुनरुच्यमानं शृणु । त्वं मे दृढमिष्टोऽसि मम अतीव प्रियोऽसि इति कारणात् ततस्ते हितं वक्ष्यामि । त्वयि तूष्णीं स्थितेऽपि मया तथा स्थातुं न शक्यते । अत एव पुनश्चोपदिशामि । सावधानेन मनसा शृणु ॥ ६४ ॥

**मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।**
**मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥ ६५ ॥**

किं तदित्यत्राह । त्वं सदा मन्मना भव । मदेकचित्तो भव । एवं मद्भक्तो भव । भीत्यादिनापि कंसादीनां तदेकचित्तत्वमासीत् । तन्निवारणयेदमुक्तम् । एवमेव मद्याजी मत्पूजनपरो भव । तथा मामेव परमात्मानं नमस्कुरु । एवं कुर्वन् त्वं मामेव परमात्मानमेष्यसि प्राप्स्यसि । इदं च सत्यम् । इति ते प्रतिजाने प्रतिज्ञां करोमि । त्वं च मे मम प्रियः । अतस्त्वत्समीपे न ह्यसत्यं वदेयमित्यर्थः ॥ ६५ ॥

**सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।**
**अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ ६६ ॥**

एवं मद्यजनाद्यशक्तौ त्वं सर्वधर्मान् भवतः कर्तव्यत्वेन प्राप्तान् सर्वानपि प्रकृतिधर्मान् त्यक्त्वा अनुष्ठातुमशक्तौ तद्वर्जयित्वा मामेकं सर्वलोकेश्वरं सर्वपापहरमद्वितीयममूर्तपरमेश्वरं शरणं व्रज रक्षकत्वेन शरणागतो भव । एवं कुर्वन्तं त्वा त्वां मदंशमहमेव सर्वेश्वरस्सर्वशक्तस्सर्वपापेभ्योऽशक्ततायाः स्वधर्मत्यागमूलकसर्वपापेभ्योऽपि मोक्षयिष्यामि मुक्तं करिष्यामि । अतः कर्तव्याकरणप्रयुक्ततया मा शुचश्शोकं मा कुरु । 'यज्ञो दानं तपश्चैव पावनानि

मनीषिणाम् ' ' स्वधर्मे निरतः सिद्धिं यथा विन्दति ' इत्यादिषु स्वस्वाधिकार-प्राप्तकर्मणामवश्यानुष्ठेयत्वमुक्तम् । परन्तु तत्करणाऽशक्तौ तादृक् पुरुषः परमात्मानमेव शरणं गच्छेत् । लोकेऽपि स्वरक्षणाऽशक्ताः पुरुषाः शक्त-पुरुषान्तरमाश्रित्य आत्मानं संरक्षन्ति । तद्वदेव स्वधर्माचरणादौ अशक्तस्य, आत्मनो रक्षणं चापेक्षमाणस्य पुरुषस्य भगवानेव रक्षको भवतीत्यर्थः । अयमेवार्थस्सर्वशास्त्रसारभूत इत्यन्ते उपदेशादवगम्यते । अनेनैव श्लोकेन गीताशास्त्रोपदेशः परिसमाप्यते भगवता ॥ ६६ ॥

**इदं ते नातपस्काय नाभक्ताय कदाचन ।**
**न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥ ६७ ॥**

एवं करुणयोपदिष्टमिदं शास्त्रमपात्रे नोपदेष्टव्यमिति कथयति । ते तुभ्यं प्रोक्तमिदं शास्त्रं अतपस्काय तपश्शक्तिरहिताय नराय न वाच्यम् । एवमभक्ताय मूर्तामूर्तस्वरूपिणि मयि भक्तिरहिताय तु कदाचन कदापि न वाच्यम् । एवमशुश्रूषवे श्रोतुमिच्छारहिताय आदरशून्याय न वाच्यम् । एवमेव यो मामभ्यसूयति मां सामान्यमानवबुद्ध्या दृष्ट्वा असूयादिकं करोति तस्मा अपि इदं न वाच्यम् ॥ ६७ ॥

**य इमं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।**
**भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥ ६८ ॥**

सत्पात्रे एतदुपदेष्टुः फलमाह । यो नरः इमं परमगुह्यं रहस्यतमं शास्त्रार्थं मद्भक्तेषु जनेष्वभिधास्यति वदिष्यति सः तावतैव मयि परां श्रेष्ठां भक्तिं कृत्वा तेन मामेव एष्यति प्राप्स्यति ; तदीयहृदये विराजमाने प्रकाशां-रूपे मय्येव विलीयते । अत्र न संशयः । अन्यस्मै एतत्कथितवानपि मयि दृढां भक्तिं तत्फलतया मां च प्राप्नुयात् ॥ ६८ ॥

**न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ।**
**भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥ ६९ ॥**

तस्मादिदं शास्त्रं सत्पात्रे दत्तवतः पुरुषादन्यः कश्चिन्मनुष्यो मनुष्येषु

मे प्रियकृदिष्टकृत् न च नैवास्ति । स एव मम प्रियकर्तेत्यर्थः । न तावन्मात्रमेव परन्तु आगमिन्यपि काले भुवि लोके तस्मात् उक्तान्मनुष्यादन्यो मे प्रियतरो न च भविता नैव भविष्यति ॥ ६९ ॥

**अध्येष्यते च य इमं धर्म्यं संवादमावयोः ।**
**ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥ ७० ॥**

धर्म्यं धर्मयुक्तमिममावयोस्संवादं परस्परसंभाषणरूपं गीताशास्त्रं योऽध्येष्यते तेन नरेण अहं तदीयज्ञानयज्ञेन इष्टः पूजितस्स्यां भवेयमिति मे मतिर्निश्चयः । 'श्रेयान् द्रव्यमयाद्यज्ञात् ज्ञानयज्ञः' इति पूर्वमेवोक्तम् ॥

**श्रद्धावाननसूयश्च शृणुयादपि यो नरः ।**
**सोऽपि मुक्तः शुभाँल्लोकान्प्राप्नुयात्पुण्यकर्मणाम् ॥ ७१ ॥**

अन्ततोऽध्ययनाऽकरणेऽपि स्वयमनध्ययनेऽपि अत्र श्रद्धावान् भक्तिमाननसूयश्च दोषाविष्करणबुद्धिरहितश्च य इदं शृणुयादपि सोऽपि मुक्तः पापेभ्यो विमुक्तः पुण्यकर्मणां सुकृतिनां शुभान् पुण्यान् लोकान् प्राप्नुयादेवेति निश्चयः ॥ ७१ ॥

**कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा ।**
**कच्चिदज्ञानसंमोहः प्रनष्टस्ते धनंजय ॥ ७२ ॥**

हे पार्थ धनञ्जय ! एतत् मदुपदिष्टं एकाग्रेण चेतसा त्वया कच्चित् श्रुतम् ? कच्चिदिति प्रश्ने । ते अज्ञानसंमोहोऽज्ञानमूलकः कृत्याकृत्यविवेकभ्रमः प्रणष्टः कच्चित् ? युद्धं कुर्यां वा ? इत्यादिसंशयस्तव गलितो वा ? ॥

**नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत ।**
**स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव ॥ ७३ ॥**

एवं भगवन्मुखादेव तत्त्वोपदेशश्रवणात् नष्टमोहोऽर्जुन उवाच । हे अच्युत कृष्ण ! मोहो मदीयो नष्टः । स्मृतिस्समीचीनार्थस्मरणं च त्वत्प्रसादात् त्वदनुग्रहात् लब्धा । इदानीं गतसन्देहस्सर्वसंशयरहित—

स्थितोऽस्मि। तव वचनमेवाहं त्वदधीनस्सन्तोषेण करिष्ये अनुतिष्ठामि न तु प्रज्ञावादान् वदेयम् ॥ ७३ ॥

इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ।
संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥ ७४ ॥

'धर्मक्षेत्रे किमकुर्वत—सञ्जय" इति पृष्टवते धृतराष्ट्राय तत्प्रवृत्तं उदान्तमनूद्य सञ्जय उपसंहरति। इत्येवंप्रकारं वासुदेवस्य पराशक्तिरूपस्य भगवतो महात्मनः पार्थस्यार्जुनस्य च इदमद्भुतं रोमहर्षणं संवादं अहमिदानीमश्रौषमिति स उवाच ॥ ७४ ॥

व्यासप्रसादाच्छ्रुतवानेतद्गुह्यमहं परम् ।
योगं योगेश्वरात्कृष्णात्साक्षात्कथयतः स्वयम् ॥ ७५ ॥

कथं भवता अत्रैव विद्यमानेन श्रुतमिदं गीताशास्त्रमित्यत्राह । अहं योगेश्वरात् सकलयोगानामपि परमप्राप्यात् कृष्णात् साक्षात् स्वयमेव कथयतः एतद्गुह्यं परं योगं व्यासप्रसादात् व्यासमहर्षेरनुग्रहेण श्रुतवानस्मीति सञ्जयोऽवदत् ॥ ७५ ॥

राजन्संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ।
केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥ ७६ ॥

हे राजन् धृतराष्ट्र! केशवार्जुनयोः कृष्णार्जुनयोरिममद्भुतं पुण्यं पुण्यकरं संवादं संस्मृत्य संस्मृत्य मुहुर्मुहुर्हृष्यामि । यदा यदा स्मरामि तदा तदा हर्षमग्नो भविष्यामीत्यर्थः ॥ ७६ ॥

तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ।
विस्मयो मे महान्राजन्हृष्यामि च पुनः पुनः ॥ ७७ ॥

विशिष्य च हे राजन् धृतराष्ट्र! तच्च अत्यद्भुतं हरेः श्रीकृष्णस्य रूपं विश्वरूपं अर्जुनाय प्रदर्शितं संस्मृत्य संस्मृत्य मे महान् विस्मय आश्चर्यं भवति । पुनः पुनरपि हृष्यामि च। मदीयहर्षस्य सीमैव नास्ति ॥ ७७ ॥

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ ७८ ॥

किं बहुनोक्तेन । यत्र यस्मिन्पक्षे योगेश्वरस्सकलयोगानामपि ईश्वरः परमप्राप्यः दयामयो भक्तानुग्रहपटुः श्रीकृष्णो वर्तते, यत्र च पक्षे पार्थोऽर्जुनो निर्मलो दीक्षाबद्धश्च साधको वर्तते तत्रैव पक्षे श्रीस्सर्वा संपत् ध्रुवा स्थिरा नीतिश्च वर्तेत इति मम मतिर्निश्चयः । मम ध्रुवा दृढा मतिर्निश्चय इति वाऽन्वयः । यस्मिन् परमेश्वरज्ञानेन सह तत्कृपाप्रसादसंपादिका क्रिया समुल्लसित विराजते तत्र न केवलमैहिकसौख्यं परन्तु आमुष्मिकमपि सौख्यमेकस्मिन्नेव समये समुन्मिषतः । एवमिहपरमसुखशान्तिसाधकं कायकमहत्त्वप्रतिपादकं भक्तिवर्धकं गीताशास्त्रं मानवैस्सर्वैरपि तेषां कल्याणाय सम्यग् विज्ञायत इति दृढं विश्वस्यात्र विरम्यते ॥ ७८ ॥

पितुर्निदेशेन मया प्रणीतं श्रीवीरशैवानुगुणं हि भाष्यम् ।
गीतार्थबोधाय महेश्वरार्चासंलग्नचित्तेभ्य इदं महद्भ्यः ॥

अष्टादशेऽब्दे गतिमभ्युपेयुषः पितुस्समाराधनकालनिर्मितम् ।
सदर्थकं भाष्यमदूषितात्मनः परत्र तुष्ट्यैभवतात्पितुर्नवम् ॥

इति भगवद्गीतावीरशैवभाष्ये अष्टादशोऽध्यायस्समाप्तः ॥

| पुटः | पङ्क्तिः | शुद्धः पाठः |
|---|---|---|
| भूमिका १ | ११ | अविशेषेण |
| २ | २०·४ | तदनुगुणा. सर्वेषा |
| ३ | ४·६ | तत्तद्गुणेन. गुणत्रयैव |
| ,, | ११-२३ | परिशील्य साधकेषु |
| ,, | ६-२६ | अद्यावधि केनापि |
| ,, | ७-१७ | वर्तते |
| आत्मनिवेदनम् | १५-५ | एवासीत्स |
| ,, | १५.२१ | परां काष्ठां |
| ,, | २२ | शरणाः । सर्वत्र |
| ,, | २४ | तदन्तःस्थित |
| १ | ६ | भसना |
| २ | १ | शंभुर्गुरु |
| ३ | ६ | निर्वर्तयदेव |
| ४ | ४ | सर्वेश्वरत्वं |
| | ५ | प्रदातृत्वं |
| ५ | १२ | भगवद्गीते |
| ,, | १४-१५ | त्याशयः प्रकटितः |
| ७ | २३ | परमात्मौपम्य |
| ,, | ३ | दर्शनस्यातीव सम्मतः |
| 8 | Read I st line at the end | |
| ९ | ७ | मेवाशय |
| १३ | २२ | भगवद्विहितया |
| १६ | ९ | तादृशास्तु |
| १७ | १ | स्पर्शमपि |

| पुटः | पङ्क्तिः | शुद्धः पाठः |
|---|---|---|
| १८ | ४ | समञ्जसमेव भाति |
| ,, | १६ | जीवेश्वर- |
| ,, | २३ | मिष्टलिङ्ग– |
| १९ | ६ | सर्वमतसम्मतं |
| २० | २५ | स्पष्टं |
| २२ | १७ | पञ्चभि |
| २३ | ५ | तदा |
| २४ | १९ | एवमनुबन्ध– |
| २६ | २ | द्वारा धृतराष्ट्र |
| २७ | २१–२२ | किञ्चिद्विशिष्टाः |
| २८ | २ | ते ब्रवीमि |
| ,, | ९ | मुसलादीनि |
| ,, | १२ | त्विदमेतेषां |
| २९ | ५ | प्रोत्साहयितुं |
| ,, | १८ | यथाशक्ति |
| ३० | १६ | हृदयानि |
| ३१ | २१ | वलोकनीयम् |
| ,, | २२ | तावदशक्ताः |
| ३२ | १३ | हृषीकेश |
| | २० | यावदेतान् |
| ३३ | १० | सह–कर्तुं |
| ,, | १२ | द्रोहबुद्धे– |
| ,, | २५ | तादृशः |
| ३४ | २२ | तैस्सह |

| | | | | | |
|---|---|---|---|---|---|
| ३५ | १८ | लब्धव्यं | ४८ | ११ | तमर्जुनं |
| ३६ | ८ | पूज्या–स्याशयः ॥ | | २३ | मरणरहितान् |
| ,, | १८ | धार्तराष्ट्रान्नः | ५० | ९ | मात्रास्पर्शास्तु |
| ३७ | १ | हन्मश्चेत् | ५२ | २३ | स्थित्वा |
| ३८ | २० | उत्साद्यन्ते | ५३ | २ | सम्यगुपयुज्यते |
| ३९ | १५ | नरकहेतुत्वं | ५५ | ७ | पञ्चतत्त्वानां |
| | १६ | कर्तॄणामपि | ,, | १८ | विमूढः |
| | २३ | वीर्यशौर्यादयः | ५६ | ५ | याचे ॥ इति । |
| | २४ | पोषणं | | ११ | प्रशंसन्ते |
| ४० | ६ | नाङ्गीकार्या | | २२ | वासांसि |
| ४४ | ८ | वर्णनीयमेव | ५७ | ४ | तादृशि |
| | १४ | मद्बधे | ५८ | ३ | देहो यदि |
| | २२ | दुपविष्टवान् । | ६० | १६ | कर्तव्यदृष्ट्या |
| ४२ | १६ | युक्तकार्या | | २१ | अव्यक्तत्वादिकमपि |
| | २१ | पालनीय एव । | ६१ | ४-११ | कथमेव. नश्वरमेव |
| ४३ | १६ | वैराग्यं | ६२ | ४ | तस्मात्कारणात् |
| ४५ | १५ | कुतो नोत्तरयेच्च | ६३ | ६ | एवेत्याशंकायां |
| | १६ | एषोक्तिः | | १८ | परिदेवना |
| | १७ | दारिद्र्यात् | ६४ | ५ | मित्यर्थः |
| | २३ | कार्पण्य | ,, | ७-१७ | सर्वस्य- चावेक्ष्य |
| ४६ | ५ | श्रेष्ठो | | २०-२३ | पलायितुं. प्रत्युत |
| | ११ | प्रपश्यामि | ६५ | ३ | त्पस्त्यभाव. न |
| | १७ | निश्चयो | | ८ | कर्तव्यदृष्टिः |
| | २१ | सङ्कोच | | ,, | अनयापि दिशा |
| ४७ | १४ | देयम् | | ९ | युद्धमा. भगवानर्जु |

| | | | | | |
|---|---|---|---|---|---|
| ६५ | ११ | यद्दच्छया. मपावृतम् | ७७ | १३ | भुनक्ति |
| | १४ | स्वर्गद्वार. स्थित | ७८ | २२ | संघट्टित |
| | ,, | धर्मयुद्धं | ८० | १० | यस्य |
| | १५-१६ | लभन्ते—क्षत्रिय | ८१ | २१ | कर्मवश |
| | १६ | करणे | ८२ | ७-९ | योगी. लौकिक |
| | १९ | करिष्यसि. स्वधर्मं | ,, | २१ | तिष्ठेयुः |
| | २१-२२ | अथ चैवं स्ववर्णधर्मं | ८३ | १५ | व्यवस्थितया |
| | २३ | कीर्ति—भ्रष्टत्वरूपं | ८४ | ४ | भोगैकसक्त |
| | ,, | पापं अवाप्स्यसि | ८६ | ९ | यस्मै कस्मै |
| ६६ | १ | कर्म परित्यजति | ८९ | १३-१५ | तस्यां तमसि. वस्तूनां |
| | २-३ | परमात्मा—अकृत | ९० | १४ | काम्यन्त |
| | ४-१४ | यावद्धि वित्तं. अकीर्ति | ९१ | १२ | नियोजयसि |
| ६७ | २२-३ | मरिष्याम्येवेति. उत्तिष्ठ | ९४ | १४-२२ | सर्वेऽपि. जनः |
| ६८ | २-६ | सङ्गमार्यः—सन्दर्भे | ९५ | १४-२३ | दृष्ट्या. यूयं |
| | २३-२४ | वाहं जातु—पीठिकां | ९७ | २० | स्वकीयोपास्य |
| ६९ | ३-११ | एषा प्रशंस्यते | ९८ | ४-२० | पापै ऋत्विक् त्रैविध्यं |
| ७० | ८-१२ | द्वैविध्यं. नाधिगत बुद्धयो | १०० | ७ | तत्तत्सदर्थ |
| ७१ | ५ | भोगैश्वर्य | १०४ | ३ | सक्ता |
| ,, | १४-२० | एतदपेक्षया बहुविध | १०५ | ११ | बसवार्यः |
| ७३ | २-७ | प्रवृत्तिर्वा. ब्राह्मणस्य: | १०६ | १-११ | कुर्वन्तो. मेवेत्थं |
| | २४ | सम्यक् | ,, | १७-५० | स्पर्शादिषु त्यक्त्वा |
| ७४ | ३-१६ | पृच्छन्तं कर्तव्यत्वादि | १०७ | ६-२१ | किन्त्व- विद्धयेन |
| ७५ | २ | ग्रहपात्राणि | १०८ | ११-२२ | दुष्प्रभावं. यावृतम् |
| | ४-२२ | अवश्य. नहि | १०९ | | सत्संसर्गे |
| ७६ | १०-२३ | क्रियमाणाः—सुसंकृतः | ११० | २० | प्रेम्णा |

| | | | | | |
|---|---|---|---|---|---|
| १११ | ८ | हे परन्तप! | १२९ | १९-२२ | शृणु. मुपसंहरति |
| ,, | १९ | ज्ञेयोऽनुष्ठेयश्चेत्यर्थः | १३१ | ९ | प्रशंसां |
| ११२ | १२ | उपदिष्टवान् | १३२ | | भगवानत्र |
| | १३ | संवन्धश्च | १३४ | ५-१९ | मानवः. मानवो |
| ११४ | ३ | रक्षणाय | १३५ | ८-९ | सेवां. सर्वामपि |
| ११५ | ५-१३ | महिम्ना. क्रोधा | १३७ | १-८ | संन्या–समर्था |
| | २१ | इतरान्साधका | ,, | २३ | प्रीत्यर्थमेव |
| ११७ | ६-१८ | सर्वेषामपि. स्यात् | १३८ | ७-२४ | एव. परमात्मानं |
| ११८ | ३ | एतत्त्रितय | १४० | २२ | केवलया |
| ,, | ९-१० | तम आदीनि | | | निर्विकारया |
| ,, | २२ | मप्याव. स्वीयकर्मसु | १४१ | १ | मोक्षः, इत्याह– |
| | २६ | दोषविदूरत्वं | १४२ | १ ३ | सृजति. कारणं |
| ११९ | १२-१७ | ह्यकार्यं. शिवार्थ | ,, | ७ | आत्मनः |
| १२१ | १० | ज्ञेयांशः | १४३ | ६ | हृदयङ्गमया |
| ,, | १२ | विवेचनमसन्दि | , | १४ २२ | तयोर्वै–च |
| ,, | १३ | कर्मणो–त्रोद्धव्यं | १४४ | १ | साधकेन. विमूढः |
| १२२ | ८ | मनसापि | ,, | ११ | ज्ञानाग्निः |
| १२३ | १३-१४ | त्यक्त्वा. प्रवृत्तो | १४५ | ५ १२ | दृष्ट्यैव. निर्लिप्त |
| ,, | १८-२१ | दुर्देशादि. कुत्राप्य | १४६ | २५ | अस्मान्न |
| १२४ | २-८ | पाण्डितस्य. कर्म | १४७ | २ | अभिषेकान्न |
| १२५ | ७ | कृत्वापि | ,. | २० २२ | त्मकस्य. सुखं |
| १२६ | ८-१० | करणं. ज्ञातव्यो | १४८ | १३ | मोक्षणात्पाक् |
| ,, | १६-२३ | यज्ञं. तदानीमेव | ,, | २४ | धारात्रणं |
| १२७ | १२ | सर्वाणीन्द्रियकर्माणि | १४९ | ११-१२ | स्वम्. सञ्ज्ञार्थं |
| १२८ | ४ | तथापरे | १५० | १६ | काम |

| | | | | | |
|---|---|---|---|---|---|
| १५१ | १७ | एतादृशी | | २६ | एकान्तमत्यन्त– |
| ,, | २२ | लोक्यैवं | १६७ | ८ | निरन्तरं |
| १५२ | ८-१२ | शान्ति. मात्मनः | | १७ | निवातस्थः |
| | १५-६ | स्वीयं दुःख– | १६८ | २० | प्राप्तव्यमन्यन्नास्ति |
| १५३ | १२ | क्रियामाचरन् | १७२ | ५ | पश्यामि । |
| १५४ | १-५ | सर्वेष्वपि भक्त्युपहृतं | १७८ | ६ | संशयस्य |
| | १४-१५ | ततश्च | १७८ | ११-१८ | अर्जुन. भूत्वा |
| १५५ | ४ | नासिकास्थेश्वरस्य | १७९ | २ | आमुष्मिके |
| | १४ | शरण इत्य | | ९ | योगिनामेव |
| | २० | तपसां. प्रसाद– | | ११ | संभवति । |
| | २१ | भोगादेव | १८२ | १ | योगोऽत्र |
| १५६ | ७ | प्राणवत्प्रियत्वात् | १८४ | १२ | भिन्नयोः योग |
| १५७ | २२ | अर्हति | | १३ | विवेकिभिः । |
| १५८ | ३-१२ | कर्तुमशक्यत्वात् यः | | २१ | अर्जुन ! |
| १६० | ४ | गुरुमल्लि | १८५ | ८ | सविज्ञानं |
| | ११ | तस्मिंस्तु कति– | १८८ | ११ | विवादार्थमत्र |
| | १३ | धैर्यं | १८९ | २ | तपस्विषु |
| | १६ | कूटस्थो | १९० | २ | मदनुग्रहं |
| | २०-२३ | दात्मकस्य. समलोक | १९२ | १४ | जानाति |
| १६३ | ६-१० | शिरोग्रीवं. भ्रूमध्ये | १९६ | ४ | “ सर्वो वै रुद्रः ” |
| | १३ | साधकस्तु | | ५–७ | रुद्रपदं. दुर्लभः |
| | १५-२३ | प्राणवायो ब्रह्म– | | १७ | साऽन्यं |
| १६४ | १७ | भविभिर्भाव्यते | १९७ | १२ | देवतायाः |
| | २० | फलमावेदयत्यत्र | १९८ | १९ | मदीयं |
| १६५ | ८-२१ | निर्दिष्टं दुःखमध्ये | | २४ | महाफलं |

| | | | | | |
|---|---|---|---|---|---|
| १९९ | ४-७ | मूढोऽयं. दितोऽहं | २२७ | १५-१९ | विश्वस्य. यस्य |
| २०० | ५.१३ | स्वदेहे. निर्दिशति | २२८ | ६ | अर्जुन ! |
| २०३ | ५ | नश्वरः | २२९ | ८ | मत्कारणादेव |
| २०४ | २३ | प्राप्स्यसि | २३० | ३-११ | संस्मृतिं परमा |
| २०५ | ९ | रूपमादित्यवर्णं | २३३ | ८ | भावेषु वस्तुषु |
| २०७ | १६ | दिवाकालस्थपरिमाणं | | ८ | ध्येयोऽसि ? |
| २१० | १५ | गत्या प्रयातः | २३४ | १९ | द्वादशादित्यानां |
| २११ | २१ | विप्रयोगात् | २३५ | ८ | मध्ये |
| २१३ | ४-५ | पवित्र. मव्ययम् | २३६ | २२ | वीक्षको |
| | २० | जगद्व्यापके | २३९ | २१ | अनुभूयते |
| २१५ | ९ | व्यापारस्सर्वो | २४० | २० | वास्ति तत्तत्सत्त्वं |
| ,, | २५ | र्वशात्. कर्मानुगुण | २४१ | २ | स्वत एव |
| २१६ | १५ | दाराशयं | २४४ | ३-६ | वानसि. स्वहृदय |
| २१७ | २३ | भावयन्तो | २४५ | २-२५ | जितनिद्र, पार्थाय |
| २१८ | १३-१५ | यतन्तः. युक्तास्सदा | २४८ | ३-५ | संघान् दिव्यान् |
| ,, | २४ | मिति,. अन्ये | २५४ | १५-२० | मुख्यान् गन्तुं |
| २१९ | १४-१५ | तदैव सन्तोषेण | २५६ | २० | प्रसभं |
| २२० | १ २१-१ | स्वरूपमेवेति. मां | २५८ | २१ | मनन्तमाद्यं आद्य |
| २२२ | २३ | परशिवः | २६० | ४ | पूर्वतनरूपं |
| २२३ | २-६ | विशेषः राधकाः | २६१ | ७-१९ | या भक्तिः सा· वर्जितः |
| ,, | ८-१३ | अविधि· स्थितऽमूर्त | ,, | २२-२३ | जानाति. ष्वपि |
| २२४ | २१-२२ | कौन्तेय. हविरा | १६२ | ३-४ | शिवराधन योगादिव |
| २२५ | २-१९ | सर्वार्पण वक्तव्यम् | २६३ | ७-८ | ध्रुवम्· बुद्धयः |
| २२६ | ६-११ | मे. प्रभावेन | २६५ | ४-७ | निवेशय. स्थिरम् |
| २२७ | ४ | मानवः | ,, | १५ | न रोचेत |

| | | | | | |
|---|---|---|---|---|---|
| २६६ | १८ | च्छान्ति | २७८ | १३ | मपि |
| २६७ | १९ | भक्तः | | २०-२४ | भर्तृ. स्रष्टृ |
| २६८ | ७-८ | परमा· त्मामेव | २७९ | ३-१३ | यज्ञयोति. ज्ञानं |
| २६९ | २-३ | गोः. मत्स्यस्य | | २५ | इदं |
| | १५ | तुल्यनिन्दास्तुतिः | २८० | २४ | सर्वदा |
| | १८ २४ | निवासस्तद्र. मणौ | २८१ | १ | प्रकृतिं |
| २७० | ५-९ | दायिकया. ध्यानेन | २८२ | २०-२३ | अपरे विली |
| | १५-१८ | देवस्यैव. विद्यत | २८३ | ९-१४ | प्रसाद· प्रपद्य |
| | २१ | प्रशंसयाऽध्युात्म– | | १५ | पर्यन्तं |
| | २३-२४ | मुपदेशं. रञ्जे | २८४ ५ | १-१७ | स्वार्थ–जीवः |
| २७१ | २-३ | गीता· स्याद्व | २८९ | २ | ऽमृतं |
| | ६-१३ | कथं युज्यत. स्वस्य | २९० | ११-१७ | क्षेत्री. प्रशंस्यते। |
| | १६-१७ | प्राक्तनो कुरुषे | २९३ | ७-२० | स्रोतस्स्व· अयमेव |
| | २१ | स्वतन्त्रताप्रवृत्तये | | २३ | शरीरी |
| | २३ | सर्वे | २९७ | ४ | इन्द्रियादीनि |
| २७२ | १-८ | विलसति, भक्तः | | ८-१८ | गन्धघ्राता, प्रवृत्ति |
| | ९-१५ | यामुना. सामरस्य– | २९८ | ५-११ | मोहः· नाममलान् |
| २७३ | १-५ | अर्जुन! सुखदुःख | | १३ | प्रलयं |
| | १५ | क्षेत्रक्षेत्रज्ञज्ञानमेव | ३०० | २.१२ | जीवो. त्रिगुणाति |
| २७४ | ७-२२ | प्रोक्तं. शौचं | | १३·२४ | त्रिगुणैः. तिक्रमणो |
| २७५ | १३ | पञ्चसु | ३०२ | १४ | यस्मात्कारणात् |
| २७६ | ९-१० | विशुद्धिः. त्वत्प्रीण | ३०३ | २-१५ | तैः. अधोभागे, |
| | १५ | परमेश्वर–प्रपञ्चे | ३०४ | ३ | तस्मिन्नंशे |
| | २५ | स्याप्युपलक्षणम् | ३०५ | १० | तदधीनो |
| २७७ | १० | परिणमते | | २४ | संशोभेत। |

| | | | | | |
|---|---|---|---|---|---|
| ३०७ | १८ | परित्यज्य | | २० | अदेशकाले |
| ३०९ | ५ | तिष्ठन्ति | ३२६ | ४ | तस्यैवार्थमाह |
| ३१० | १-२ | विशिष्टस्य. तत्स्वरूप | | १८ | शास्त्रक्रमसुद्दिश्य |
| ३११ | १५ | ध्ययनम् | ३३३ | १४ | अतत्त्वार्थविषयकं |
| | २० | इन्द्रियचापल्याभावः | ३३४ | १२ | सिद्ध्यसिद्ध्योः |
| ३१४ | २० | जम्भाहङ्कारदर्पयुक्ता | ३३५ | ५-१४ | कृत्स्नशो. वा अन्यद्वा |
| ३१५ | ६ | शतैर्बद्धा | ३३८ | १५-१६ | अपलायनमपरा |
| ३१७ | ८-११-६ | एतत्त्रय. चिज्ञासु– | ३४० | १-१७ | सत्त्वगुणस्य रजस्तमो |
| ३१९ | १४ | श्रद्धाभेदो | ,, | ८ | सङ्गरहितः । |
| ३२१ | १-९ | स्निग्धाः. तत्फलक | ३४६ | १९ | कुर्यां वा न वा |
| ३२२ | ३ | भगवदाराधन | ३४८ | ३ | योगेश्वरः |
| ३२३ | १० | संयमः । | ,, | ७-८ | समुल्लसिता. केवल |
| ३२४ | १-१३ | अध्रुवं. श्वेश्वरप्री– | ,, | १५ | तुष्ट्यै भवता |

## पण्डितानामभिप्रायाः

Prof. S. RAMACHANDRA RAO, M.A. Head of the Sanskrit Department
Manasagangotri, Mysore.

पण्डितवर्याः डा. टि. जि. सिद्धप्पाराध्यमहोदयाः स्वीयं भगवद्गीताभाष्यं वीरशैवमतपरतया विरचितवन्तोऽपि तस्य सर्वोपादेयत्वं भाष्ये तत्रतत्र समन्वयदृष्ट्या सम्यक् प्रतिपादयन्तीत्ययमंशो मेऽतीव रोचते । गीतोपदेशकं श्रीकृष्णं अमूर्तपरमात्मनो दिव्यमूर्तरूपं परिकल्प्य परमात्मनश्च मूर्तामूर्तावस्थयोरभेदं संसाध्य तदीय उपदेशो न केवलं वैष्णवानामेव परन्तु सर्वेषामपि साधकानां तत्रापि वीरशैवानामत्यन्योपादेय इत्यमुमंशं हृदयङ्गमया रीत्या निरूपयन्ति भाष्यकृतः । २५२ पुटे "विश्वव्याप्तिरूपं यौगिकार्थं बोधयद्विष्णुपदं यथा त्रिमूर्त्यन्तर्गते रक्षणाधिकारिणि अन्वेति तथा मुख्यवृत्त्या

सर्वाश्रयभूतेऽमूर्तपरमात्मन्यपि सहजतया अन्वेति ” इति वदन्तो भाष्य-कारा: १८८ पुटे “ लिङ्गं, शिव:, स्थलं, ब्रह्म, रुद्र:, विष्णुः इत्यादिनामभिर्व्य-वहार्यः परमात्मा सर्वस्यापि स्थलावकाशप्रदानेन स्वप्रभुत्वं सार्थकं कुर्वन् विराजते ” इति विष्णुमपि परमात्मस्थाने समलंकृत्य तदवतारभूतं श्रिकृष्णं परमात्मप्राणरूपिणीं पराशक्तिं भावयित्वा तदुपदेशस्य सर्वादरणीयत्वं सम्यक् निरूप्य जगते दिव्यमादर्शमार्गमाविष्कृतवन्त: । एवममूर्तपरमात्मनः त्रिमूर्तिभिस्सह सामरस्ये स्वाभाविकेऽपि “ यदि वैष्णवाः शैवाश्च मिथो भेदं परिकल्प्य स्वसहोदरवर्गे परमात्मदर्शनं विहाय द्वेषमात्सर्यादिकं प्रसारयेयु-स्तदा ते मृतप्राया एव भवेयुः । मानवाः परमात्मांशभूताः मिथो विवादार्थ-मत्र नागताः ; किन्तु परस्परप्रेमसौहार्दप्रसारार्थमेवेमं देहमधिगतवन्तः । ” इति भाष्यकृतामुक्तिरुदारा समुन्नता ललिता मधुरा च सती सर्वेषां साधकानामुद्धाराय प्रभवेदिति भावयामि ॥

तथैव परमात्मनो नित्याभियोगविवरणावसरे २२२ पुटे लिङ्गधारण-रूपो “ नित्याभियोग: वीरशैवैर्यद्यप्यक्षरशः अर्थशश्च पाल्यते । इतरेषां तु बहिर्धारणाभावेऽपि परमात्मनामस्मरणमेव नित्याभियोगं संपादयति । अत एव सर्वैरपि साधकैः सजीवविश्वासेन परमात्मस्मरणं सर्वदा कर्तव्यम् ” इति भगवदाशयं प्रकटयद्भिः डा. सिद्धप्पाराध्यविद्वन्मणिभिर्विरचितं भगवद्गीता-वीरशैवभाष्यं न केवलं वीरशैवानां परन्तु निर्मलहृदयानां सर्वेषामपि साधकानां अत्यन्तोपकारकमिति प्रमोदस्थानमेतत् ॥

इदं च पवित्रं भाष्यं श्रीजगद्गुरुमल्लिकार्जुनमुरुघराजेन्द्रमहास्वामिनः परमपवित्रे गीताजयंत्युत्सवसमये प्रकटयित्वा स्वीयं विद्वत्प्रोत्साहमादर्शया रीत्या प्रकटितवन्तः । एतस्यावलोकनेन साधकाः परस्परप्रेमसहकारदृष्ट्या विशालभावनया च परमात्मनिष्ठास्सन्त एव स्वीयव्यवहारान् निर्मत्सरया दृष्ट्या निर्वहन्तः सुखं निवसंत्विति दृढं विश्वसिमि.

S. RAMACHANDRA RAO

18-12-65

Dr. S. BHATTACHARYA, MA.Ph.D. Hindu Un ivercity
Professor of Sanskrit. Benares, 30-12-65

I have read with pleasure the gloss on the Bhagavad-gita by Dr. T. G. Siddhapparadhya of the post-graduate department of Sanskrit, University of Mysore. It is an interpretation of this most elusive text from the standpoint of Vira-saivism. In Sanskrit, lucid and free from verbasity, the author has handled the difficult text and has brought the basic tenets of a particular system to bear upon its exposition. In this, he may legitimately be described to have fulfilled a mission. The catholicity of Vira-Saivism has perfectly matched the universal teachings of the Gita.

I wish the work all success.

Sri V. T. TIRUNARAYANA IYENGAR, M.A. Mysore,
Retd. Professor of Sanskrit. 16-1-66.

वीरशैवपथानुयायिनां दार्शनिकानां परशिवविलक्षणे वासुदेवे परब्रह्मत्वानंगीकारात् श्रीकृष्णप्रोक्तायः भगवद्गीतायाः उपदेशो नातीवाभिरुचिरिव भाति । अथापि प्रस्थानत्रयान्तर्गतस्य भगवद्गीताख्यस्य स्मृतिरत्नस्योपदेशः सर्वादरणीयः, सनातनतत्त्वार्थप्रकाशकश्चेति सर्वैरंगीक्रियते । अनया दृष्ट्या वीरशैवमताविरोधेन कथं गीतातत्त्वार्थो विज्ञेय इति इमामपूर्वां सरणिं दर्शयितुं प्रवृत्ताः श्रीमन्तो डा. टि. जि. सिद्धप्पाराध्यविद्वांसः सर्वेषां दार्शनिकानां अभिनंद्याः । 'उपनिषदामुक्तिवत् गीतावचनान्यपि विश्वतोमुखानि । अतो वीरशैवतत्त्वानुरोधेन तानि व्याख्येयानि ।' इत्यभिलाषेण विरचितमिदं वीरशैवभाष्यं विदुषां विमर्शकानां च मुदे स्यादिति दृढं विश्वसिमि ॥

## कृतज्ञतासमर्पणम्

भाष्यावलोकनेन सन्तुष्य स्वाशयमभिव्यज्य प्रोत्साहितवद्भ्यः पण्डितवर्येभ्योऽत्यन्तं कृतज्ञोऽस्मि । तेष्वभिप्रायभेदस्य युक्तत्वात्सहजत्वाच्च मतस्थापनेत्यादिविवादविषयानुद्दिश्य तत्प्रकटितेष्वाशयेषु भारस्तेषामेवेति ज्ञात्वा विवेकिभिस्तत्राभिनिवेशो न कार्यः । तादृशोऽभिप्रायः वैयक्तिक इति सहृदयैरवगन्तव्यमिति सविनयं विज्ञापयामि ॥

मैसूरु, १६–१–६६ टि. जि. सिद्धप्पाराध्यः

## जगद्गुरुश्रीमुरुघराजेन्द्रविद्यापीठग्रन्थमालायां

### उभलभ्यमाना इतरग्रन्थाः



१. श्वेताश्वतरोपनिषद्वीरशैवभाष्यम्

२. शिवतत्त्वरत्नाकरः (कर्णाटकानुवादसहितः)

३. शरणगीता

४. अथर्वशिखोपनिषद्भाष्यम्

5. ಭಗವದ್ಗೀತಾವೀರಶೈವಭಾಷ್ಯಾನುವಾದ

6. ಕನ್ನಡ ರಸಗಂಗಾಧರ

7. ಕನ್ನಡ ಕ್ರಿಯಾಸಾರ

8. ಶಿವಗೀತಾಮಹತ್ತ್ವ

